नाम प्रकरणम् ।

शूद्रक नृपतिवरेण विरचितम् ।

वि, ए, उपाधिधारिणा
श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण
विरचितया टीकया समेतम् ।

तेनैव प्रकाशितम् ।

कलिकाता राजधान्याम् ।
सरस्वती यन्त्रे
मुद्रितम् ।

इं १८८१

# प्रथमोऽङ्कः ।

—•—

नान्दी (क) ।

पर्य्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानो-
रन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य ।
आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या
शम्भोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥१॥

(क) नन्दयतीति नान्दी शुभशंसनेन लोकानामानन्दजननात् । तदुक्तम् "आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥" इति । सा चात्र अष्टपदा, "पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरपि" इति वचनात् ।

(१) निर्विघ्नेन प्रारिप्सितपरिसमाप्तये शम्भुसमाधिवर्णनरूपमङ्गलमाचरति पर्य्यङ्केति । पर्य्यङ्कस्य आसनविशेषस्य ग्रन्थिः ग्रन्थनं रचनमित्यर्थः तस्य बन्धः तस्मै द्विगुणितः द्वाभ्यां गुणितः द्विरावृत्त इत्यर्थः यो भुजगः सर्पः तस्य आश्लेषेण वेष्टनेन संवीतौ संयतौ जानू यस्य तथोक्तस्य, अन्तः अभ्यन्तरे प्राणानां शरीरस्थवायूनाम् अवरोधेन निरोधेन व्युपरतं विशेषेण निवृत्तं सकलं ज्ञानं बाह्यवस्तुबोधः यस्य सः अत एव रुद्धानि विषयेभ्यः संयतानि इन्द्रियाणि येन तादृशस्य कुम्भकेन इन्द्रियनिग्रहेण च बाह्यज्ञानरहितस्य तत्त्वदृष्ट्या सम्यग्दर्शनेन ब्रह्मदर्शनेन वा "तत्त्वं ब्रह्मणि याथार्थ्ये" इत्यमरः, आत्मनि स्वस्मिन्

राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा
लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोऽग्निं प्रविष्टः ॥४

अपिच,

समरव्यसनी प्रमादशून्यः ककुदं वेदविदां तपोधनश्च।
परवारणबाहुयुद्धलुब्धः क्षितिपालः किल शूद्रको बभूव ॥५॥

(४) ऋग्वेदमिति। शूद्रकः ऋग्वेदं सामवेदं गणितमङ्गशास्त्रं कलां चतुःषष्टिप्रकारां नृत्यगीतादिरूपां कामविद्यां तथा वैशिकीं वैश्यजातिसम्बन्धिनीं हस्तिशिक्षां हस्तिपालनादिकौशलं ज्ञात्वा, शर्व-प्रसादात् शिवानुग्रहात् व्यपगततिमिरे व्यपगतं तिमिरम् अज्ञानरूप-मन्धकारं रोगविशेषो वा याभ्यां तादृशे चक्षुषी च उपलभ्य ज्ञानचक्षुषी रोगमुक्ते वा चक्षुषी प्राप्य इत्यर्थः, पुत्रं राजानं वीक्ष्य दृष्ट्वा पुत्रं राज्यस्थं कृत्वा इत्यर्थः, परमसमुदयेन परमः समुदयः समुन्नतिः यस्मात् अथवा परमः महान् समुदयः समुद्योगः यस्य किंवा समुदयः समृद्धिः यत्र तादृशेन अश्वमेधेन इष्ट्वा तथा दशदिनसहितं शताब्दं दशदिनाधिक-शतवत्सरपरिमितम् आयुः जीवनकालं लब्ध्वा तावत्कालं जीवित्वा इत्यर्थः अग्निं प्रविष्टः प्राणांस्तत्याजेत्यर्थः। स्रग्धरावृत्तम्।

(५) पुनश्च शूद्रकं विशेषयति समरव्यसनीति। यः शूद्रकः समर-व्यसनी युद्धासक्तः सततसंग्रामपटुः प्रमादशून्यः अवहितः अवधानवानि-त्यर्थः "प्रमादोऽनवधानता" इत्यमरः, वेदविदां ककुदं श्रेष्ठः "ककुदं श्रेष्ठ-मुख्ये" इत्यमरः, तपोधनः तपोनिष्ठः परवारणबाहुयुद्धलुब्धः परेषां वारणैः हस्तिभिः सह बाहुयुद्धे लुब्धः कृतबाहुयुद्ध इत्यर्थः परे शत्रव एव वारणाः तैः सह इति वार्थः अथवा परवारणौ शत्रु-जयिनौ यौ बाहू ताभ्यां युद्धे लुब्धः बाहुयुद्धप्रिय इत्यर्थः तथा क्षिति-पालः भूपतिश्च बभूव आसीत् किलेति प्रसिद्धौ।

अस्याञ्च तत्कृतौ,

अवन्तिपुर्य्यां द्विजसार्थवाहो युवा दरिद्रः किल चारुदत्तः ।
गुणानुरक्ता गणिका च यस्य वसन्तशोभेव वसन्तसेना ॥६॥

तयोरिदं सत्सुरतोत्सवाश्रयं, नयप्रचारं, व्यवहारदुष्टताम् ।
खलस्वभावं भवितव्यतां तथा चकार सर्वं किल शूद्रको नृपः ॥७

परिक्रम्यावलोक्य च । अये शून्येयमस्मत्सङ्गीतशाला । क्व नु गताः कुशीलवा (च) भविष्यन्ति ? विचिन्त्य । आं ज्ञातम् ।

(६) अवन्तिपुर्य्यामिति अवन्तिपुर्य्याम् उज्जयिन्यां द्विजसार्थवाहः द्विजेषु सार्थवाहः वाणिज्यव्यवसायी दरिद्रः निर्धनः चारुदत्त इति प्रसिद्धः युवा आसीदिति शेषः, वसन्तशोभा इव वासन्ती श्रीरिव वसन्तसेना नाम काचित् गणिका वेश्या "वारस्त्री गणिका वेश्या" इत्यमरः, यस्य चारुदत्तस्य गुणानुरक्ता गुणैः दयादाक्षिण्यादिभिः अनुरक्ता अनुरागिणी जातेति शेषः । उत्प्रेक्षालङ्कारः । उपेन्द्रवज्रावृत्तम् "उपेन्द्रवज्रा प्रथमे लघौ सा" इति लक्षणात् ।

(७) तयोरिति । इदं प्रकरणं तयोः चारुदत्तवसन्तसेनयोः सत्सुरतोत्सवाश्रयं सत् उत्तमः यः सुरतोत्सवः स एव आश्रयः अव-लम्बनं यस्य तत्, शूद्रको नृपः चकारेति पदमध्याहार्य्यं, नयप्रचारं नयस्य नीत्याः प्रचारं गतिं व्यवहारदुष्टतां दुष्टव्यवहारम् अथवा व्यवहारा अष्टादशविधानि विवादपदानि तेषां तेषु वा दुष्टतां, खल-स्वभावं दुर्जनचरित्रं तथा भवितव्यताम् अवश्यम्भाविनीं नियतिम् एतत् सर्वं चकार प्रणिनाय किलेति प्रसिद्धौ । वंशस्थविलं वृत्तं "वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ।

(च) कुशीलवाः नाट्यप्रयोक्तारः "नटाश्चारणाश्च कुशीलवाः" इत्यमरः ।

शून्यमपुत्रस्य गृहं, चिरशून्यं नास्ति यस्य सन्मित्रम्।
मूर्खस्य दिशः शून्याः, सर्व्वं शून्यं दरिद्रस्य॥ ८॥

कृतञ्च सङ्गीतकं मया। अनेन चिरसङ्गीतोपासनेन ग्रीष्मसमये प्रचण्डदिनकरकिरणोच्छुष्कपुष्करवीजमिव प्रचलिततारके चक्षुषी ममाक्षिणी खटखटायेते (झ)। तद् यावद् गृहिणीमाहूय पृच्छामि, अस्ति किञ्चित् प्रातराशो (ज) न

(८) शून्यमिति। अपुत्रस्य पुत्रहीनस्य गृहं शून्यं, यस्य सत् मित्रं नास्ति तस्य च गृहं चिरशून्यं चिराय शून्यं न कदापि सुख-करमित्यर्थः, मूर्खस्य दिशः सर्वा एवेति शेषः शून्याः यत्र यत्र स गच्छति तत्रैव विफलाशः प्रतिनिवर्त्तत इत्यर्थः। दरिद्रस्य निर्धनस्य सर्वं शून्यं न किमपि तस्यायत्तमिति भावः, मम तु निर्धनतया कुशी-लवानामनायत्ततया यथेच्छचारितेति सर्वं शून्यमित्यस्याभिप्रायः। आर्य्यावृत्तं "यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टा-दश द्वितीये पञ्चदश चतुर्थके साऽऽर्य्या॥" इति लक्षणात्।

(झ) चिरसङ्गीतोपासनेन चिरं सङ्गीतस्य उपासनेन सेवनेन तज्जनितपरिश्रमेणेत्यर्थः। प्रचण्डदिनकरकिरणोच्छुष्कपुष्करवीजमिव प्रचण्डाः तीक्ष्णा ये दिनकरकिरणाः सूर्य्यरश्मयः तैः उच्छुष्कम् उत्-कर्षेण शुष्कं पुष्करस्य वीजमिव प्रचलिते तारके ययोः तादृशे "तार-कास्याः कनीनिका" इत्यमरः, मम अक्षिणी क्षुधा बुभुक्षया खटखटायेते खटखटेति अव्यक्तशब्दं कुर्वीते क्षुधार्त्तस्य भोजनालाभे चक्षुषोः सरस-त्वापायात् शिथिलयोश्चञ्चलतारकत्वेन तादृशशब्दस्य सम्भावनादुत्प्रेक्षा-लङ्कारो ध्वन्यते, स पुष्करवीजमिवेति उपमानुप्राणिततया समधिकं हृदयग्राहीति बोध्यम्।

(ज) प्रातराशः प्रातः अश्यते इति प्रातराशः प्रातर्भोज्यः प्रातः-कालभोजनीय इत्यर्थः। किञ्चित् किमिति प्रश्नार्थमव्ययम्।

षेति। एषोऽस्मि, भोः कार्य्यवशात् प्रयोगवशाच्च (भ) प्राकृत-भाषी संवृत्तः। अविद् अविद् (ञ) भो! चिरसंगीदोबासणेण सुक्खपोक्खरणालाइं बिअ मे बुभुक्खाए मिलाणाइं अङ्गाइं, ता जाव गेहं गदुअ आणामि, अत्थि किंपि कुटुम्बिणीए उववादिदं (ट) ण वेत्ति। परिक्रम्यावलोक्य च। एदं तं अम्हाणं गेहं, ता पविसामि। प्रविश्यावलोक्य च। हीमाणहे! किं णु क्खु अम्हाणं गेहे अवरं बिअ संविहाणअं वट्टदि। आआमितण्डुलोदअप्पवाहा रच्छा, लोहकड़ाहपरिवत्तणकसणसारा किदविसेसआ बिअ जुअदी अहिअदरं सोहदि भूमी। सिणिद्धेण गन्धेण उद्दीवन्ती बिअ अहिअं बाधेदि मं बुभुक्खा। ता किं पुव्वविढत्तं णिहाणं उववसं भवे? आदु, अहं ज्जेव बुभुक्खादो ओदणमअं जीअलोअं पेक्खामि। णत्थि किल पादरासो अम्हाणं गेहे। पाणाच्चअं बाधेदि मं बुभुक्खा। इध सव्वं णवं बिअ संविहाणअं वट्टदि। एक्का वण्णअं पीसेदि, अवरा सुमणाइं गुम्फेदि।

(भ) कार्य्यवशात् प्रयोजनवशात् प्रयोजनस्तु स्त्रिया सह संलापः "स्त्रीषु नाप्राकृतं वदेत्" इति शास्त्रादिति भावः। एवमन्यत्रापि कार्य्य-वशात् भाषाव्यतिक्रमः उत्तरत्र बोध्यः "कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाव्यतिक्रमः" इति वचनात्। प्रयोगवशात् काठिन्यादिविरहेण सुखप्रयोगयोग्यत्वादित्यर्थः।

(ञ) अविदशब्दोऽत्र खेदद्योतकोऽव्ययः।

(ट) कुटुम्बिन्या गृहिण्या "दाराः स्यात् तु कुटुम्बिनी" इत्यमरः। उपपादितं प्रस्तुतम्।

विचिन्त्य । किं सेदं ? भोदु, कुटुम्बिणिं सद्दाविअ (ठ) परमत्थं जाणिस्सं । नेपथ्याभिमुखमवलोक्य । अज्जे ! इदो दाव (१) ।

---

(१) आर्य्ये इति (कष्टं कष्टम्) चिरसङ्गीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानान्यङ्गानि, तद् यावत् गृहं गत्वा जानामि, अस्ति किमपि कुटुम्बिन्या उपपादितं न वेति । इदं तदस्माकं गृहं, तद् प्रविशामि । आश्चर्य्यम् ! किं नु खलु अस्माकं गृहे अपरमिव संविधानकं वर्त्तते । आयामितण्डुलोदकप्रवाहा रथ्या, लौहकटाह-परिवर्त्तनकृष्णसारा कृतविशेषका इव युवती अधिकतरं शोभते भूमिः । स्निग्धेन गन्धेन उद्दीप्यमानेव अधिकं बाधते मां बुभुक्षा । तत् किं पूर्वविहितं निधानम् उपपन्नं भवेत् ? अथवा, अहमेव बुभुक्षितः ओदनमयं जीवलोकं प्रेक्षे । नास्ति किल प्रातराशोऽस्माकं गृहे । प्राणात्ययं बाधते मां बुभुक्षा । इह सर्वं नवमिव संविधानकं वर्त्तते । एका वर्णकं पिनष्टि, अपरा सुमनसो गुम्फति । किं नु इदम् ? भवतु, कुटुम्बिनीं शब्दाय्य परमार्थं ज्ञास्यामि । आर्य्ये ! इतस्तावत् ।

---

(ठ) हीमाणहे इति विस्मयद्योतकमव्ययम् । संविधानकं समुद्योगः आयोजनमित्यर्थः । आयामितण्डुलोदकप्रवाहा आयामिनः दीर्घाः तण्डुलोदकानां धौततण्डुलजलानां प्रवाहाः प्रसाराः यस्यां तादृशी । लौहकटाहपरिवर्त्तनकृष्णसारा लौहकटाहस्य परिवर्त्तनेन घर्षणेन कृष्णा सारा शबला च कृष्णवर्णमिश्रितेत्यर्थः । कृतविशेषका कृतं विशेषयति अन्येभ्यः पृथक् करोति शोभयतीति वा विशेषकं तिलकं यया तिलकालङ्कृतेत्यर्थः । पूर्वविहितं पूर्वैः पुरुषैः विहितं सञ्चितं निधानं निधीयते इति निधानं निधिः भूगर्भनिहितधनम् उपपन्नं लब्धं तथात्वे एतत्सर्वं सम्भव इति भावः । प्राणात्ययं प्राणानाम् अत्ययः नाशः यत्रेति क्रियाविशेषणम् । एका काचित् स्त्री । वर्णकं हरिद्रा-दिकम् । सुमनसः पुष्पाणि गुम्फति ग्रथ्नाति मालां रचयतीत्यर्थः । शब्दाय्य आहूय ।

नटी प्रविश्य । अज्ज ! इअम्हि (२) ।

सूत्र । अज्जे ! साअदं दे ? (३) ।

नटी । आणवेदु अज्जो, को णिओओ अणुचिट्ठीअदु त्ति (४) ।

सूत्र । अज्जे ! चिरसङ्गीदोवासणेण । इत्यादि पठित्वा । अत्थि किं पि अम्हाणं गेहे असिदव्वं (ड) ण वेत्ति ? (५) ।

नटी । अज्ज ! सव्वं अत्थि (६) ।

सूत्र । किं किं अत्थि ? (७) ।

नटी । तं जधा । गुड़ोदणं घिअं दहीं तण्डुलाइं, अज्जेण अत्तव्वं रसाअणं (ढ) सव्वं अत्थि त्ति । एव्वं दे देवा आसासेदु (८) ।

(२) आर्य्य ! इयमस्मि ।

(३) आर्य्ये ! स्वागतं ते ?

(४) आज्ञापयतु आर्य्यः, को नियोगोऽनुष्ठीयतामिति ।

(५) चिरसङ्गीतोपासनेन । अस्ति किमपि अस्माकं गेहे अशितव्यं न वेति ।

(६) आर्य्य ! सर्वमस्ति ।

(७) किं किमस्ति ?

(८) तद् यथा । गुड़ौदनं घृतं दधि तण्डुलाः, आर्य्येण अत्तव्यं रसायनं सर्वमस्तीति । एवं ते देवा आशंसन्तु ।

---

(ड) अशितव्यं खाद्यम् ।

(ढ) गुड़ौदनं गुड़मिश्रितमन्नं पायसं वा । रसायनं रसस्य अयनम् आश्रयभूतं सरसमित्यर्थः । अत्तव्यं भोक्तव्यम् ।

सूत्र। किं अम्हाण गेहे सव्वं अत्थि, आदु, परिहससि ? (९)

नटी। स्वगतम्। परिहसिस्सं दाव। प्रकाशम्। अज्ज ! अत्थि आवणे (१०)।

सूत्र। सक्रोधम्। आ: अणज्जे ! एव्वं दे आसा छिज्जिस्सदि, अभावं अ गमिस्ससि. जं दाणिं अहं वरण्डलम्बुओ विअ (ण) दूरं उक्खिविअ पाडिदो (११)।

नटी। मरिसेदु मरिसेदु अज्जो। परिहासो क्खु मए किदो (१२)।

सूत्र। ता किं उण इदं णवं विअ संविहाणअं वट्टदि ? एक्का वण्णअं पीसेदि, अवरा सुमणाओ गुम्फेदि, इअं अ पञ्चवण्णकुसुमोवहारसोहिदा भूमी (१३)।

(९) किमस्माकं गेहे सर्वमस्ति, अथवा परिहससि

(१०) परिहसिष्यामि तावत्। आर्य्य ! अस्त्यापणे।

(११) आ: अनार्य्ये ! एवं ते आशा छेत्स्यति, अभावञ्च गमिष्यसि, यदिदानीमहं वरण्डलम्बुक इव दूरमुत्क्षिप्य पातितः।

(१२) मृष्यतु मृष्यत्वार्य्यः। परिहासः खलु मया कृतः।

(१३) तत् किं पुनरिदं नवमिव संविधानकं वर्त्तते ? एका वर्णकं पिनष्टि, अपरा सुमनसो गुम्फति, इयञ्च पञ्चवर्णकुसुमोपहारशोभिता भूमिः।

(ण) आशा छेत्स्यति आशाभङ्गो भविष्यतीत्यर्थः। अभावं अट गमिष्यति प्राप्स्यति। वरण्डलम्बुक इव कान्दुकमिव।

नटी । अज्ज उववासो गहिदो (१४) ।

सूत्र । किं णामधेओ अअं उववासो ? (१५) ।

नटी । अहिरूववदी णाम (त) (१६) ।

सूत्र । अज्जे ! इहलोइओ, आदु पारलोइओ ? (१७) ।

नटी । अज्ज ! पारलोइओ (१८) ।

सूत्र । सरोषम् । पेक्खन्तु पेक्खन्तु अज्जमिस्सा । मम-केरकेण भत्तपरिव्वएण (थ) पारलोइओ भत्ता अस्सीअदि (१९) ।

नटी । अज्ज ! पसीद पसीद । तुमं ज्जेव मम जम्मन्तरे वि भत्ता भविस्ससि त्ति उववसिदम्हि (२०) ।

सूत्र । अध अअं उववासो केण उवदिट्ठो ? (२१) ।

(१४) अद्य उपवासो गृहीतः ।

(१५) किंनामधेयोऽयमुपवासः ?

(१६) अभिरूपपतिर्नाम ।

(१७) आर्ये ! इहलौकिकः, अथवा पारलौकिकः ?

(१८) आर्य ! पारलौकिकः ।

(१९) प्रेक्षन्तां प्रेक्षन्ताम् आर्यमिश्राः । मदीयेन भक्तपरिव्ययेन पारलौकिको भर्त्ता अन्विष्यते ।

(२०) आर्य ! प्रसीद प्रसीद । त्वमेव मम जन्मान्तरेऽपि भर्त्ता भविष्यसि इत्युपोषितास्मि ।

(२१) अथ अयमुपवासः केनोपदिष्टः ?

(त) अभिरूपपतिः अभिरूपः मनोहरः पतिः येन, उपवासस्य फलं मनोहरपतिलाभ इति भावः ।

(थ) भक्तपरिव्ययेन भक्तस्य अन्नस्य परिव्ययः वितरणं तेन ।

नेपथ्ये। भो! जं दाणिं पढमं ज्जेव पच्चादिट्ठोसि, ता को दाणिं दे णिब्बन्धो पदे पदे मं अणुसन्धिदुं (३२)(प)

सूत्र। पच्चादिट्ठोम्हि एदिणा। भोदु, अण्णं बम्हणं उवणिमन्तेमि (३३)। इति निष्क्रान्तः। आमुखम् (फ)।

प्रविश्य प्रावारहस्तो (ब) मैत्रेयः। अण्णं बम्हणं। इति पूर्वोक्तं पठित्वा। अधवा, मए मित्तेण परस्स आमन्तणआइं भक्खिदव्वाइं। हा अवत्थे! तुलीअसि। जो दाणिं अहं तत्तभवदो चारुदत्तस्स रिद्धीए अहोरत्तं पेरन्तसिद्धेहिं उग्गारसुरहिगन्धेहिं मोदकेहिं ज्जेव असिदो अब्भन्तरचदुस्सालअदुआए उवविट्ठो मल्लकसदपरिवुदो चित्तअरो विअ अङ्गुलीहिं छिविअ छिविअ अवणेमि। णअरचत्तरवुसहो विअ रोमन्थाअमाणो चिट्ठामि। सो दाणिं अहं तस्स दलिद्ददाए जहिं तहिं चरिअ गेहपारावदो विअ आवासणिमित्तं

(३२) भो! यदिदानीं प्रथममेव प्रत्यादिष्टोऽसि, तत् क इदानीं ते निर्बन्धः पदे पदे मामनुसन्धातुम्।

(३३) प्रत्यादिष्टोऽस्मि एतेन। भवतु, अन्यं ब्राह्मणमुपनिमन्त्रयामि।

(प) प्रत्यादिष्टः निराकृतः। निर्बन्धः अत्याग्रहः। पदे पदे पुनः पुनरित्यर्थः। अनुसन्धातुं निमन्त्रयितुमित्यर्थः।

(फ) आमुखं प्रस्तावना। तदुक्तं "नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत् तु विज्ञेयं नाम्ना प्रस्तावनापि च॥" इति।

(ब) प्रावारहस्तः करधृतोत्तरीयः "द्वौ प्रावारोत्तरासङ्गौ" इत्यमरः।

इधं आअच्छामि। एसो अ अज्जचारुदत्तस्स पिअवअस्सेण चुण्णवुड्ढेण जादीकुसुमवासिदो पावारओ अणुप्पेसिदो सिद्धीकिददेवकज्जस्स अज्जचारुदत्तस्स उवणेदव्वो त्ति। ता जाव अज्जचारुदत्तं पेक्खामि। परिक्रम्यावलोक्य च। एसो चारुदत्तो सिद्धीकिददेवकज्जो गिहदेवदाणं बलिं (भ) करेन्तो इदो ज्जेव आअच्छदि (३४)।

(३४) अथवा, मया मैत्रेयेण परस्य आमन्त्रणकानि भक्षितव्यानि। हा अवस्थे! तुलयसि। यः इदानीमहं तत्रभवतः चारुदत्तस्य ऋद्ध्या अहोरात्रं प्रयत्नसिद्धैः उद्गार-सुरभिगन्धिभिर्मोदकैरेवाशितः अभ्यन्तर-चतुःशालकद्वारे उपविष्टः मल्लकशतपरिवृतः चित्रकर इव अङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वा अपनयामि। नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि। स इदानीमहं तस्य दरिद्रतया यत्र तत्र चरित्वा गेहपारावत इवावास-निमित्तमत्रागच्छामि। एष च आर्यचारुदत्तस्य प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः सिद्धीकृतदेवकार्यस्य आर्य-चारुदत्तस्योपनेतव्य इति। तद् यावत् आर्यचारुदत्तं पश्यामि। एष चारुदत्तः सिद्धीकृतदेवकार्यः गृहदेवतानां बलिं कुर्वन्नित एवागच्छति।

(भ) आमन्त्रणकानि आमन्त्रणे निमन्त्रणे प्रस्तुतानि द्रव्याणि। ऋद्ध्या सम्पत्त्या। तुलयसि तुलं करोषि तुलवत् लघु करोषि मामिति शेषः। अशितः तृप्तः। मल्लकशतपरिवृतः मल्लकानां व्यञ्जनादिपात्राणां शतैः परिवृतः, पक्षान्तरे वर्णपात्रशतपरिवृतः। अपनयामि त्यजामि तत्पात्रमिति शेषः। नगरचत्वरवृषभः नगराङ्गनवृष इव रोमन्थायमानः उद्गीर्य चर्वणशीलः। गेहपारावत इव गृहकपोत इव आवासनिमित्तं शयननिमित्तम् इह चारुदत्तगृहे इत्यर्थः। जातीकुसुमवासितः जातीकुसुमैः वासितः सुरभीकृतः। सिद्धीकृतदेवकार्यस्य सम्पादितदेवकार्यस्य। उपनेतव्यः दातव्यः। बलिं पूजां "बलिः पूजोपहारयोः" इत्यमरः।

दारिद्र्यान्मरणाद् वा मरणं मम रोचते न दारिद्र्यम्।
अल्पक्लेशं मरणं, दारिद्र्यमनन्तकं दुःखम्॥ ११॥

विदू। भो वअस्स! अलं सन्तप्पिदेण। पणइअणसंकामिदविहवस्स सुरअणपीदसेसस्स विअ पडिवअचंदस्स परिक्खओ वि दे अहिअदरं रमणीओ (३८)।

चारु। वयस्य! न ममार्थान् प्रति दैन्यम्। पश्य,

एतत् तु मां दहति, यद् गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम्॥ १२॥

विदू। भो वअस्स! एदे क्खु दासीए पुत्ता अत्थकल्ल-

(३८) भो वयस्य! अलं सन्तापितेन। प्रणयिजन-संक्रामित-विभवस्य सुरजनपीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि ते अधिकतरं रमणीयः।

(११) दारिद्र्यादिति। दारिद्र्यात् वा मरणात् तयोर्मध्ये इत्यर्थः मम मरणं रोचते दारिद्र्यं न। यतः मरणम् अल्पक्लेशम् अल्पः मरणात् न्यूनः क्लेशः यत्र तत्, दारिद्र्यन्तु अनन्तकम् अन्तरहितं दुःखम्। आर्य्यावृत्तम्।

(१२) एतदिति। भ्रमन्तः मधुकराः कालात्यये मदक्षरणसमयावसाने संशुष्काः सान्द्राः निविडाः मदलेखाः मदक्षरणरेखाः यस्मिन् तं करिणः हस्तिनः कपोलं गण्डमिव अतिथयः क्षीणार्थं धनहीनमिति हेतोः, अस्मदीयं गृहं परिवर्जयन्ति परित्यजन्तीति यत् एतत् तु अतिथिवर्जनं मां दहति। वसन्ततिलकं वृत्तम्।

वत्ता वरड़ाभीदा विअ गोवालदारआ अरखे जहिं जहिं ण खज्जन्ति (म) तहिं तहिं गच्छ'ंति (४०)।

चारु। वयस्य!

सत्यं न मे विभवनाशकृतास्ति चिन्ता,
भाग्यक्रमेण हि धनानि भवन्ति यान्ति।
एतत् तु मां दहति, नष्टधनाश्रयस्य,
यत् सौहृदादपि जनाः शिथिलीभवन्ति ॥१२॥

अपिच,

(४०) एते खलु दास्याः पुत्रा अर्थकल्यवर्त्ता वरटाभीता इव गोपालदारका अरण्ये यत्र यत्र न खाद्यन्ते तत्र तत्र गच्छन्ति।

(म) दास्याः पुत्राः अर्थकल्यवर्त्ताः अर्थरूपाः कल्यवर्त्ताः कल्ये-प्रत्यूषे वर्त्तन्ते इति कल्यवर्त्ताः प्रातस्स्थायिनः अर्थी इत्यर्थः दास्याः पुत्रा इत्यनेन चैषाम् अतिहेयता सूचिता। वरटाभीताः वरटाभ्यः दंशनकारिपतङ्गविशेषेभ्यः भीताः "गन्धोली वरटा द्वयोः" इत्यमरः। खाद्यन्ते भुज्यन्ते अन्यत्र दश्यन्ते। कृपणानामेव धनवत्त्वमिति भावः।

(१२) सत्यमिति। मे मम विभवनाशकृता धनक्षयजनिता चिन्ता न अस्ति न विद्यते सत्यं, हि यतः धनानि भाग्यक्रमेण भवन्ति यान्ति च। किं तर्हीत्याह, जनाः नष्टधनाश्रयस्य नष्टः धनरूपः आश्रयः यस्य तादृशस्य क्षीणधनस्य इत्यर्थः सौहृदात् बन्धुभावादपि शिथिली-भवन्ति बन्धुभावमपि परित्यजन्तीति यत् एतत्तु मां दहति। वसन्त-तिलकं वृत्तम्।

दारिद्र्याद्ध्रियमेति, ह्रीपरिगतः प्रभ्रश्यते तेजसो,
निस्तेजाः परिभूयते, परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति, शोकपिहितो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेत्यहो निधनता सर्व्वापदामास्पदम् ॥१४॥

विदू । भो वअस्स ! तं ज्जेव अत्थकल्लवत्तं सुमरिअ अलं सन्तप्पिदेण (४१) ।

चारु । वयस्य ! दारिद्र्यं हि पुरुषस्य,
निवासश्चिन्तायाः, परपरिभवो, वैरमपरं,
जुगुप्सा मित्राणां, स्वजनजनविद्वेषकरणम् ।
वनं गन्तुं बुद्धिर्भवति च कलत्रात् परिभवो,
हृदिस्थः शोकाग्निर्न च दहति सन्तापयति च ॥१५॥

---

(४१) भो वयस्य ! तमेव अर्थकल्यवर्त्तं स्मृत्वा अलं सन्तापितेन ।

---

(१४) दारिद्र्यादिति । दारिद्र्यात् निर्धनत्वात् ह्रियं लज्जाम् एति प्राप्नोति लोक इति शेषः, ह्रीपरिगतः लज्जितः जनः तेजसः प्रभ्रश्यते प्रच्युतो भवति, निस्तेजाः तेजोरहितः परिभूयते तिरस्क्रियते लोकैरिति शेषः,परिभवात् अवमानात् निर्वेदं वैराग्यम् आपद्यते प्राप्नोति, निर्विण्णः निर्वेदयुक्तः शुचं शोकम् एति, शोकपिहितः शोकाक्रान्तः बुद्ध्या परित्यज्यते विहीयते, निर्बुद्धिः क्षयं नाशम् एति गच्छति, इति हेतोः अहो इति आश्चर्यद्योतकमव्ययं निर्धनता दारिद्र्यं सर्वापदां सर्वासाम् आपदाम् आस्पदं स्थानं दारिद्र्यात् सर्वा एवापदो भवन्तीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ।

(१५) निवास इति । चिन्तायाः निवासः आश्रयः, परेषां परिभवः तिरस्कारस्थानम्, अपरम् अन्यत् वैरं शत्रुभावः, मित्राणां बन्धूनां

तद् वयस्य ! कृतो मया गृहदेवताभ्यो बलिः । गच्छ त्वमपि चतुष्पथे मातृभ्यो बलिमुपहर (य) ।

विदू । ण गमिस्सं (४२) ।

चारु । किमर्थम् ?

विदू । जदो एव्वं पूइज्जन्ता वि देवदा ण दे पसीदन्ति । ता को गुणो देवेसु अच्चिदेसु ? (४३) ।

चारु । वयस्य ! मा मैवम् । गृहस्थस्य नित्योऽयं (र) विधिः ।

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ॥ १६ ॥

(४२) न गमिष्यामि ।

(४३) यत एवं पूज्यमाना अपि देवता न ते प्रसीदन्ति । तत् को गुणो देवेष्वर्चितेषु ?

---

जुगुप्सा घृणास्थानमित्यर्थः, तथा स्वजनानाम् आत्मीयजनानां जनानां साधारणानाञ्च विद्वेषकरणं विद्वेषहेतुः । दरिद्रस्य वनं गन्तुं बुद्धिर्भवति, कलत्रात् भार्य्याया अपि परिभवः तिरस्कारः भवति, किं बहुना, हृदिस्थः हृदयवर्त्ती शोकाग्निः न दहति, किन्तु सन्तापयति दरिद्रमिति शेषः । शिखरिणी वृत्तम् ।

(य) गृहदेवताभ्यः गृहाधिष्ठातृभ्यः देवेभ्यः । बलिः पूजा । मातृभ्यः ब्राह्मीत्यादिदेवताभ्यः । उपहर प्रदेहि ।

(र) नित्यः अवश्यकर्त्तव्यः यदकरणे प्रत्यवायोऽस्ति स नित्य इत्यर्थः ।

(१६) शमिनां शान्तात्मनाम् । विचारितैः किं नाम विचारः कर्त्तव्य इत्यर्थः ।

तद्गच्छ, मातृभ्यो बलिमुपहर।

विदू। भो! ण गमिस्सं। अण्णो कोवि पउञ्जीअदु। मम उण बम्हणस्स सव्वं ज्जेव विपरीदं परिणमदि, आदंसगदा विअ छाआ वामादो दक्खिणा दक्खिणादो वामा। अण्णं अ, एदाए पदोसवेलाए इध राअमग्गे गणिआ विड़ा चेड़ा राअवल्लहा अ पुरिसा सञ्चरन्ति। ता मण्डूअलुद्धस्स विअ कालसप्पस्स मूषिओ विअ अहिमुहावडिदो बज्झो दाणिं भविस्सं। तुमं इध उवविट्ठो किं करिस्ससि? (४४)।

चारु। भवतु, तिष्ठ तावदहं समाधिं निर्वर्त्तयामि।

नेपथ्ये। तिष्ठ वसन्तसेने! तिष्ठ।

ततः प्रविशति विटशकारचेटैरनुगम्यमाना (ल) वसन्तसेना।

(४४) भो! न गमिष्यामि। अन्यः कोऽपि प्रयुज्यताम्। मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमति, आदर्शगता इव छाया वामतो दक्षिणा दक्षिणतो वामा। अन्यच्च, एतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटाश्च राजवल्लभाः पुरुषाः सञ्चरन्ति। तस्मात् मण्डूकलुब्धस्येव कालसर्पस्य मूषिक इव अभिमुखापतितो वध्य इदानीं भविष्यामि। त्वमिह उपविष्टः किं करिष्यसि?

(ल) विटः सुचतुरः भद्रवंशीयः लम्पटः। तथाचोक्तं "सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः। वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥" इति। चेटः हीनजातीयः दासः। शकारः "मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः। सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः॥" इत्युक्तलक्षणः।

विटः। वसन्तसेने! तिष्ठ तिष्ठ।

किं त्वं भयेन परिवर्त्तितसौकुमार्य्या,
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती।
उद्विग्नचञ्चल-कटाक्षविसृष्टदृष्टि-
र्व्याधानुसारचकिता हरिणीव यासि॥ १७॥

शकारः। चिष्ठ वशन्तशेणिए! चिष्ठ (४५)।

किं याशि, धावशि, पलाअशि, पक्खलन्ती,
वाशू! पशीद ण मलीश्शिशि, चिष्ठ दाव।
कामेण दज्झदि हु मे हडके तवश्शी,
अङ्गाललाशिपडिदे विअ मंशखण्डे (४६)॥ १८॥

---

(४५) तिष्ठ वसन्तसेनिके! तिष्ठ।

(४६) किं यासि, धावसि, पलायसे, प्रस्खलन्ती,
वासु! प्रसीद न मरिष्यसि, तिष्ठ तावत्।
कामेन दह्यते खलु मे हृदयं तपस्वि,
अङ्गारराशिपतितमिव मांसखण्डम्॥

(१७) किमिति। त्वं भयेन परिवर्त्तितं परित्यक्तं सौकुमार्य्यं गतिमार्दवं मन्दगमनमिति यावत् यया सा, नृत्यप्रयोगे नर्त्तनक्रियायां विशदौ निर्मलौ निर्दोषौ इत्यर्थः निर्दोषनर्त्तनक्रियाचतुरौ इति यावत् चरणौ क्षिपन्ती द्रुतं विन्यस्यन्ती, तथा उद्विग्नाः अत एव चञ्चलाः कटाक्षाः यस्मिन् तत् यथा तथा विसृष्टा दत्ता दृष्टिर्यया तादृशी सती, व्याधानुसारचकिता व्याधस्य अनुसारः पश्चात् धावनं तेन चकिता भीता हरिणीव किं कथं यासि गच्छसि? वसन्ततिलकं वृत्तम्।

(१८) किं यासीति। प्रस्खलन्ती वस्त्वरभग्नौ पदविक्षेपणादिति भावः। वासु बाले "बाला स्याद् वासुः" इत्यमरः। यासि,धावसि,पलायसे

चेटः । अज्जुए ! चिट्ठ चिट्ठ (४७) ।

उत्तासिता गच्छसि अत्तिका मे
संपुस्सपुच्छा विअ गिम्हमोरी ।
ओवग्गदी शामिअ भट्टके मे
वणे गडे कुक्कुडशावके व्व (४८) ॥ १९ ॥

विटः । वसन्तसेने ! तिष्ठ तिष्ठ ।

किं यासि बालकदलीव विकम्पमाना,
रक्तांशुकं पवनलोलदशं वहन्ती ।
रक्तोत्पलप्रकरकुड्मलमुत्सृजन्ती,
टङ्कैर्मनःशिलगुहेव विदार्यमाणा ॥ २० ॥

---

(४७) आर्यिके ! तिष्ठ तिष्ठ ।

(४८) उत्त्रासिता गच्छसि अन्तिका मे
संपूर्णपुच्छेव ग्रीष्ममयूरी ।
अववल्गति स्वामी भट्टारको मम
वने गतः कुक्कुटशावक इव ॥

---

इत्येषामेकार्थत्वं पौनरुक्त्यञ्च शकारवचनात् न दोषावहम् । तदुक्तम् "अपार्थमक्रमं व्यर्थं पुनरुक्तं हतोपमम् । लोकन्यायविरुद्धञ्च शकारवचनं विदुः ॥" इति । एवमुत्तरत्रापि बोध्यम् ।

(१९) उत्त्रासितेति । मे मम अन्तिका ज्येष्ठा भगिनी ज्येष्ठभगिनीवत् पूजार्हा त्वं सम्पूर्णपुच्छा पुच्छशोभिता ग्रीष्ममयूरीव उत्त्रासिता उद्वेजिता भीता इत्यर्थः गच्छसि । वने गतः कुक्कुटशावक इव मे मम भट्टारकः राजा "भट्टारको नृपे नाट्यवाचा देवे तपोधने" इति मेदिनी, स्वामी प्रभुः शकारः अववल्गति त्वत्सकाशमागच्छतीत्यर्थः ।

(२०) किमिति । टङ्कैः पाषाणदारणास्त्रैः "टङ्कः पाषाणदारणः"

शकारः। चिट्ठ वशन्तशेणिए! चिट्ठ (४९)।

मम मअणमणङ्गं मम्महं वड्ढअन्ती
णिशि अ शअणके मे णिद्दअं पक्खिवन्ती।
पशलशि भअभीदा पक्खलन्ती खलन्ती
मम वशमणुजादा लावणश्शेव कुन्ती (५०) ॥२१॥

विटः। वसन्तसेने!

किं त्वं पदैर्मम पदानि विशेषयन्ती
व्यालीव यासि पतगेन्द्रभयाभिभूता।
वेगादहं प्रविसृतः पवनं निरुन्ध्यां,
त्वन्निग्रहे तु वरगात्रि! न मे प्रयत्नः॥ २२ ॥

(४९) तिष्ठ वसन्तसेने! तिष्ठ।

(५०) मम मदनमनङ्गं मन्मथं वर्द्धयन्ती
निशि च शयनके मे निद्रां प्रक्षिपन्ती
प्रसरसि भयभीता प्रस्खलन्ती स्खलन्ती
मम वशमनुयाता रावणस्येव कुन्ती॥

इति कोषः। विदार्य्यमाणा मनःशिलानां रक्तवर्णधातुविशेषाणां गुहा इव रक्तोत्पलानां प्रकराः समूहाः तेषां कुड्मलं एकैकं मुकुलमिवेति अध्याहार्य्यम् उत्सृजन्ती क्षिपन्ती, तथा पवनेन दोला चञ्चला दशा अञ्चलभागो यत्र तत् यथा तथा रक्तांशुकं रक्तवसनं वहन्ती अत एव विरुध्यमाना मारुतकदलीव किं कथं यासि? वसन्ततिलकं वृत्तम्।

(२१) ममेति। मदनके मध्यायां प्रसरसि गच्छसि। अन्यत् सर्वं पुनरुक्तत्वादिकं पूर्ववत् बोद्धव्यमिति।

(२२) किमिति। त्वं पदैः पादविक्षेपैः मम पदानि पादविक्षेपान्

शकारः। भावे भावे !

एशा णाणकमूशिकामकशिका, मच्छाशिका, लाशिका,
णिण्णाशा, कुलणाशिका, अवशिका, कामाह मञ्जूशिका।
एशा वेशवहू, शुवेशणिलआ, वेशङ्गणा, वेशिआ,
एशे शे दशणामके मयि कले, अज्जावि मं णेच्छदि(५१)॥२३॥

---

(५१) एषा नाणकमोषिकामकशिका, मत्स्याशिका, लासिका,
निर्नासा, कुलनाशिका, अवशिका, कामस्य मञ्जूषिका।
एषा वेशवधूः, सुवेशनिलया, वेशाङ्गना, वेशिका,
एतान्यस्या दश नामकानि मया कृतानि, अद्यापि मां नेच्छति॥

िशोभयन्ती मत्तोऽपि समधिकं पादविक्षेपं कुर्वती सती पन्नगेन्द्रात् गरुडात् यत् भयं तेन अभिभूता त्रस्ता व्याघ्रीव भुजङ्गीव किं यासि? हे वरगात्रि! वरं गात्रं यस्याः सा तत्सम्बुद्धौ, सुन्दरि!, अहं वेगात् आवेगमाश्रित्य इत्यर्थः ल्यबर्थे पञ्चमी, प्रविसृतः चलितः सन् पवनं निरुन्ध्याम् अतिक्रमितुं शक्नुयां, तु किन्तु त्वद्ग्रहणे तव निग्रहे बलात्कारे मे मम प्रयत्नः अभिलाषः न, सुन्दरीं त्वां बलेन ग्रहीतुं नेच्छामीत्यर्थः। वसन्ततिलकं वृत्तम्।

(२२) एषेति। नाणकं बहुमूल्यं रत्नविशेषं मुष्णातीति नाणकमोषी तस्करः तस्य कामं कषन्ती कषयतीति वेश्या, लम्पटः प्रायशः तस्करो भवति तस्य कामनाशिनीत्यर्थः "तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा। लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः॥" इति वचनात्, मत्स्याशिका मत्स्यभोजिनी मत्स्यप्रियेत्यर्थः, लासिका नर्तनशीला, निर्नासा निश्चयेन नाशो ध्वंसो यस्याः सा ध्वंसकारिणीत्यर्थः, कुलनाशिका वंशनाशिनी वेश्यासक्तानां पत्नीषु अनुरागाभावात् अजातपुत्रतया प्रायशः वंशविच्छित्तिर्भवतीति भावः, अवशिका अवशी-

विटः। प्रसरसि भयविक्लवा किमर्थं
प्रचलितकुण्डलघृष्टगण्डपार्श्वा।
विटजननखघट्टितेव वीणा,
जलधरगर्जितभीतसारसीव ॥ २४ ॥

शकारः। झाणज्झणन्तबहुभूषणशद्दमिश्शं
किं दोवदी विअ पलाअशि लामभीदा।
एशे हलामि शहशत्ति जधा हणूमे
विश्शावशुश्श बहिणिं विअ तं शुभद्दं (५२) ॥ २५ ॥

---

(५२) झणज्झणमिति बहुभूषणशब्दमिश्रं
किं द्रौपदी इव पलायसे रामभीता।
एष हरामि सहसेति यथा हनूमान्
विश्वावसोर्भगिनीमिव तां सुभद्राम् ॥

---

भूता प्रचुरधनदानेनापि न कस्यापि वशवर्त्तिनी भवतीत्यर्थः, मञ्जूषिका मञ्जूषा एव मञ्जूषिका स्वार्थे णिक्प्रत्ययः, पात्रविशेषः "मञ्जूषापि च मञ्जूषा पेटा च पेटिकेत्यपि" इति शब्दरत्नावली, वेशवधूः वेशस्य वेश्याजनाश्रयस्य जनस्य वधूः "वेशो वेश्याजनाश्रयः" इत्यमरः, सुवेशानां शोभनालङ्कारपरिधानानां निलया स्थानभूता सततं शोभनालङ्कारवसनविराजिता इत्यर्थः, वेषिका वेशवती।

(२४) प्रसरसीति। प्रचलिताभ्यां चञ्चलाभ्यां द्रुतगमनादिति भावः, कुण्डलाभ्यां घृष्टौ गण्डयोः पार्श्वौ यस्याः तादृशी अत एव विटजनस्य विलासिजनस्य नखैः घट्टिता घर्षिता वीणा इव तथा जलधरस्य मेघस्य गर्जितेन गर्जनेन भीता सारसीव भयविक्लवा भीतिविधुरा सती किमर्थं प्रसरसि गच्छसि ?

(२५) झणज्झणमिति क्रियाविशेषणम्।

चेटः। लामेहि अ लाअवल्लहं, तो क्खाहिशि मच्छमंशकं।
एदेहिं मच्छमंशकेहिं शुणआ मलअं ण शेवन्ति(५३) ॥२६॥

विटः। भवति वसन्तसेने !

किं त्वं कटीतटनिवेशितमुद्वहन्ती
ताराविचित्ररुचिरं रशनाकलापम्।
वक्त्रेण निर्मथितचूर्णमनःशिलेन
त्रस्ताद्भुतं नगरदैवतवत् प्रयासि ॥ २७ ॥

शकारः। अम्हेहि चण्डं अहिशालिअन्ती
वणे शिआली विअ कुक्कलेहिं।
पलाशि शिग्घं तुलिदं शवेगं
शवेडणं मे हलअं हलन्ती (५४) ॥ २८ ॥

(५३) रमय च राजवल्लभं, ततः खादिष्यसि मत्स्यमांसकम्।
एताभ्यां मत्स्यमांसाभ्यां श्वानो मृतकं न सेवन्ते ॥

(५४) अस्माभिश्चण्डमभिसार्यमाणा
वने शृगालीव कुक्कुरैः।

(२६) रमयेति। एतावन्ति प्रचुराणि मत्स्यमांसानि अस्य गृहे सन्ति यत् श्वानां तत्परित्यागेन न मृतदेहेषु प्रवृत्तिर्भवतीति भावः।

(२७) किमिति। त्वं कटीतटे निवेशितम् अर्पितं ताराविचित्ररुचिरं तारया उज्ज्वलधर्मवत्त्वात् नक्षत्रसदृशेन मध्यमणिना विचित्रम् अत एव रुचिरं मनोहरं रशनाकलापं मेखलाभूषणं "कलापो भूषणे बर्हे" इति कोषः, उद्वहन्ती, निर्मथिता विलेपिता चूर्णा मनःशिला गन्धद्रव्यविशेषो यत्र तादृशेन वक्त्रेण मुखेन उपलक्षिता सती, नगरदैवतवत् नगराधिदेवतेव त्रस्ताद्भुतं सभयविस्मयं यथा तथा किं कथं प्रयासि ? वसन्ततिलकं वृत्तम्।

वसं। पल्लवआ पल्लवआ ! परहुदिए परहुदिए ! (५५)।

शकारः। सभयम्। भावे भावे ! मणुश्शे मणुश्शे (५६)।

विटः। न भेतव्यं, न भेतव्यम्।

वसं। माहविए माहविए ! (५७)।

विटः। सहासम्। मूर्ख ! परिजनोऽन्विष्यते।

शकारः। भावे भावे ! इत्थिआं अण्णेशदि (५८)।

विटः। अथ किम् ?

शकारः। इत्थिआणं शदं मालेमि शूले हगे (५९)।

वसं। शून्यमवलोक्य। हद्धी हद्धी ! कधं परिअणो वि परिब्भट्टो। एत्थ मए अप्पा शअं ज्जेव रक्खिदव्वो (६०)।

विटः। अन्विष्यतामन्विष्यताम्।

---

पलायसे शीघ्रं त्वरितं सवेगं
सवेष्टनं मम हृदयं हरन्ती ॥

(५५) पल्लवक पल्लवक ! परभृतिके परभृतिके !

(५६) विद्वन् विद्वन् ! मनुष्या मनुष्याः।

(५७) माधविके माधविके !

(५८) विद्वन् विद्वन् ! स्त्रियमन्विच्छति।

(५९) स्त्रीणां शतं मारयामि शूरोऽहम्।

(६०) हा धिक् हा धिक् ! कथं परिजनोऽपि परिभ्रष्टः। अत्र मयात्मा स्वयमेव रक्षितव्यः।

---

(२८) पलायसे इति। सवेगं द्रुतमिति क्रियाविशेषणम्। सवेष्टनं सावरणं धैर्यादिपूर्णमित्यर्थः अनाहृतस्य द्रव्यस्य सहार्यत्वात् हरणं सहसा सम्भवति, मम तु हृदयं धैर्यादिभिरावरणैरावृतं हृत्वा त्वरितं प्रयासीति भावः।

शकारः । वशन्तशेणिए ! विलव विलव, पलहुदिअं वा पल्लवअं वा, पुप्फं वा वशन्तमाशं । मए अहिशालिअंतीं तुमं कु पलित्ताइश्शदि ?

किं भीमशेणे ? जमदग्गिपुत्ते ?
कुन्तीशुदे वा ? दशकन्धले वा ?
एशे हगे गेण्हिय केशहत्थे
दुश्शाशणश्शाणुकिदिं कलेमि ॥ २९ ॥

णं पेक्ख, णं पेक्ख,

अशी शुतिक्खे, वलिदे अ मत्थके,
कप्पेम शीशं, उद मालएम वा ।
अलं तवेदेण पलाइदेण,
मुमुक्खु जे होदि, ण शे क्खु जीअदि(६१) ॥ ३० ॥

---

(६१) वसन्तसेनिके ! विलप विलप, परभृतिकां वा पल्लवकं वा पुष्पं वा वसन्तमासम् । मया अभिसार्यमाणां त्वां कः परित्रास्यते ?

किं भीमसेनो ? जमदग्निपुत्रः ?
कुन्तीसुतो वा ? दशकन्धरो वा ? ।
एषोऽहं गृहीत्वा केशहस्तं
दुःशासनस्यानुकृतिं करोमि ॥

ननु प्रेक्षस्व, ननु प्रेक्षस्व,

असिः सुतीक्ष्णो वल्गितश्च मस्तकं,
कल्पयामः शीर्षम्, उत मारयामो वा ।
अलं तवैतेन पलायितेन,
मुमूर्षुर्यो भवति, न स खलु जीवति ॥

---

(२०) असिरिति । वल्गितं धृतम् ।

वसं । अज्ज ! अबला क्खु अहं (६२) ।

विटः । अत एव म्रियसे ।

शकारः । अदो ज्जेव ण मालीअसि (६३) ।

वसं । स्वगतम् । कधं अणुणअो वि से भअं उप्पादेदि । भोदु एव्वं दाव । प्रकाशम् । अज्ज ! इमादो किम्पि अलङ्करणं तक्कीयदि ? (६४) (व) ।

विटः । शान्तम् । भवति वसन्तसेने ! न पुष्पमोषमर्हत्युद्यानलता, तत् कृतमलङ्करणैः ।

वसं । ता किं क्खु दाणिं ? (६५) ।

शकारः । हगे देवपुलिशे मणुश्शे वाशुदेवके कामइदव्वे (६६) ।

वसं । सक्रोधम् । शन्तं शन्तं । अवेहि, अणज्जं मन्तेसि (६७) ।

शकारः । सहस्ततालं विहस्य । भावे भावे ! पेक्ख दाव,

---

(६२) आर्य्य ! अबला खल्वहम् ।

(६३) अत एव न मार्य्यसे ।

(६४) कथमनुनयोऽप्यस्य भयमुत्पादयति । भवत्वेवं तावत् । आर्य्य ! अस्मात् किमपि अलङ्करणं तर्क्यते ?

(६५) तत् किं खलु इदानीम् ?

(६६) अहं देवपुरुषो मनुष्योवासुदेवः कामयितव्यः ।

(६७) शान्तं शान्तम् । अपेहि, अनार्य्यं मन्त्रयसि ।

---

(व) तर्क्यते नेत्यभिप्रायः ?

दणुज्जाणादो पहुदि, ताह दलिद्दचालुदत्ताह अणुलत्ता, ण मं कामेदि। वामदो तश्श घलं। जधा तव मम अ हत्थादो एशा ण पलिब्भंशदि तधा कलेदु भावे (७०)।

विटः। स्वगतम्। यदेव परिहर्त्तव्यं (स) तदेवोदाहरति मूर्खः। कथं वसन्तसेना आर्य्यचारुदत्तमनुरक्ता। सुष्ठु खल्विदमुच्यते, रत्नं रत्नेन सङ्गच्छत इति। तद्गच्छतु, किमनेन मूर्खेण। प्रकाशम्। काणेलीमातः! (ह) वामतस्तस्य सार्थवाहस्य गृहम्।

शकारः। अधइं, वामदो तश्श घलं (७१)।

चेटः। स्वगतम्। अम्महे! वामदो तश्श गेहं त्ति जं शच्चं। अवरज्झन्तेण वि दुज्जणेण उवकिदं, जेण पिअसङ्गमं पाविदा (७२)।

शकारः। भावे भावे! बलिए क्खु अन्धआले, माश-

(७०) भाव भाव! एषा गर्भदासी कामदेवायतनोद्यानात् प्रभृति, तस्य दरिद्रचारुदत्तस्यानुरक्ता, न मां कामयते। वामतस्तस्य गृहम्। यथा तव मम च हस्तात् न एषा परिभ्रंश्यति, तथा करोतु भावः।

(७१) अथ किं, वामतस्तस्य गृहम्।

(७२) आश्चर्य्यम्! वामतस्तस्य गृहमिति यत् सत्यम्। अपराध्यतापि दुर्जनेन उपकृतं, येन प्रियसङ्गमं प्रापिता।

(स) यदेव चारुदत्तस्य गृहं परिहर्त्तव्यम् अतिक्रमणीयं न वक्तव्यमित्यर्थः।

(ह) काणेलीमातः! काणेलीनाम्नी माता यस्य तत्सम्बोधने।

लाग्गिपविट्टा विअ मसिगुडिआ (घ) दीसन्दी ज्जेव पणट्ठा वसन्तसेणिआ (७३)।

विटः। अहो! बलवानन्धकारः। तथाहि,

आलोकविशाला मे सहसा तिमिरप्रवेशविच्छिन्ना।
उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण॥ २३॥

अपिच,

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥ २४॥

शकारः। भावे भावे! अन्वेशामि वशन्तशेणिअं (७४)।

विटः। काणेलीमातः! अस्ति किञ्चिच्चिह्नं यदुपलक्षयसि?

(७३) भाव भाव! बलीयसि खल्वन्धकारे, माषराशिप्रविष्टेव मसीगुटिका दृश्यमानैव प्रणष्टा वसन्तसेना।

(७४) भाव भाव! अन्विष्यामि वसन्तसेनिकाम्।

---

(घ) मसीगुटिका मसीवटिका।

(२३) आलोकेति। आलोके दर्शने विशाला महती तीव्रदर्शनशक्तिसम्पन्नेत्यर्थः मे मम दृष्टिः तिमिरप्रवेशविच्छिन्ना तिमिरस्य अन्धकारस्य प्रवेशेन विच्छिन्ना व्याप्ता अत एव उन्मीलितापि दर्शनार्थं कृतोन्मेषा अपि अन्धकारेण निमीलिता इव। आर्य्यावृत्तम्।

(२४) लिम्पतीवेति। तमः अन्धकारम् अङ्गानि लिम्पतीव, नभः अञ्जनं वर्षतीव, दृष्टिः असत्पुरुषसेवेव नीचपरिचर्य्या इव विफलतां फलराहित्यं गता। अनुष्टुप्वृत्तम्।

शकारः। भावे भावे! किं विश्र? (७५)।

विटः। भूषणशब्दं सौरभ्यानुविद्धं माल्यगन्धं वा।

शकारः। शुणामि मल्लगन्धं, अन्धआलपूलिदाए उण णाशिआए शुव्वत्तं, उण ण पेक्खामि भूशणशद्दं (७६)।

विटः। जनान्तिकम्। वसन्तसेने!

कामं प्रदोषतिमिरेण न दृश्यसे त्वं
सौदामनीव जलदोदरसन्धिलीना।
त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं
गन्धश्च, भीरु! मुखराणि च नूपुराणि॥ ३५॥

श्रुतं? वसन्तसेने!

वसं। स्वगतम्। सुदं गहिदं अ (७७)। नाट्येन नूपुराणि उत्सार्य, माल्यानि चापनीय, किञ्चित् परिक्रम्य, हस्तेन परामृश्य। अम्मो! भित्तिपरामरिससूइदं पक्खदुआरअं क्खु एदं।

(७५) भाव भाव! किमिव?

(७६) शृणोमि माल्यगन्धम्, अन्धकारपूरितया पुनर्नासिकया सुव्यक्तं, पुनर्न पश्यामि भूषणशब्दम्।

(७७) श्रुतं गृहीतञ्च।

(३५) काममिति। हे भीरु! त्वं जलदोदरसन्धिलीना मेघाभ्यन्तरविलीना सौदामनीव प्रदोषे तिमिरेण रजनीमुखोद्भूततमसा न दृश्यसे, तु किन्तु माल्यसमुद्भवः अयं गन्धः मुखराणि शब्दायमानानि नूपुराणि च त्वां सूचयिष्यति प्रकटयिष्यति। वसन्ततिलकं वृत्तम्।

जाणामि अ संजोएण (क) गेहस्स संबुद्धं पक्खदुआ-रअं (७८)।

चारु। वयस्य! समाप्तजपोऽस्मि। तत् साम्प्रतं गच्छ, मातृभ्यो बलिमुपहर।

विदू। भो! ण गमिस्सं (७९)।

चारु। धिक् कष्टम्!

दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते,
सुस्निग्धा विमुखीभवन्ति सुहृदः, स्फारीभवन्त्यापदः।
सत्त्वं ह्रासमुपैति, शीलशशिनः कान्तिः परिम्लायते,
पापं कर्म च यत् परैरपि कृतं, तत् तस्य सम्भाव्यते॥ ३६॥

---

(७८) अहो! भित्तिपरामर्शसूचितं पक्षद्वारकं खल्वेतत्। जानामि च संयोगेन गेहस्य संवृतं पक्षद्वारकम्।

(७९) भो! न गमिष्यामि।

(क) भित्तेः परामर्शेन स्पर्शेन सूचितम् अनुमितं पक्षद्वारकं पार्श्वद्वारकम्। संयोगेन सम्यक् स्पर्शेन।

(३६) दारिद्र्यादिति। बान्धवजनः पुरुषस्य दारिद्र्यात् निर्धनत्वात् वाक्ये न सन्तिष्ठते न वाक्यं गृह्णाति न शृणोतीत्यर्थः, सुस्निग्धाः अतिप्रणयिनः सुहृदः बन्धवः विमुखीभवन्ति, आपदः स्फारीभवन्ति विस्तारमापद्यन्ते, सत्त्वं बलं ह्रासम् उपैति प्राप्नोति, शीलशशिनः सद्वृत्तचन्द्रस्य कान्तिः दीप्तिः परिम्लायते ह्रासं गच्छति, किञ्चेति चार्थः, परैः अन्यैरपि कृतं यत् पापं कर्म, तत् तस्य दरिद्रस्य सम्भाव्यते अनुमीयते। शार्दूलविक्रीडितं वृत्तम्।

अपि च,

सङ्गं नैव हि कश्चिदस्य कुरुते, सम्भाषते नादरात्,
सम्प्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया,
मन्ये, निर्धनता प्रकाममपरं षष्ठं महापातकम्॥ ३७॥

अपि च,

दारिद्र्य! शोचामि भवन्तमेव-
मस्मच्छरीरे सुहृदित्युषित्वा।
विपन्नदेहे मयि मन्दभाग्ये,
ममेति चिन्ता क्व गमिष्यसि त्वम्॥ ३८॥

(३७) सङ्गमिति। कश्चित् जनः अस्य दरिद्रस्य सङ्गं संसर्गं न हि कुरुते, आदरात् न सम्भाषते दरिद्रमिति शेषः, उत्सवेषु धनिनां गृहं सम्प्राप्तः दरिद्रः सावज्ञम् आलोक्यते लोकैरिति शेषः, तथा अल्पच्छदः सामान्यपरिच्छदः मलिनवेश इत्यर्थः लज्जया महाजनस्य भद्रजनस्य दूरादेव विहरति तिष्ठति, अतः निर्धनता अपरम् अन्यत् षष्ठं ब्रह्महत्यादिपञ्चविधातिरिक्तं प्रकामं पूर्णं महापातकम् इति मन्ये। शार्दूलविक्रीडितं वृत्तम्।

(३८) दारिद्र्येति। हे दारिद्र्य! भवन्तं त्वां शोचामि, यतः त्वं सुहृद् इति मत्वेति शेषः अस्मच्छरीरे मम देहे एवम् उषित्वा वासं कृत्वा मन्दभाग्ये हतभाग्ये मयि विपन्नदेहे मृते सति क्व कुत्र गमिष्यसीति मम चिन्ता। दारिद्र्यशब्दस्य नपुंसकत्वेऽपि भवन्तमिति पुंस्त्वनिर्देशः प्रामादिक इति चिन्त्यमित्यलम्। इन्द्रोपेन्द्रवज्रायाः संमेलनादुपजातिवृत्तम्।

विदू। सवैलक्ष्यम्। भो वअस्स! जइ मए गन्तव्वं, ता एसा वि मे सहाइणी रदणिआ भोदु (८०)।

चारु। रदनिके! मैत्रेयमनुगच्छ।

चेटी। जं अज्जो आणवेदि (८१)।

विदू। भोदि रदणिए! गेण्ह बलिं पदीवं अ। अहं अवावुदं पक्खदुआरअं करेमि(८२)। तथा करोति।

वसं। मम अब्भुववत्तिणिमित्तं(ख) विअ अवावुदं पक्ख-दुआरअं, ता जाव पविसामि। दृष्ट्वा। हद्धी! हद्धी! कधं पदीवो! (८३)। पटान्तेन निर्वाप्य प्रविष्टा।

चारु। मैत्रेय! किमेतत्?

विदू। अवावुदपक्खदुआरएण पिण्डीकदेण (ग) वादेण णिव्वाविदो पदीवो। भोदि रदणिए! णिक्कम तुमं पक्खदु-

(८०) भो वयस्य! यदि मया गन्तव्यं, तदेषापि मम सहायिनी रदनिका भवतु।

(८१) यत् आर्य्य आज्ञापयति।

(८२) भवति रदनिके! गृहाण बलिं प्रदीपञ्च। अहम् अपावृतं पक्षद्वारकं करोमि।

(८३) मम अभ्युपपत्तिनिमित्तमिव अपावृतं पक्षद्वारकं, तत् यावत् प्रविशामि। हा धिक्! हा धिक्! कथं प्रदीपः!

---

(ख) अभ्युपपत्तिनिमित्तम् अनुग्रहार्थम्।

(ग) पिण्डीकृतेन राशीभूतेन।

आरएण। अहंपि अब्भन्तरचदुस्सालादो पदीवं पज्जालिअ आअच्छामि (८४)। इति निष्क्रान्तः।

शकारः। भावे भावे! अण्णेशामि वशन्तशेणिअं(८५)।

विटः। अन्विष्यताम् अन्विष्यताम्।

शकारः। तथा कृत्वा। भावे भावे! गहिदा गहिदा(८६)।

विटः। मूर्ख! नन्वहम्।

शकारः। इदो दाव भविअ एअन्ते भावे चिष्ठदु। पुनरन्विष्य चेटं गृहीत्वा। भावे भावे! गहिदा गहिदा(८७)।

चेटः। भट्टके! चेडे हगे (८८)।

शकारः। इदो भावे, इदो चेडे। भावे चेडे, चेडे भावे। तुम्हे दाव एअन्ते चिष्ठ। पुनरन्विष्य रदनिकां केशेषु गृहीत्वा। भावे भावे! अम्पदं गहिदा गहिदा वशन्तशेणिआ (८९)।

---

(८४) अपावृतपक्षद्वारेण पिण्डीकृतेन वातेन निर्व्वापितः प्रदीपः। अयि रदनिके! निष्क्रम त्वं पक्षद्वारकेण। अहमपि अभ्यन्तरचतुःशालातः प्रदीपं प्रज्वाल्य आगच्छामि।

(८५) भाव भाव! अन्वेषयामि वसन्तसेनिकाम्।

(८६) भाव भाव! गृहीता गृहीता।

(८७) इतस्तावत् भूत्वा एकान्ते भावस्तिष्ठतु। भाव भाव! गृहीता गृहीता।

(८८) भट्टारक! चेटोऽहम्।

(८९) इतो भावः, इतश्चेटः। भावश्चेटः, चेटो भावः। युवं यावत् एकान्ते तिष्ठतम्। भाव भाव! साम्प्रतं गृहीता गृहीता वसन्तसेनिका।

अन्धआले पलाअन्ती, मल्लगन्धेण सूइदा ।
केशविन्द्रे पलामिट्टा, चाणक्केण्व दोवदी(८०) ॥३९॥

विटः । एषासि वयसो दर्पात् कुलपुत्रानुसारिणी ।
केशेषु कुसुमाढ्येषु सेवितव्येषु कर्षिता ॥४०॥

शकारः । एशाशि वाशू! शिलशि म्हीदा
केशेशु, वालेशु, शिलोलुहेशु ।
अक्कोश, विक्कोश, लबाहि चण्डं
शम्भु, शिवं, शङ्कलीमीश्शलं वा (८१) ॥४१॥

रद । सभयम् । किं अज्जमिस्सेहिं ववसिदं? (८२)(घ) ।

---

(८०) अन्धकारे पलायमाना, माल्यगन्धेन सूचिता ।
केशहस्ते परामृष्टा, चाणक्येनेव द्रौपदी ॥

(८१) एषासि वासु! शिरसि गृहीता
केशेषु, बालेषु, शिरोरुहेषु ।
आक्रोश, विक्रोश, लपाधिचण्डं,
शम्भुं, शिवं, शङ्करीमीश्वरं वा ॥

(८२) किम् आर्य्यमिश्रैर्व्यवसितम्?

(३९) केशविन्द्रे इति प्राकृतस्य केशहस्ते इति संस्कृतं समीचीनतया सङ्गच्छते, केशसमूहे केशपाशे इत्यर्थः ।

(४०) एषेति । एषा वसन्तसेना त्वं वयसः यौवनस्य दर्पात् अहङ्कारात् कुलपुत्रस्य सत्कुलप्रसूतस्य चारुदत्तस्य अनुसारिणी अनुरागिणी अतो सेवितव्येषु सेवायोग्येषु कुसुमाढ्येषु कर्षिता असि शकारेणेति शेषः । अनुष्टुप्वृत्तम् ।

(४१) अधिचण्डम् अतिप्रचण्डम् उच्चैरित्यर्थः लप [illegible] इत्यर्थः ।

(घ) व्यवसितं कृतम् ।

विटः। काणेलीमातः! अन्य एवैष स्वरसंयोगः।

शकारः। भावे भावे! जधा दहिच्छलिपलिलुद्धाए मज्जालीए शलपलिवत्ते (ङ) होदि, तधा दाशीए धीए शल-पलिवत्ते कडे (८३)।

विटः। कथं स्वरपरिवर्त्तः कृतः! अहो चित्रम्। अथवा किमत्र चित्रम्?

इयं रङ्गप्रवेशेन, कलानां चोपशिक्षया।
वञ्चनापण्डितत्वेन, स्वरनैपुण्यमाश्रिता ॥४२॥

प्रविश्य विदूषकः। ही ही भोः! पदोसमन्दमारुदेण पसुबन्धोबणीदस्स(च) विअ छागलस्स हिअअं, फुरफुराअदि पदीवो। उपसृत्य रदनिकां दृष्ट्वा। भो रदणिए! (८४)

(८३) भाव भाव! यथा दधिसरपरिलुब्धाया मार्जारिकायाः स्वरपरिवृत्तिर्भवति, तथा दास्याः पुत्र्या स्वरपरिवृत्तिः कृता।

(८४) आश्चर्यम्! भोः! प्रदोषमन्दमारुतेन पशुबन्धोपनीतस्येव छागलस्य हृदयं, फरफरायते प्रदीपः। भो रदनिके!

(ङ) दधिसरपरिलुब्धायाः दध्नः सरे उपरिस्थिते सारांशे परि-लुब्धायाः आसक्तायाः। स्वरपरिवर्त्तः भिन्नकण्ठध्वनिः।

(४२) इयमिति। इयं वसन्तसेना रङ्गप्रवेशेन रङ्गः नाट्यशाला "रङ्गः स्यान्नृत्ययुद्धभुवोः" इति हेमचन्द्रः, तत्र प्रवेशेन, कलानां नृत्य-गीतादिकानाम् उपशिक्षया अभ्यासेन, वञ्चनापण्डितत्वेन प्रतारणाचातु-र्य्येण च स्वरनैपुण्यं स्वरविकृतिकरणपाटवम् आश्रिता। अनुष्टुप् वृत्तम्।

(च) पशुबन्धोपनीतस्य पशुबन्धः पशुवधस्थानं तत्र उपनीतः तस्य।

शकारः। भावे भावे। मणुश्शे मणुश्शे (९५)।

विदू। जुत्तं णेदं, सरिसं णेदं, जं अज्जचारुदत्तस्स दलिद्ददाए सम्पदं परपुरिसा गेहं पवेसोअन्ति (९६)।

रद। अज्ज मित्तेअ! पेक्ख मे परिहवं (९७)!

विदू। किं तव परिहवो? आदु अम्हाणं? (९८)।

रद। णं तुम्हाणं ज्जेव (९९)।

विदू। किं एसो बलक्कारो? (१००)।

रद। अध इं (१)।

विदू। सच्चं? (२)।

रद। सच्चं (३)।

विदू। सक्रोधं दण्डकाष्ठमुद्यम्य। मा दाव। भो! सके गेहे कुक्कुरोवि दाव चण्डो भोदि, किं उण अहं बम्हणो। ता एदिणा अम्हारिसजणभाअधेअकुडिलेण दण्डकट्ठेण

(९५) भाव भाव! मनुष्यो मनुष्यः।

(९६) युक्तं नेदं, सदृशं नेदं, यत् आर्य्य-चारुदत्तस्य दरिद्रतया साम्प्रतं परपुरुषा गेहं प्रवेशयन्ते।

(९७) आर्य्य मैत्रेय! प्रेक्षस्व मे परिभवम्।

(९८) किन्तव परिभवः? अथवा अस्माकम्?

(९९) ननु! युष्माकमेव।

(१००) किमेष बलात्कारः?

(१) अथ किम्।

(२) सत्यम्?

(३) सत्यम्।

दुट्टस्स विअ मुण्डाअवेणुअस्स मत्थअं दे पहारेहिं कुट्ट-इस्सं (४) (छ)।

विटः। महाब्राह्मण! (ज)मर्षय, मर्षय।

विदू। विटं दृष्ट्वा। ण एत्थ एसो अवरज्झदि। शकारं दृष्ट्वा। एसो क्खु एत्थ अवरज्झदि। अरे रे राअसालअ संट्ठाअअ(झ) दुज्जण दुम्मणुस्स! जुत्तं णेदं। जइ वि णाम तत्तभवं अज्जचारुदत्तो दलिद्दो संवुत्तो, ता किं तस्स गुणेहिं ण अलङ्किदा उज्जइणी? जेण तस्स गेहं पविसिअ परिअणस्स ईरिसो उवमद्दो (ञ) करीअदि (५)।

(४) मा तावत्। भोः! स्वके गेहे कुक्कुरोऽपि तावत् चण्डो भवति, किं पुनरहं ब्राह्मणः। तत् एतेनास्मादृशजनभागधेयकुटिलेन दण्डकाष्ठेन दुष्टस्येव शुष्कवेणुकस्य मस्तकं ते प्रहारैः कुट्टयिष्यामि।

(५) नात्र एषोऽपराध्यति। एष खल्वत्रापराध्यति। अरे रे राजश्यालक संस्थानक दुर्जन दुर्मनुष्य! युक्तं नेदम्। यद्यपि नाम तत्रभवान् आर्यचारुदत्तो दरिद्रः संवृत्तः, तत् किं तस्य गुणै-र्नालङ्कृता उज्जयिनी? येन तस्य गृहं प्रविश्य परिजनस्य ईदृश उपमर्दः क्रियते।

---

(छ) कुट्टयिष्यामि चूर्णयिष्यामि।

(ज) महाब्राह्मण इति परिहासोक्तिः, अधमब्राह्मण इत्यर्थः महच्छब्दस्य ब्राह्मणपूर्ववर्त्तित्वे निन्दावाद उक्तः। यथा "शङ्खे तैले तथा मांसे वैद्ये ज्योतिषिके द्विजे। यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥" इति।

(झ) संस्थानक इति शकारनाम।

(ञ) उपमर्दः परिभवः अवमाननेति यावत्।

मा दुग्गदोत्ति परिहवो णत्थि कअन्तस्स दुग्गदो णाम ।
चारित्तेण विहीणो अड्ढो विअ दुग्गदो होइ(६) ॥४३॥

विटः । सवैलक्ष्यम् । महाब्राह्मण ! मर्षय, मर्षय । अन्य-जनशङ्कया खल्विदमनुष्ठितं, न दर्पात् । पश्य,

सकामान्विष्यतेऽस्माभिः—

विदू । किं इअं ? (७) ।

विटः । शान्तं पापम् । काचित् स्वाधीनयौवना ।
सा नष्टा, शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥४४॥

सर्व्वथा इदमनुनयसर्व्वस्वं गृह्यताम् । इति खड्गमुत्सृज्य कृताञ्जलिः पादयोः पतति ।

(६) मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दुर्गतो नाम ।
चारित्रेण विहीन आढ्योऽपि च दुर्गतो भवति ॥
(७) किमियम् ?

(४३) मेति । अयं दुर्गतः दरिद्र इति हेतोः परिभवः तदवमाननं न कर्त्तव्य इति शेषः, यतः कृतान्तस्य यमस्य समीपे दुर्गतः निर्धनः नास्ति नाम सम्भावनायां, निर्धन इति कृत्वा दण्डविशेषसम्भावनापि नास्तीत्यर्थः । यस्तु चारित्रेण सद्वृत्तेन विहीनः स आढ्योऽपि धनवानपि दुर्गतः भवति, दुश्चरितस्यैव दुर्गतसंज्ञा नतु सच्चरित्रस्येति भावः ।
(४४) सकामेति । सकामा स्वाधीनयौवना काचित् अस्माभिः अन्विष्यते, सा नष्टा अदर्शनं गता पलायितेत्यर्थः, तस्याः शङ्कया भ्रमेण इयं रदनिकापमर्दनजनिता शीलवञ्चना शीलस्य सदाचारस्य वञ्चना ध्वंसरूपा प्रतारणा प्राप्ता अस्माभिरिति शेषः । अनुष्टुप् वृत्तम् ।

दुट्टस्स विअ सुक्खाणवेणुअस्स मत्थअं दे पहारेहिं कुट्ट-इस्सं (४) (छ)।

विटः। महाब्राह्मण! (ज)मर्षय, मर्षय।

विदू। (विटं दृष्ट्वा।) ण एत्थ एसो अवरज्झदि। (शकारं दृष्ट्वा।) एसो क्खु एत्थ अवरज्झदि। अरे रे राअसालअ संट्ठा-णअ(झ) दुज्जण दुम्मणुस्स! जुत्तं णेदं। जइ वि णाम तत्तभवं अज्जचारुदत्तो दलिद्दो संवुत्तो, ता किं तस्स गुणेहिं ण अलङ्किदा उज्जइणी? जेण तस्स गेहं पविसिअ परिअणस्स ईदिसो उवमद्दो (ञ) करीअदि (५)।

(४) मा तावत्। भोः! स्वके गेहे कुक्कुरोऽपि तावत् चण्डो भवति, किं पुनरहं ब्राह्मणः। तत् एतेनास्मादृशजनभागधेयकुटिलेन दण्डकाष्ठेन दुष्टस्येव शुष्कवेणुकस्य मस्तकं ते प्रहारैः कुट्टयिष्यामि।

(५) नात्र एषोऽपराध्यति। एष खल्वत्रापराध्यति। अरे रे राजश्यालक संस्थानक दुर्जन दुर्मनुष्य! युक्तं नेदम्। यद्यपि नाम तत्रभवान् आर्य्यचारुदत्तो दरिद्रः संवृत्तः, तत् किं तस्य गुणै-र्नालङ्कृता उज्जयिनी? येन तस्य गेहं प्रविश्य परिजनस्य ईदृश उपमर्दः क्रियते।

---

(छ) कुट्टयिष्यामि चूर्णयिष्यामि।

(ज) महाब्राह्मण इति परिहासोक्तिः, अधमब्राह्मण इत्यर्थः महच्छब्दस्य ब्राह्मणपूर्ववर्त्तित्वे निन्दावाद उक्तः। यथा "शङ्खे तैले तथा मांसे वैद्ये ज्योतिषिके द्विजे। यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥" इति।

(झ) संस्थानक इति शकारनाम।

(ञ) उपमर्दः परिभवः अवमाननेति यावत्।

मा दुग्गदोत्ति परिहवो णत्थि कअन्तस्स दुग्गदो णाम ।
चारित्तेण विहीणो अढ्ढो विअ दुग्गदो होइ(६) ॥४३॥

विटः । सवैलक्ष्यम् । महाब्राह्मण ! मर्षय, मर्षय । अन्य-
जनशङ्कया खल्विदमनुष्ठितं, न दर्पात् । पश्य,

सकामान्विष्यतेऽस्माभिः—

विदू । किं इअं ? (७) ।

विटः । शान्तं पापम् । काचित् स्वाधीनयौवना ।

सा नष्टा, शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥४४॥

सर्व्वथा इदमनुनयसर्व्वस्वं गृह्यताम् । इति खड्गमुत्सृज्य
कृताञ्जलिः पादयोः पतति ।

(६) मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दुर्गतो नाम ।
चारित्र्येण विहीन आढ्योऽपि च दुर्गतो भवति ॥
(७) किमियम् ?

---

(४३) मेति । अयं दुर्गतः दरिद्र इति हेतोः परिभवः तदवमाननं न कर्त्तव्य इति शेषः, यतः कृतान्तस्य यमस्य समीपे दुर्गतः निर्धनः नास्ति नाम सम्भावनायां, निर्धन इति कृत्वा दण्डविशेषसम्भावनापि नास्तीत्यर्थः । यस्तु चारित्र्येण सद्वृत्तेन विहीनः स आढ्योऽपि धनवानपि दुर्गतः भवति, दुश्चरितस्यैव दुर्गतसंज्ञा नतु सच्चरितस्येति भावः ।

(४४) सकामेति । सकामा स्वाधीनयौवना काचित् अस्माभिः अन्विष्यते, सा नष्टा अदर्शनं गता पलायितेत्यर्थः, तस्याः शङ्कया भ्रमेण इयं रदनिकापमर्दनजनिता शीलवञ्चना शीलस्य सदाचारस्य वञ्चना ध्वंसरूपा प्रतारणा प्राप्ता अस्माभिरिति शेषः । अनुष्टुप्छन्दः ।

दुट्टस्स विअ सुक्खावबेणुअस्स मत्थअं दे पहारेहिं कुट्ट-इस्सं (४) (क)।

विटः। महाब्राह्मण! (ख)मर्षय, मर्षय।

विदू। विडं दट्ठा। ण एत्थ एसो अवरज्झदि। सकारं दट्ठा। एसो क्खु एत्थ अवरज्झदि। अरे रे राअसालअ संट्ठाणअ(ग) दुज्जण दुम्मणुस्स! जुत्तं णेदं। जइ वि णाम तत्तभवं अज्जचारुदत्तो दलिद्दो संवुत्तो, ता किं तस्स गुणेहिं ण अलङ्किदा उज्जइणी? जेण तस्स गेहं पविसिअ परिअणस्स ईरिसो उवमद्दो (घ) करीअदि (५)।

(४) मा तावत्। भोः! स्वके गेहे कुक्कुरोऽपि तावत् चण्डो भवति, किं पुनरहं ब्राह्मणः। तत् एतेनास्मादृशजनभागधेयकुटिलेन दण्डकाष्ठेन दुष्टस्येव शुष्कवेणुकस्य मस्तकं ते प्रहारैः कुट्टयिष्यामि।

(५) नाम एषोऽपराध्यति। एष खल्वत्रापराध्यति। अरे रे राजश्यालक संस्थानक दुर्जन दुर्मनुष्य! युक्तं नेदम्। यद्यपि नाम तत्रभवान् आर्य्यचारुदत्तो दरिद्रः संवृत्तः, तत् किं तस्य गुणैर्नालङ्कृता उज्जयिनी? येन तस्य गेहं प्रविश्य परिजनस्य ईदृश उपमर्दः क्रियते।

---

(क) कुट्टयिष्यामि चूर्णयिष्यामि।

(ख) महाब्राह्मण इति परिहासोक्तिः, अधमब्राह्मण इत्यर्थः महच्छब्दस्य ब्राह्मणपूर्ववर्त्तित्वे निन्दावाद उक्तः। यथा "शङ्खे तैले तथा मांसे वैद्ये ज्योतिषिके द्विजे। यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥" इति।

(ग) संस्थानक इति शकारनाम।

(घ) उपमर्दः परिभवः अवमाननेति यावत्।

मा दुग्गदोत्ति परिहवो णत्थि कअन्तस्स दुग्गदो णाम।
चारित्तेण विहीणो अड्ढो वि अ दुग्गदो होइ(६) ॥४३॥

विटः। सवैलक्ष्यम्। महाब्राह्मण! मर्षय, मर्षय। अन्य-जनशङ्कया खल्विदमनुष्ठितं, न दर्पात्। पश्य,

सकामान्विष्यतेऽस्माभिः—

विदू। किं इअं? (७)।

विटः। शान्तं पापम्। काचित् स्वाधीनयौवना।
सा नष्टा, शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥४४॥

सर्व्वथा इदमनुनयसर्व्वस्वं गृह्यताम्। इति खड्गमुत्सृज्य कृताञ्जलिः पादयोः पतति।

---

(६) मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दुर्गतो नाम।
चारित्त्रेण विहीन आढ्योऽपि च दुर्गतो भवति ॥

(७) किमियम्?

---

(४३) मेति। अयं दुर्गतः दरिद्र इति हेतोः परिभवः तदवमाननं न कर्त्तव्य इति शेषः, यतः कृतान्तस्य यमस्य समीपे दुर्गतः निर्धनः नास्ति नाम सम्भावनायां, निर्धन इति कृत्वा दण्डविशेषसम्भावनापि नास्तीत्यर्थः। यस्तु चारित्त्रेण सद्वृत्तेन विहीनः स आढ्योऽपि धनवानपि दुर्गतः भवति, दुश्चरित्रस्यैव दुर्गतसंज्ञा नतु सच्चरित्रस्येति भावः।

(४४) सकामेति। सकामा स्वाधीनयौवना काचित् अस्माभिः अन्विष्यते, सा नष्टा अदर्शनं गता पलायितेत्यर्थः, तस्याः शङ्कया भ्रमेण इयं रदनिकापमर्द्दनजनिता शीलवञ्चना शीलस्य सदाचारस्य वञ्चना ध्वंसरूपा प्रतारणा प्राप्ता अस्माभिरिति शेषः। अनुष्टुप् छन्दः।

विदू। सप्पुरिस ! उट्‌ठेहि, उट्‌ठेहि। अआणन्तेण मए तुमं उबालद्धे (ट), सम्पदं उण जाणन्तो अणुणेमि(८)।

विटः। ननु ! भवानेवात्रानुनेयः। तदुत्तिष्ठामि समयतः (ठ)।

विदू। भणादु भवं (९)।

विटः। यदि इमं वृत्तान्तम् आर्य्यचारुदत्तस्य नाख्यास्यसि।

विदू। ण कधइस्सं (१०)।

विटः। एष ते प्रणयो विप्र ! शिरसा धार्य्यते मया।

गुणशस्त्रैर्वयं येन शस्त्रवन्तोऽपि निर्ज्जिताः ॥४५॥

शकारः। सासूयम्। किं णिमित्तं उण भावे ! एदश्श दुट्ठवडुअश्श, विणअञ्जलिं कदुअ, पाएशु णिवड़िदे ? (११)।

---

(८) सत्पुरुष ! उत्तिष्ठ, उत्तिष्ठ। अजानता मया त्वमुपालब्धः, साम्प्रतं पुनर्जानन्ननुनयामि।

(९) भणतु भवान्।

(१०) न कथयिष्यामि।

(११) किं निमित्तं पुनर्भावः ! एतस्य दुष्टबटुकस्य, विनयाञ्जलिं कृत्वा, पादयोर्निपतितः ?

---

(ट) उपालब्धः तिरस्कृतः।

(ठ) समयतः अङ्गीकारतः, यदि अङ्गीकरोषि तदा इत्यर्थः।

(४५) एष इति। हे विप्र ! मया एषः ते तव प्रणयः प्रीतिनिबन्धना अनुमतिः शिरसा धार्य्यते, येन हेतुना शस्त्रवन्तः शस्त्रधारिणः अपि वयं गुणशस्त्रैः चारुदत्तस्येति शेषः निर्जिताः पराभूताः। अनुष्टुप्छन्दः।

विटः। भीतोऽस्मि।

शकारः। कस्स तुमं भीदे? (१२)।

विटः। तस्य चारुदत्तस्य गुणेभ्यः।

शकारः। के विअ तस्स गुणा? यस्स गेहं पविशिअ अशिदव्वं पि णत्थि? (१३)।

विटः। मा मैवम्।

सोऽस्मद्विधानां प्रणयैः कृशीकृतो,
न तेन कश्चित् विभवैर्विमानितः।
निदाघकालेष्विव सोदको ह्रदो
नृणां स तृष्णामपनीय शुष्कवान्॥ ४६॥

शकारः। सामर्षम्। के शे गब्भदासीए पुत्ते? (१४) (ङ)।

(१२) कस्मात् त्वं भीतः?

(१३) के इव तस्य गुणाः? यस्य गृहं प्रविश्य अशितव्यमपि नास्ति?

(१४) कः स गर्भदास्याः पुत्रः?

---

(४६) स इति। स चारुदत्तः अस्मद्विधानां प्रणयैः धनप्रार्थनाभिः कृशीकृतः निर्धनीकृतः अस्मभ्यं धनानि दत्त्वैव निर्धनो जात इत्यर्थः। तेन चारुदत्तेन कश्चित् जनः न विमानितः न अवमतः, धनदाने सर्व एव सन्तोषिता इत्यर्थः। सः निदाघकाले ग्रीष्मसमये सोदकः उदकपूर्णः ह्रद इव नृणां तृष्णाम् अपनीय शुष्कवान् शोषं प्राप्तः। वंशस्थविलं वृत्तम्।

(ङ) सामर्षं सक्रोधम्। गर्भदास्याः चिरं वन्दीभूतायाः स्त्रियाः पुत्र इति चारुदत्ते सावज्ञोक्तिः।

विदू। सप्पुरिस ! उट्ठेहि, उट्ठेहि। अआणन्तेण मए तुमं उवालद्धे (ट), सम्पदं उण जाणन्तो अणुणेमि (८)।

विटः। ननु ! भवानेवात्रानुनेयः। तदुत्तिष्ठामि समयतः (ठ)।

विदू। भणादु भवं (९)।

विटः। यदि इमं वृत्तान्तम् आर्य्यचारुदत्तस्य नाख्यास्यसि।

विदू। ण कधइस्सं (१०)।

विटः। एष ते प्रणयो विप्र ! शिरसा धार्य्यते मया।

गुणशस्त्रैर्वयं येन शस्त्रवन्तोऽपि निर्ज्जिताः ॥४५॥

शकारः। सासूयम्। किं णिमित्तं उण भावे ! एदश्श दुट्टवडुअश्श, विणअञ्जलिं कदुअ, पाएशु णिवड़िदे ? (११)।

---

(८) सत्पुरुष ! उत्तिष्ठ, उत्तिष्ठ। अजानता मया त्वमुपालब्धः, साम्प्रतं पुनर्जानन्ननुनयामि।

(९) भणतु भवान्।

(१०) न कथयिष्यामि।

(११) किं निमित्तं पुनर्भाव ! एतस्य दुष्टवटुकस्य, विनयाञ्जलिं कृत्वा, पादयोर्निपतितः ?

---

(ट) उपालब्धः तिरस्कृतः।

(ठ) समयतः अङ्गीकारतः, यदि अङ्गीकरोषि तदा इत्यर्थः।

(४५) एष इति। हे विप्र ! मया एषः ते तव प्रणयः प्रीतिनिबन्धना अनुमतिः शिरसा धार्य्यते, येन हेतुना शस्त्रवन्तः शस्त्रधारिणः अपि वयं गुणशस्त्रैः चारुदत्तस्येति शेषः निर्जिताः पराभूताः। अनुष्टुप्वृत्तम्।

विटः। भीतोऽस्मि।

शकारः। कश्श तुमं भीदे ? (१२)।

विटः। तस्य चारुदत्तस्य गुणेभ्यः।

शकारः। के विश्र तश्श गुणा ? यश्श गेहं पविशिश्र अशिदव्वं पि णत्थि ? (१३)।

विटः। मा मैवम्।

सोऽस्मद्विधानां प्रणयैः कृशीकृतो,
न तेन कश्चित् विभवैर्विमानितः।
निदाघकालेष्विव सोदको ह्रदो
नृणां स तृष्णामपनीय शुष्कवान्॥ ४६॥

शकारः। सामर्षम्। के शे गब्भदाशीए पुत्ते ? (१४) (ङ)।

---

(१२) कस्मात् त्वं भीतः ?

(१३) के इव तस्य गुणाः ? यस्य गृहं प्रविश्य अशितव्यमपि नास्ति ?

(१४) कः स गर्भदास्याः पुत्रः ?

---

(४६) स इति। स चारुदत्तः अस्मद्विधानां प्रणयैः धनप्रार्थनाभिः कृशीकृतः निर्धनीकृतः अस्मभ्यं धनानि दत्त्वैव निर्धनो जात इत्यर्थः। तेन चारुदत्तेन कश्चित् जनः न विमानितः न अवमतः, धनदाने सर्व एव सन्तोषिता इत्यर्थः। सः निदाघकाले ग्रीष्मसमये सोदकः उदकपूर्णः ह्रद इव नृणां तृष्णाम् अपनीय शुष्कवान् शोषं प्राप्तः। वंशस्थविलं वृत्तम्।

(ङ) सामर्षं सक्रोधम्। गर्भदास्याः चिरं वन्दीभूतायाः स्त्रियाः पुत्र इति चारुदत्ते सावज्ञोक्तिः।

शूले विक्कन्ते ? पण्डवे शेदकेदू ?
पुत्ते लाधाए ? लावणे ? इन्दउत्ते ?।
आहो कुन्तीए तेण लामेण जादे ?
अश्शत्थामे ? धम्मपुत्ते ? जडाऊ ? (१५) ॥४७॥

विटः। मूर्ख ! आर्य्यचारुदत्तः खल्वसौ !

दीनानां कल्पवृक्षः, स्वगुणफलनतः, सज्जनानां कुटुम्बी,
आदर्शः शिक्षितानां, सुचरित-निकषः, शीलवेलासमुद्रः।
सत्कर्त्ता, नावमन्ता, पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो
ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया, चोच्छ्वसन्तीव चान्ये॥४८

(१५) शूरो विक्रान्तः ? पाण्डवः श्वेतकेतुः ?
पुत्रो राधायाः ? रावणः ? इन्द्रपुत्रः ?।
आहो कुन्त्यां तेन रामेण जातः ?
अश्वत्थामा ? धर्मपुत्रो ? जटायुः ? ॥

---

(४७) शूर इति। शूरो नाम कश्चित् प्रबलप्रतापो नृपतिः। श्वेतकेतुः शुक्लवर्णवानरध्वजः अर्जुन इत्यर्थः। इन्द्रपुत्रः जयन्तः, वालिनामको वानरराजो वा। रामेण जात इति विरुद्धभाषित्वम्। धर्मपुत्रः युधिष्ठिरः।

(४८) दीनानामिति। दीनानां दुर्गतानां जनानां कल्पवृक्षः वाञ्छितफलप्रदः, स्वगुणानां दयादाक्षिण्यादीनां फलैः नतः अतिविनयीत्यर्थः, सज्जनानां साधूनां कुटुम्बी गृही आधारस्वरूप इत्यर्थः, शिक्षितानां विनीतानां आदर्शः दर्पणस्वरूपः निदर्शनभूत इत्यर्थः, सुचरितानां निकषः परीक्षास्थानं, शीलवेलासमुद्रः शीलमेव वेला तस्याः समुद्रः समुद्रो वेलामिव कदापि सद्वृत्तं नातिक्रामतीत्यर्थः, सत्कर्त्ता सत्कार्य्यकारकः, नावमन्ता न कस्यापि अवमानकारी, पुरुषाणां ये

तदितो गच्छामः ।

शकारः । अगेण्हिअ वशन्तशेणिअं ? (१६) ।

विटः । नष्टा वसन्तसेना ।

शकारः । कधं विअ ? (१७) ।

विटः । अन्धस्य दृष्टिरिव, पुष्टिरिवातुरस्य,
मूर्खस्य बुद्धिरिव, सिद्धिरिवालसस्य ।
स्वल्पस्मृतेर्व्यसनिनः परमेव विद्या,
त्वां प्राप्य सा रतिरिवारिजने प्रनष्टा ॥ ४९ ॥

शकारः । अगेण्हिअ वशन्तशेणिअं ण गमिश्शं (१८)

---

(१६) अगृहीत्वा वसन्तसेनाम् ।

(१७) कथमिव ?

(१८) अगृहीत्वा वसन्तसेनां न गमिष्यामि ।

---

गुणाः तेषां निधिः आलयः, तथा दक्षिणं सरलम् उदारं महत् सत्त्वं स्वभावः यस्य तादृशः स चारुदत्तः एकः केवलः अधिकगुणतया श्लाघ्यः सन् जीवति, अन्ये जनाः उच्छ्वसन्तीव जीवन्तीव वृथा जीवनं धारयन्तीत्यर्थः । स्रग्धरावृत्तम् ।

(४९) अन्धस्येति । सा वसन्तसेना अन्धस्य दृष्टिः दर्शनशक्तिरिव, आतुरस्य पीडितस्य पुष्टिः शरीरसामर्थ्यमिव, मूर्खस्य बुद्धिः विवेकशक्तिरिव, अलसस्य सिद्धिः कार्य्यसाफल्यमिव, स्वल्पा स्मृतिः स्मरणशक्तिः यस्य तस्य तथा व्यसनिनः विपन्नस्य कामादिदोषाक्रान्तस्य वा "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इति कोषः, परमा विद्या परमार्थज्ञानमिव, तथा अरिजने शत्रुजने रतिः अनुराग इव, त्वां प्राप्य प्रनष्टा त्वत्सकाशे अदर्शनं गतेत्यर्थः । वसन्ततिलकं वृत्तम् ।

विटः। एतदपि न श्रुतं त्वया?

आलाने गृह्यते हस्ती, वाजी वल्गासु गृह्यते।

हृदये गृह्यते नारी, यदिदं नास्ति गम्यताम्॥५०॥

शकारः। यदि गच्छसि, गच्छ तुमं। हगे ण गमिश्शं(१९)

विटः। एवं गच्छामि। इति निष्क्रान्तः।

शकारः। गडे क्खु भावे अभावं। विदूषकमुद्दिश्य। अले काकपदशीशमस्तका(ढ)दुट्टबडुका! उवविश, उवविश(२०)।

विदू। उववेसिदा ज्जेव अम्हे (२१)।

शकारः। केण? (२२)।

विदू। कअन्तेण (२३) (ण)।

शकारः। उट्ठेहि उट्ठेहि (२४)

---

(१९) यदि गच्छसि, गच्छ त्वम्। अहं न गमिष्यामि।

(२०) गतः खलु भावोऽभावम्। अरे काकपदशीर्षमस्तक-दुष्टवटुक! उपविश उपविश।

(२१) उपवेशिता एव वयम्।

(२२) केन?

(२३) कृतान्तेन।

(२४) उत्तिष्ठ उत्तिष्ठ।

---

(५०) आलाने इति। हस्ती आलाने बन्धनस्तम्भे गृह्यते, वाजी अश्वः वल्गासु मुखरज्जुषु गृह्यते, नारी हृदये गृह्यते, यद् यदि इदं नास्ति न भवति तदा गम्यताम्।

(ढ) अभावम् अदर्शनम्। काकपदशीर्षमस्तकः काकपदवत् शीर्षे शिखा यस्य तादृशं मस्तकं यस्य तत्सम्बोधने।

(ण) कृतान्तेन दैवेन।

विदू। उट्ठिस्सामो (२५) ।

शकारः। कदा ? (२६) ।

विदू। जदा पुणो बि देव्वं अणुउलं भविस्सदि(२७)।

शकारः। अले ! लोद, लोद (२८)।

विदू। रोदाविदा ज्जेव अम्हे (२९)।

शकारः। केण ? (३०)।

विदू। दुग्गदीए (३१)।

शकारः। अले ! हश, हश (३२)।

विदू। हसिस्सामो (३३)।

शकारः। कदा ? (३४)।

विदू। पुणोमि रुद्धीए अज्जचारुदत्तस्स (३५)।

शकारः। अले, ले दुट्ठवडुका ! भणेश्शि मम बअणेण तं दलिद्द चालुदत्तकं। एशा शशुवण्णा, शहिलण्णा, णवणा-

---

(२५) उत्थास्यामः।

(२६) कदा ?

(२७) यदा पुनरपि दैवमनुकूलं भविष्यति।

(२८) अरे ! रुदिहि, रुदिहि।

(२९) रोदिता एव वयम्।

(३०) केन ?

(३१) दुर्गत्या।

(३२) अरे ! हस, हस।

(३३) हसिष्यामः।

(३४) कदा ?

(३५) पुनरपि ऋद्ध्या आर्य्य-चारुदत्तस्य।

इअदंसणुट्ठिदा शुत्तधालिव्व, वशन्तशेणा णाम गणिआ-दालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता, अम्हेहिं बलक्कालाणुणीअमाणा, तुह गेहं पविट्टा। ता जइ मम हत्थे शअं ज्जेव पट्ठाविअ एणं शमप्पेशि, तदो अधिअलणे ववहालं विणा, लहुं णिज्जादमाणाह (त) तव मए अणुबद्धा पीदी हुविश्शदि। आदु अणिज्जादमाणाह, आमलणन्तिके वेले हुविश्शदि। अविअ, पेक्ख, पेक्ख।

कक्कालुका गोच्छड़लित्तवेण्टा,
शाके अ शुक्खे तलिदे हु मंशे।
भत्ते अ हेमन्तिअलत्तिशिद्धे,
लीणे अ वेले ण हु होदि पूदी (२६) ॥५१॥

---

(२६) अरे, रे, दुष्टवटुक! भणिष्यसि मम वचनेन तं दरिद्रचारुदत्तकम्। एषा सवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव, वसन्तसेना नाम गणिका-दारिका, कामदेवायतनोद्यानात् प्रभृति त्वामनुरक्ता अस्माभिर्बलात्कारादनुनीयमाना तव गेहं प्रविष्टा, तद्यदि मम हस्ते स्वयमेव प्रस्थाप्य एनां समर्पयसि, ततोऽधिकरणे व्यवहारं विना, शीघ्रं निर्यातयतस्तव मयानुबद्धा प्रीतिर्भविष्यति, अथवा, अनिर्यातयत आमरणान्तकं वैरं भविष्यति। अपि च प्रेक्षस्व, प्रेक्षस्व।

कर्कारुको गोमयलिप्तवृन्तः,
शाकञ्च शुष्कं, तलितं खलु मांसम्।
भक्तञ्च हैमन्तिक-रात्रि-सिद्धं,
लीनायाञ्च वेलायां न खलु भवति पूति॥

---

(त) अधिकरणे धर्माधिकरणे विचारगृहे इत्यर्थः। व्यवहारम् अभियोगम्। निर्यातयतः अर्पयतः।

सोट्ठिअं भणेम्हि, लहुअं भणेम्हि। तधा भणेम्हि, जधा हगे अत्तण केलिकाए पाशाद बालग्ग कवोदवालिआए उवविट्ठे शुणामि। अख्धा, (थ) जदि ण भणेम्हि, ता कवाल तलपविट्ठ कवित्थगुड़िअं विअ मत्थअं दे मड़मड़ाइअं (३७)।

विट्। भणिस्सं (३८)।

(३७) स्वस्तिकं भणिष्यसि, लघुकं भणिष्यसि, तथा भणिष्यसि, यथाऽहमात्मीयायां प्रासाद बालाग्र कपोत-पालिकायामुपविष्टः शृणोमि, अन्यथा, यदि न भणसि, तदा कपाट-तलप्रविष्टं कपित्थ गुलिकमिव मस्तकन्ते मड़मड़ इतिशब्दं कृत्वा भञ्जयिष्यामि।

(३८) भणिष्यामि।

---

(५१) कर्कारुक इति। गोमयेन लिप्तं छन्नं यस्य तादृशः कर्कारुकः कुष्माण्डः कुष्माण्डकस्तु कर्कारुरित्यमरः। शुष्कं शाकं, तलितं घृतादिसंभृष्टं मांसं शुद्धमांसविधानेन मांसं सम्यक् प्रसाधितम्। पुनस्तदाज्ये संभृष्टं तलितं प्रोच्यते बुधैरिति भावप्रकाशः। तथा हैमन्तिकायां रात्रौ सिद्धं भक्तम् अच्छ वेलायां समये लीनायाम् अतीतायामपि न खलु नैव पूति दुर्गन्धं भवति अत्राप्रस्तुतानां कर्कारुकादीनां समयातिक्रमेऽपि पूतिगन्धित्वाभाववर्णनेन प्रस्तुतस्य वसन्तसेनाया मल्लमप्रदानेन बहुकालातिपातेऽपि अनुपभाग्यतायाः बोधनादप्रस्तुत प्रशंसालङ्कारः।

(थ) स्वस्तिकमिति। स्वस्तिकं शुभं ममानुकूलमित्यर्थः यथा तथा भणिष्यसि वक्ष्यसि, लघुकं शीघ्रम्। आत्मीयायां स्वाधिकृतायां प्रासादस्य राजभवनस्य प्रासादो देवभूभुजामित्यमरः। बालम् अभिनवम् अग्रं यस्याः तादृशी नवनिर्मिताग्रभागा इत्यर्थः या कपोतपालिका कपोतानां पालिका रक्षणभूमिः तस्याम्। अन्यथा अन्यस्मिन् प्रकारे सति पक्षान्तरे इत्यर्थः।

शकारः । अपवार्य । चेड़े ! गछ शअकं ज्जेव भावे (३९)।

चेटः । अधइं (४०) ।

शकारः । ता णिग्घं अवक्कमन्ह (४१) ।

चेटः । ता गेण्हदु भट्टके असिं (४२) ।

शकारः । तव ज्जेव हत्थे चिष्ठदु (४३) ।

चेटः । एशे भट्टालके, गेण्हदु णं भट्टके असिं (४४) (द)।

शकारः । विपरीतं गृहीत्वा ।

णिव्वक्कलं मूलकपेशिवण्णं,

खन्धेण घेत्तूण अ कोशशुत्तं ।

कुक्केहि कुक्कीहि अबुक्कअन्ते,

जधा शिआले, शलणं पलामि (४५) ॥ ५२ ॥

---

(३९) चेट ! गतः स्वयमेव भावः ।

(४०) अथ किम् ।

(४१) तत् शीघ्रमपक्रमावः ।

(४२) तत् गृह्णातु भट्टारकोऽसिम् ।

(४३) तवैव हस्ते तिष्ठतु ।

(४४) एष भट्टारकः, गृह्णात्वेनं भट्टारकोऽसिम् ।

(४५) निर्वल्कलं मूलकपेशिवर्णं स्कन्धेन गृहीत्वा च कोषसुप्तम् ।
कुक्कुरैः कुक्कुरीभिश्च बुक्कयमानो यथा शृगालः, शरणं प्रयामि ॥

---

(द) एषः असिः भट्टारकः भट्टारकस्य अयमिति भट्टारकशब्दादि-दमर्थे अण् प्रत्ययेन निष्पन्नः भट्टारकसम्बन्धीय इत्यर्थः अतो समासा-र्थकत्वे नाधिकार इति भावः ।

(५२) निर्वल्कलमिति । वल्कलं तद्वल्क् वल्कया तन्निर्मितं कोषं

परिक्रम्य निष्क्रान्तौ।

विदू। भोदि रदणिए ! ण क्खु दे अअं अवमाणो तत्त-भवदो चारुदत्तस्स णिवेदइदव्वो। दोग्गच्चपीडिअस्स मण्णे दिउणदरा पीड़ा हुविस्सदि (४६)।

रदनिका। अज्ज मित्तेअ ! रदणिआ क्खु अहं सञ्जद-मुही (४७)।

विदू। एव्वं सेदं (४८)।

चारु। वसन्तसेनामुद्दिश्य। रदनिके ! मारुताभिलाषी (ध) प्रदोषसमयशीतार्त्तो रोहसेनः ततः प्रवेश्यतामभ्यन्तरमयम्, अनेन प्रावारकेण (न) छादयैनम्। इति प्रावारकं प्रयच्छति।

वस। स्वगतम्। कधं परिअणोत्ति मं अवगच्छदि। प्रावारकं गृहीत्वा समाघ्राय च स्वगतं सस्पृहम्। अम्महे ! जादी-

(४६) भो रदनिके ! न खलु ते अयम् अपमानस्तत्रभवतश्चारुदत्तस्य निवेदयितव्यः, दौर्गत्य पीड़ितस्य मन्ये, द्विगुणतरा पीड़ा भविष्यति।

(४७) आर्य मैत्रेय ! रदनिका खल्वहं संयतमुखी।

(४८) एवमिदम्।

तस्मात् निर्गतं निष्कोषमित्यर्थः मूलकस्य मेशेः वर्ण इव वर्णः यस्य तं तादृशम् असिं कोषसुप्तं कोषनिहितं कृत्वा स्कन्धेन गृहीत्वा च कुक्कुरैः कुक्कुरीभिश्च बुक्कयमानः अनुगम्यमानः शृगाल इव गरणं गृहं गरणं गृहपरिचितोदिव्यरः प्रयामि गच्छामि संयतमुखी बद्धमुखी नाहं चारुदत्ताय निवेदयिष्यामीति भावः।

(ध) मारुताभिलाषी वायुसेवी रोहसेनः तदाख्यचारुदत्तस्य पुत्रः।

(न) प्रावारकेण उत्तरीयवसनेन।

कुसुमवासिदो पावारश्रो, श्रणुदासीणं (प) से जोव्वणं पड़िहासेदि (४८)। अपवारितकेन प्राह्णोति।

चारु। ननु रदनिके ! राहसेनं गृहीत्वाभ्यन्तरं प्रविश।

वस। स्वगतम् मन्दभाइणी क्खु श्रहं तुम्हे अब्भन्तरस्स (५०)।

चारु। ननु रदनिके ! प्रतिवचनमपि नास्ति ? कष्टम्

यदा तु भाग्यक्षयपीड़ितां दशां
नरः कृतान्तोपहितां प्रपद्यते।
तदास्य मित्राण्यपि यान्त्यमित्रतां,
चिरानुरक्तोऽपि विरज्यते जनः॥ ५३॥

विदूषकः रदनिकामुपसृत्य।

विदू। भो ! इश्रं सा रदणिश्रा (५१)।

चारु। इयं सा रदनिका। इयमपरा का ?

---

(४८) कथं परिजन इति मामवगच्छति। आश्चर्यम् ! जातीकुसुमवासितः प्रावारकः, अनुदासीनम् अस्य यौवनं प्रतिभासते।

(५०) मन्दभागिनी खल्वहं तवाभ्यन्तरस्य।

(५१) भो ! इयं सा रदनिका।

---

(प) अनुदासीनं भोगतृष्णाया अविमुखम्।

(५३) यदेति नरः मानवः यदा कृतान्तेन दैवेन उपहितां जनितां भाग्यस्य शुभादृष्टस्य क्षयेण पीड़ितां व्यथितां दशां प्रपद्यते प्राप्नोति, तदा अस्य दुर्भाग्ययुक्तस्य मानवस्य मित्राणि अपि अमित्रतां शत्रुतां यान्ति, तथा चिरानुरक्तोऽपि जनः विरज्यते विरक्तो भवति। वंशस्थविलं वृत्तम्।

अविज्ञातावसक्तेन दूषिता मम वाससा।

वस। स्वगतम्। यं भूसिदा (५२)।

चारु। छादिता शरदभ्रेण चन्द्रलेखेव दृश्यते ॥ ५४ ॥

अथवा, न युक्तं परकलत्रदर्शनम्।

विदू। भो! अलं परकलत्तदंसणसङ्काए। एसा वसन्तसेणा कामदेवाअदनुज्जाणादो पहुदि भवन्तमणुरत्ता (५३)।

चारु। अये! इयं वसन्तसेना। स्वगतम्।

यया मे जनितः कामः क्षीणे विभवविस्तरे।
क्रोधः कुपुरुषस्येव स्वगात्रेष्वेव सीदति ॥ ५५ ॥

विदू। भो वअस्स! एसो क्खु राअसालो भणादि (५४)।

चारु। किम्?

---

(५२) ननु भूषिता।

(५३) भो! अलं परकलत्र-दर्शनशङ्कया, एषा वसन्तसेना कामदेवायतनोद्यानात् प्रभृति त्वामनुरक्ता।

(५४) भो वयस्य! एष खलु राजश्यालो भणति।

---

(५४) अविज्ञातेति। अविज्ञाता अविदिता मयेति शेषः अथच अवसक्तेन स्वगात्रयोजितेन मम वाससा उत्तरीयवसनेन दूषिता परपुरुषवस्त्रसंसर्गादिति भावः शरदभ्रेण शारदीयमेघेन छादिता चन्द्रलेखेव दृश्यते।

(५५) ययेति। विभवविस्तरे प्रचुरसम्पदि क्षीणे सति यया जनितः मे मम कामः भोगाभिलाषः कुपुरुषस्य अधमस्य जनस्य क्रोधः इव स्वगात्रेषु निजशरीरेषु एव सीदति अवसादं गच्छति।

विदू। एसा ससुवणा, सहिलसा, णवणाड़अदंसणु-ट्ठिदा सुत्तधालि व्व बसन्तसेणा णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता, अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पबिट्ठा (५५)।

बस। स्वगतम्। बलक्कारानुणीअमाणेत्ति जं सच्चं। अलङ्किदम्हि एदेहिं अक्खरेहिं (५६)।

विदू। ता जइ मम हत्थे सअं ज्जेब पट्ठाबिअ एणं समप्पेसि, तदो अधिअलणे बबहालं बिणा लहुं णिज्जादमाणाह तब मए अणबद्धा पीदी हुविस्सदि। अधधा, णासलण बेलन्तिके हुविस्सदि (५७)।

चारु। सावज्ञम्। अज्ञोऽसौ। स्वगतम्। अयि कथं देवतोपस्थानयोग्या युवतिरियम्। तेन खलु तस्यां वेलायां (फ)

> प्रविश गृहमिति प्रतोद्यमाना
>
> न चलति भाग्यकृतान्दशामवेक्ष्य।
>
> पुरुषपरिचयेन च प्रगल्भं
>
> न वदति यद्यपि भाषते बहूनि ॥५६॥

(५५) एषा ससुवर्णेत्यादि।

(५६) बलात्कारानुनीयमाना इति यत्सत्यं, अलङ्कृतास्मि एतैरक्षरैः।

(५७) तद्यदि मम हस्ते स्वयमेव प्रस्थाप्य एनां समर्पयसीत्यादि।

(फ) इयं युवतिः उपस्थानयोग्या उपास्या देवता। तस्यां वेलायां श्रोतार्त्तरोहसेनस्य गृहाभ्यन्तरप्रवेशाज्ञासमये इत्यर्थः।

(५६) प्रविशेति। गृहं प्रविश रोहसेनं गृहीत्वेति शेषः इति

प्रकाशम्। भवति वसन्तसेने! अनेनाविज्ञानादपरिज्ञात-परिजनोपचारेणापराद्धोऽस्मि (ब)। शिरसा भवतीमनु-नयामि।

वस। एदिणा अणुचिदभूमिआरोहणेण (भ) अवरज्झा अज्जं सीसेण पणमिअ, पसादेमि(५८)।

विदू। भो! दुवेवि तुम्हे सुखं पणमिअ, कलमकेदारा (म) अण्णोण्णं सीसेण सीसं समाअदा। अहं पि इमिणा करहजाणुसरिसेण, सीसेण दुवेवि तुम्हे पसादेमि (५९)।

इति उत्तिष्ठति।

(५८) एतेनानुचितभूमिकारोहणेनापराद्धा आर्य्यं शीर्षेण प्रणम्य प्रसादयामि।

(५९) भो! द्वावपि युवां सुखं प्रणम्य, कलमकेदारौ अन्योऽन्यं शीर्षेण शीर्षं समागतौ, अहमपि अमुना करभजानु-सदृशेन शीर्षेण द्वावपि युवां प्रसादयामि।

---

प्रतोद्यमाना अनुरुध्यमाना अपि भाग्यक्षतां दशां मम दुर्दशामित्यर्थः अन्तरम् न चलति न अभ्यन्तरं गतवतीत्यर्थः, तथा यद्यपि वक्तुमिच्छति भाषते तथापि पुरुषपरिचयेन पुंसंसर्गेण पुंसां समक्षमित्यर्थः प्रगल्भं धृष्टं यथा तथा न वदति।

(ब) अपरिज्ञात परिजनोपचारेण अपरिज्ञातेषु जनेषु यः परि-जनोपचारः दासीबुद्ध्या वसन्तसेनागात्रे उत्तरीयवसनप्रक्षेपरूपः तेन।

(भ) अनुचितभूमिकारोहणेन अनुचितायां माहशजनप्रवेशा-योग्यायां भूमिकायां भूमौ भवद्गृहे आरोहणेन प्रवेशेन।

(म) कलम केदारौ इत्यत्र इवेति पदमध्याहार्य्यं कलमः व्रीहिः केदारः क्षेत्रं पाकावस्थायामुभयोः शिरः समागम इव इत्यर्थः।

चारु। भवतु, तिष्ठतु प्रणयः (य)।

वस। स्वगतम्। चदुरो मधुरो अ अअं उवखासो (र) ण जुत्तं अज्ज एदिसेण इध आअदाए मए पडिवसिदुं। भोदु, एव्वं दाव भणिस्सं। प्रकाशम्। अज्ज! जइ एव्वं अहं अज्जस्स अणुग्गेज्झा, ता इच्छे अहं इमं अलङ्कारअं अज्जस्स गेहे णिक्खिविदुं। अलङ्कारस्स णिमित्तं एदे पावा अणुसरन्ति (६०)।

चारु। अयोग्यमिदं न्यासस्य (ल) गृहम्।

वस। अज्ज! अलीअं, (व) पुरुसेसु णासा णिक्खिविअन्ति, ण उण गेहेसु (६१)।

चारु। मैत्रेय! गृह्यतामयमलङ्कारः।

---

(६०) चतुरो मधुरश्चायमुपन्यासः, न युक्तम् अद्य ईदृशेन इह आगतया मया प्रतिवस्तुं, भवतु, एवं तावत् भणिष्यामि। आर्य्य! यद्येवमहमार्य्यस्य अनुग्राह्या, तदिच्छाम्यहम् इममलङ्कारकमार्य्यस्य गेहे निक्षेप्तुम्, अलङ्कारस्य निमित्तम् एते पापा अनुसरन्ति।

(६१) आर्य्य! अलीकं, पुरुषेषु न्यासा निःक्षिप्यन्ते न पुनर्गेहेषु।

(य) प्रणयः परस्परानुनयरूपप्रार्थनम्।

(र) उपन्यासः आलापः। ईदृशेन एवंरूपेण।

(ल) न्यासस्य निक्षेपस्य अयोग्यं दुरवस्थत्वादिति भावः।

(व) अलीकम्—आर्य्य गृहमयोग्यम् इति यत् भवता उक्तं तदलीकं मिथ्या अमुत्र्यैव उक्तमित्यर्थः।

वस। अणुमहिदह्मि (६२)। इत्यलङ्कारमर्पयति।

विदू। गृहीत्वा। सोत्थि भोदिए (६३)।

चारु। धिङ्मूर्ख! न्यासः खल्वयम्।

विदू। अपवार्य्य। जइ एव्वं। ता चोरेहिं अवहरीअदु (६४)।

चारु। अचिरेणैव कालेन।

विदू। एसो से अम्हाणं विस्सासो? (६५)।

चारु। निर्यातयिष्ये (अ)।

वस। अज्ज! इच्छे अहं, इमिणा अज्जेण अणुगच्छिज्जन्तो सकं गेहं गन्तुं (६६)।

चारु। मैत्रेय! अनुगच्छ तत्रभवतीम्।

विदू। तुमं ज्जेव एदं कलहंसगामिणीं अणुगच्छन्तो राअहंसो विअ सोहसि। अहं उण बम्हणो। जहिं तहिं

(६१) अनुगृहीतास्मि।

(६२) स्वस्ति भवत्यै।

(६४) यद्येवं तदा चोरैरपह्रियताम्।

(६५) एषोऽस्या अस्माकं विन्यासः।

(६६) आर्य्य! इच्छाम्यहम्, अनेनार्य्येण अनुगम्यमाना स्वकं गेहं गन्तुम्।

---

(अ) निर्य्यातयिष्ये प्रत्यर्पयिष्यामि।

जणेहिं चउप्पहोवणीदो (य) विअ उवहारो कुक्कुरेहिं विअ, खज्जमाणो विवज्जिस्सं (६७)।

चारु। एवं भवतु स्वयमेवानुगच्छामि तत्रभवतीम्। तद्राजमार्गविश्वासयोग्याः (र) प्रज्वाल्यन्तां प्रदीपिकाः।

विदू। वड्ढमाणअ! पज्जालेहि पदीविआओ(६८)।

चेटः। जनान्तिकम्। अले! तेल्लेण विणा पदीविआओ पज्जालीयन्ति? (६९)।

विदू। जनान्तिकम्। भो! ताओ क्खु अम्हाणं पदीविआओ अवमाणिदणिद्धणकामुआ विअ गणिआ णिस्सिणेहाओ (ल) दाणिं संवुत्ता (७०)।

(६७) त्वमेव एतां कलहंसगामिनीमनुगच्छन् राजहंस इव शोभसे, अहं पुनर्ब्राह्मणः, यत्र तत्र जनैश्चतुष्पथोपनीत इव उपहारः कुक्कुरैरिव खाद्यमानो विपत्स्ये।

(६८) वर्द्धमानक! प्रज्वालय प्रदीपिकाः।

(६९) अरे! तैलेन विना प्रदीपिकाः प्रज्वाल्यन्ते?

(७०) भोः! ताः खल्वस्माकं प्रदीपिका, अवमानित-निर्द्धन-कामुका इव गणिका, निःस्नेहा इदानीं संवृत्ताः।

---

(य) चतुष्पथोपनीतः चतुष्पथे उपनीतः देवताभ्यः प्रदत्तः उपहारः पूजाद्रव्यम्।

(र) राजमार्गविश्वासयोग्याः राजपथगमनयोग्याः।

(ल) निःस्नेहाः अतैलाः अननुरागिण्य च।

चारु। मैत्रेय! भवतु। कृतं प्रदीपिकाभिः। पश्य

उदयति हि शशाङ्कः कामिनीगण्डपाण्डु-
र्ग्रहगणपरिवारो राजमार्गप्रदीपः।
तिमिरनिकरमध्ये रश्मयो यस्य गौराः
स्रुतजल इव पङ्के, क्षीरधाराः पतन्ति ॥५७॥

सानुरागम्। भवति वसन्तसेने! इदं भवत्या गृहं, प्रविशतु भवती। वसन्तसेना सानुरागमवलोकयन्ती। निष्क्रान्ता।

चारु। वयस्य! गता वसन्तसेना। तदेहि, गृहमेव गच्छावः।

राजमार्गो हि शून्योऽयं रक्षिणः सञ्चरन्ति च।
वञ्चना परिहर्त्तव्या बहुदोषा हि शर्व्वरी ॥५८॥

(५७) उदयतीति। कामिन्याः गण्डः कपोलः तद्वत् पाण्डुः गौरकान्तिः समुज्ज्वल इत्यर्थः ग्रहगणपरिवारः ग्रहाणां गणैः परिवृत इत्यर्थः राजमार्गस्य प्रदीपः प्रदीपयति विकाशयतीति प्रदीपः प्रकाशकः शशाङ्कः चन्द्रः उदयति, यस्य गौराः श्वेताः रश्मयः किरणाः स्रुतजले स्रुतानि जलानि यस्मात् तादृशे जलशून्ये इत्यर्थः पङ्के कर्द्दमे, जलयुक्ते क्षीरधाराणां पाते तासां जलरूपेणैव पर्य्यवसानं भवतीति स्रुतजले इति विशेषणम्। क्षीरधारा इव दुग्धप्रवाहा इव तिमिरनिकरमध्ये तमोराशिमध्ये पतन्ति अन्धकारान् नाशयन्तीत्यर्थः। वृत्तमत्र मालिनी।

(५८) राजमार्ग इति। अयं राजमार्गः शून्यः रात्रप्रधिकतया पान्थजनगतायातविरहादिति भावः, रक्षिणः प्रहरिणः सञ्चरन्ति

परिक्रम्य। इदञ्च सुवर्णभाण्डं रक्षितव्यं त्वया रात्रौ, वर्द्धमानकेनापि दिवा।

विटः। जधा भवं आणवेदि (७१)।

इति निष्क्रान्तौ।

इति मृच्छकटिके अलङ्कारन्यासो (ख) नाम प्रथमोऽङ्कः।

(७१) यथा भवान् आज्ञापयति।

इतस्ततः धावन्ति, वस्तुना प्रतारणा, अस्मान् प्रतार्य्य यथा वसन्तसेनाया अलङ्कारास्चौरैर्न ह्रियन्ते तथा अवहितैः स्यातव्यमित्यर्थः हि यतः शर्वरी रात्रिः बहुदोषा बहवः दोषाः यस्यां सा, रात्रौ एव दुर्जनाः बहूणि गर्हितानि कार्य्याणि कुर्वन्तीति भावः।

(ख) अलङ्कारन्यासः अलङ्काराणां वसन्तसेनाया इति यक्तव्यं न्यासः निक्षेपः यत्रेति।

# द्वितीयोऽङ्कः।

प्रविश्य चेटी। अत्ताए अज्जआसआसं सन्देसेण पेसिदह्मि। ता जाव पविसिअ अज्जआ सआसं गच्छामि। परिक्रम्यावलोक्य च। एसा अज्जआ, हिअएण किंपि आलिहन्ती चिट्ठदि। ता जाव उपसप्पामि(१)।

ततः प्रविशति आसनस्था सोत्कण्ठा वसन्तसेना मदनिका च।

वस। हञ्जे! तदो तदो? (२)।

चेटी। अज्जए! ण किंपि मन्तेसि। किं तदो तदो? (३)

वस। किं मए भणिदं? (४)।

चेटी। तदो तदो (५)।

वस। सभ्रूक्षेपम्। आं एव्वं (६) (क)।

(१) माता आर्य्यासकाशं सन्देशेन प्रेषितास्मि। तत् यावत् प्रविश्य आर्य्या सकाशं गच्छामि। एषा आर्य्या, हृदयेन किमप्यालिखन्ती तिष्ठति। तत् यावत् उपसर्पामि।

(२) चेटि! ततस्ततः?

(३) आर्य्ये! न किमपि मन्त्रयसि। किं ततस्ततः?

(४) किं मया भणितम्?

(५) ततस्तत इति।

(६) आं एवम्।

---

(क) आं एव्वं इत्यस्य आ एवमिति संस्कृतं साधुतया सङ्गच्छते आं इति स्मरणार्थमव्ययं मुग्धबोधे तथा दर्शनात्।

उपसृत्य प्रथमा चेटी। अज्जए! अत्ता आदिसदि, ण्हादा भविअ देवदाणं पूअं णिव्वत्तेहि त्ति (७)।

वध। हञ्जे। विण्णवेहि अत्तं, अज्ज ण ण्हाइस्सं, ता बम्हणो ज्जेव पूअं णिव्वत्तेदु त्ति (८)।

चेटी। जं अज्जआ आणवेदि(९)। इति निष्क्रान्ता।

मद। अज्जए! सिणेहो पुच्छदि, ण पुरोभाइदा, (ख) ता किं णेदं (१०)।

वध। मदणिए! केरिसिं मं पेक्खसि? (११)।

मद। अज्जआए सुण्णहिअअत्तणेण जाणामि, हिअअ-गदं कंपि अज्जआ अहिलसदि त्ति (१२)।

(७) आर्ये! माता आदिशति, स्नाता भूत्वा देवतानां पूजां निर्वर्त्तयेति।

(७) चेटि! विज्ञापय मातरम्, अद्य न स्नास्यामि। तद् ब्राह्मण एव पूजां निर्वर्त्तयत्विति।

(९) यत् आर्य्या आज्ञापयति।

(१०) आर्य्ये! स्नेहः पृच्छति, न पुरोभागिता, तत् किं न्विदम्?

(११) मदनिके! कीदृशी मां प्रेक्षसे?

(१२) आर्य्यायाः शून्यहृदयत्वेन जानामि, हृदयगतं कमपि आर्य्याभिलषतीति।

(ख) पुरोभागिता दोषमात्रदर्शित्वं दोषानुसन्धानार्थमेव पृच्छा नेत्यर्थः दोषैकदृक् पुरोभागीत्यमरः।

वसु। सुट्ठु तुए जाणिदं। परहिअअग्गहणपण्डिआ मदणिआ क्खु तुमं(१३)।

मद। पिअं मे पिअं। कामो क्खु णाम एसो भअवं अनुगहिदो महूसवो(ग) तरुणजणस्स। ता कधेदु अज्जआ, किं राआ, राअवल्लहो वा सेवीअदि? (१४)।

वसु। हञ्जे! रमिदुमिच्छामि, ण सेविदुं (१५)।

मद। विज्जाविसेसालङ्किदो किं कोवि बम्हणो जुआ कामीअदि? (१६)।

वसं। पूअणीओ मे बम्हणो जणो (१७)।

मद। किं, अणेअ णअराहिगमणजणिदविहववित्थारो वाणिअजुआ वा कामीअदि? (१८)।

---

(१३) सुष्ठु त्वया ज्ञातं, परहृदयग्रहणपण्डिता मदनिका खलु त्वम्।

(१४) प्रियं मे प्रियं, कामः खलु नाम एष भगवान् अनुगृहीतो महोत्सवस्तरुणजनस्य, तत्कथयतु आर्या, किं राजा, राजवल्लभो वा सेव्यते?

(१५) चेटि! रन्तुमिच्छामि, न सेवितुम्।

(१६) विद्याविशेषालङ्कृतः किं कोऽपि ब्राह्मणो युवा काम्यते?

(१७) पूजनीयो मे ब्राह्मणो जनः।

(१८) किम् अनेकनगराभिगमनजनितविभवविस्तारो वाणिजयुवा वा काम्यते?

---

(ग) अनुगृहीतः आर्ययेति शेषः, महोत्सवः महान् उत्सवः आनन्दस्वरूप इति कर्मधारयः। अथवा महान् उत्सवो यस्मादिति बहुव्रीहिः।

मद। अज्जए! किं ओणकुसुमं सहआरपादवं महु-अरीओ (छ) उण सेवन्ति? (३२)।

वस। अदोज्जेव ताओ महुअरीओ वुच्चन्ति(३३)।

मद। अज्जए! जइ सो मणोसिदो, (ज) ता कीस दाणिं सहसा ण अहिसारीअदि? (३४)।

वस। हञ्जे! सहसा अहिसारिअन्तो पच्चुअआरदुब्बलदाए, मा दाव, जणो दुल्लहदंसणो पुणो भविस्सदि(३५)।

मद। किं अदोज्जेव सो अलङ्कारओ तस्स हत्थे णिक्खित्तो? (३६)।

वस। हञ्जे! सुट्ठु दे जाणिदं (३७)।

(३२) आर्य्ये! किं हीनकुसुमं सहकारपादपं मधुकर्य्यः पुनः सेवन्ते?

(३३) अतएव ता मधुकर्य्यः उच्यन्ते।

(३४) आर्य्ये! यदि स मनोषितस्तत् किमर्थमिदानीं सहसा नाभिसार्य्यते?

(३५) चेटि! सहसा अभिसार्य्यमाणः प्रत्युपकारदुर्बलतया, मा तावत्, जनो दुर्लभदर्शनः पुनर्भविष्यति।

(३६) किम् अतएव सोऽलङ्कारस्तस्य हस्ते निक्षिप्तः?

(३७) चेटि! सुष्ठु त्वया ज्ञातम्।

(छ) मधु कुर्वन्तीति मधुकर्य्यः पुष्परसस्यैव मधुरूपेण परिणमनात् पुष्पाभावे कथं तासां तादृशतरो प्रवृत्तिरिति भावः।

(ज) मनोषितः वाञ्छितः।

नेपथ्ये। अले भट्टा! (झ) दशसुवस्साह (ञ) लुद्धु जूदकाल पपलीणु पपलीणु। ता गेह्ल गेह्ल, चिट्ठ चिट्ठ, दूलात् पदिट्ठोसि (३८)।

प्रविश्य अपटीक्षेपेण संभ्रान्तः संवाहकः (ट)।

कष्टे एष्ये जुदिअलभावे। हीमाणहे! णवबन्धणमुक्काए विअ गद्दहीए हा! ताड़िदोम्हि गद्दहीए, अङ्गलाअमुक्काए (ठ) शत्तीए घडुक्को विअ घादिदोम्हि शत्तीए।

---

(३८) अरे भट्टारक! दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायितः, तद् गृहाण गृहाण, तिष्ठ तिष्ठ, दूरात् प्रदृष्टोऽसि।

---

(झ) नेपथ्ये अरे भट्टा इत्यादि। अत्र चिट्ठ चिट्ठ इति पाठः प्रामादिकः। पदिट्ठोसीत्यत्र पदिश्शदे इति पाठः वक्ष्यते प्रदृश्यते इति स०।

(ञ) दशसुवर्णस्य दशानां सुवर्णानां अशीतिरक्तिकपरिमितानां स्वर्णानां समाहारः दशसुवर्णं तस्य सम्बन्धविवक्षया निमित्तार्थे षष्ठीति बोध्यं दशसुवर्णस्य पणीकृतसुवर्णदशकस्य कृते इत्यर्थः।

(ट) अपटीक्षेपेण पट्याः जवनिकायाः क्षेपः पटीक्षेपः स न भवतीति अपटीक्षेपः तेन पटीक्षेपमन्तरेणेत्यर्थः तस्य संभ्रान्तत्वादिति भावः। संवाहकमाथुरौ नाम द्यूतकरौ, द्यूतसभाध्यक्षः अपरः स एव द्यूतकराणां प्रभुरित्यतः भट्टारकेति तत्सम्बोधनम्।

(ठ) कष्ट एष इत्यादि ताड़ितोऽस्मि गर्दभ्या पणीभूतदशसुवर्णरूपया शक्त्या शृङ्खिरूपया गर्दभ्या वतृस्वरूपया इत्यर्थः। भारवाहित्वसाधर्म्यादिति भावः। अङ्गराजमुक्तया अङ्गराजेन कर्णेन मुक्तया निक्षिप्तया शक्त्या अस्त्रविशेषेण।

लेखअवावडहिअअं सहिअं दुट्ठु झत्ति पब्भट्टे ।
एण्हिं मग्गणिवडिदे, कंण्णु खु सलणं पवज्जामि ॥ १ ॥
ता जाव एदे सहिअ जूदिअला (ड) अण्णदो मं अण्णेसन्ति, ताव हगे विप्पड़ीवेहिं पादेहिं एदं सुण्णदेउलं पविसिअ, देवीभविस्सं (२८) ।

बहुविधं नाट्यं कृत्वा तथा स्थितः, ततः प्रविशति
माथुरो द्यूतकरश्च (ढ) ।

---

(२८) कष्ट एष द्यूतकरभावः, आश्चर्यं, नववन्धनमुक्तया इव गर्द्दभ्या हा ! ताड़ितोऽस्मि गर्द्दभ्या, अङ्गराजमुक्तया शक्त्या घटोत्कच इव घातितोऽस्मि शक्त्या ।

लेखकव्यापृतहृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः ।
इदानीं मार्गनिपतितः कं नु खलु शरणं प्रपद्ये ॥
तत् यावत्, एतौ सभिकद्यूतकरौ अन्यतो मामन्विष्यतः, तावत् हतो विप्रतीपाभ्यां पादाभ्यामेतत् शून्यं देवकुलं प्रविश्य, देवीभविष्यामि ।

---

(१) लेखकव्यापृतहृदयं लेख एव लेखकः तस्मिन् व्यापृतं हृदयं येन तादृशे कस्मिंश्चित् लेखनकर्मणि व्यासक्तमित्यर्थः सभिकं द्यूताध्यक्षं वीक्ष्य प्रभ्रष्टः पलायितः अहमिति शेषः कं नु खलु शरणम् आश्रयं रक्षितारमिति यावत् प्रपद्ये प्राप्स्यामि । अत्र गाथाच्छन्दः ।

(ड) सभिकद्यूतकरावित्यत्र सभिकमाथुराविति पाठः समीचीनः । विप्रतीपाभ्यां विकृताभ्यां पादाभ्यां देवप्रतिमारूपं भूत्वा स्थास्यामीत्यर्थः ।

(ढ) ततः प्रविशति माथुरो द्यूतकरश्चेत्यत्र सभिको माथुरश्च इति पाठः साधुः ।

माथुरः। अले भट्टा! दशसुवण्णाह लुद्ध जूदकल पपलीअ पपलीअ, गेह्ण गेह्ण, चिट्ठ चिट्ठ। दूलात् पदिट्टोसि (४०)।

दूतः। जइ वज्जसि पाआलं, इन्दं शलणं च सम्पदं जासि।
सहिअं वज्जिअ एक्कं, रुद्दो विण रक्खिदुं तरइ (४१)॥२॥

माथुरः। कहिं कहिं सुसहिअविप्पलम्भआ!
पलासि? ले! भअपलिवेविदङ्गआ।
पदे पदे समविसमं खलन्तआ!
कुलं, जसं, अइकसणं कलेन्तआ (४२)॥३॥

---

(४०) अरे भट्टारक! दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायित गृहाण गृहाण, तिष्ठ तिष्ठ, दूरात् प्रदृष्टोऽसि।

(४१) यदि व्रजसि पातालम्, इन्द्रं शरणञ्च साम्प्रतं यासि।
सभिकं वर्ज्जयित्वा एकं रुद्रोऽपि न रक्षितुं तरति॥

(४२) कुत्र कुत्र सुसभिकविप्रलम्भक!
पलायसे? रे! भयपरिवेपिताङ्गक!
पदे पदे समविषमं स्खलन्
कुलं यशः अतिकृष्णं कुर्व्वन्॥

---

(क) अले भट्टेति पूर्ववत् पाठः। एवं यत्र यत्र द्यूतकरोक्तिस्तत्र माथुरस्येति बोध्यं माथुर इत्यत्र सभिक इति पाठोऽवगन्तव्यः।

(२) यदि व्रजसीति। तरति समर्थो भवति। अत्र गाथाच्छन्दः।

(३) कुत्र कुत्रेति। सुसभिकस्य सरलव्यवहारिणः सभिकस्य विप्रलम्भक! प्रतारक! अतिकृष्णम् अतिमलिनम् अकार्य्यकरणे अकीर्त्तेरवश्यम्भावादिति भावः। अत्र रुचिरावृत्तं "जभौ सजौगितिरुचिरा चतुर्ग्रहैः" इति तल्लक्षणात्।

दूत। पदं वीक्ष्य। एसो वजद, इअं पणट्टा पदवी (४३) (त)।

माथु। आलोक्य सवितर्कम्। अले! विप्पदीवु (थ) पादु, पडिमाशुसु देउलु। विचिन्त्य। धुत्तु जूदकरु विप्पदीवेहिं पादेहिं देउलं पविट्ठो (४४)।

दूत। ता अणुसरेम्ह (४५)।

माथु। एव्वं भोदु (४६)।

उभौ देवकुलप्रवेशं निरूपयतः दृष्ट्वा अन्योऽन्यं संज्ञाप्य (द)।

दूत। कधं कट्टमयी पडिमा (४७)।

माथु। अले! णहु णहु, शैलपडिमा। इति बहुविधं चालयति संज्ञाप्य च। एव्वं भोदु, एहि जूदं किलेम्ह। (४८) बहुविधं द्यूतं क्रीड़ति।

(४३) एष व्रजति, इयं प्रनष्टा पदवी।

(४४) अरे! विप्रतीपौ पादौ, प्रतिमाशून्यं देवकुलं धूर्त्तो द्यूतकरो विप्रतीपाभ्यां पादाभ्यां देवकुलं प्रविष्टः।

(४५) ततोऽनुसरावः।

(४६) एवं भवतु।

(४७) कथं काष्ठमयी प्रतिमा।

(४८) अरे न खलु न खलु, शैलप्रतिमा। एवम्भवतु, एहि द्यूतेन क्रीडावः।

(त) इयं प्रनष्टा पदवी इयं पदवी पादचिह्नं प्रनष्टा विपरीता।

(थ) विप्रतीपौ विपरीतौ।

(द) संज्ञाप्य सङ्केतं कृत्वा।

संवा। द्यूतेच्छाविकारसंवरणं बहुविधं कृत्वा स्वगतम्। अले!

कत्ताशद्दे णिस्साणअश्श हलइ हडकं मणुश्शश्श।

ढक्काशद्देव्व णडाधिवश्श पब्भट्टलज्जश्श॥ ४॥

जाणामि ण कोलिश्शं, शुमेलुशिहलपडणशंणिहजूदं!

तह वि हु कोइलमहुले कत्ताशद्दे मणं हलदि (४६)॥५॥

द्यूत। मम पाठे, मम पाठे (५०) (ध)।

माथु। ण हु, मम पाठे, मम पाठे (५१)।

---

(४६) अरे! कत्ताशब्दो निष्णानकस्य हरति हृदयं मनुष्यस्य।

ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य।

जानामि न क्रीड़िष्यामि, सुमेरुशिखरपतनसन्निभं द्यूतम्।

तथापि खलु कोकिलमधुरः कत्ताशब्दो मनो हरति।

(५०) मम पाठे, मम पाठे।

(५१) न खलु मम पाठे मम पाठे।

---

(४) कत्ताशब्दः कत्ता द्यूतक्रीड़ा कृपवन्त्यर्थक कद्धातोः क्विप-प्रत्ययेन निष्पन्नात् कदिति शब्दात् भावे तप्रत्ययस्ततः स्त्रीत्वम्। तस्याः शब्दः ध्वनिविशेषः निष्णानकस्य नाणकरहितस्य निर्धनस्येति यावत्। प्रभ्रष्टराज्यस्य राज्यच्युतस्य महोत्सवकार्येषु धनिनां ढक्कावाद्यं प्रचरति निर्धनस्य नृपतेस्तत्कार्यकरणाक्षमत्वात् स्वपरब्धे तच्छब्दश्रवणमतीव-क्लेशावहमिति भावः। अत्र विपुलावृत्तं

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।

यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति॥

(५) सुमेरोः पर्वतस्य शिखरात् पतनेन सन्निभा उपमा यस्य तत् अतिभयङ्करमित्यर्थः। अत्रापि विपुलावृत्तम्।

(ध) पाठे इति द्यूतक्रीड़ोक्तिविशेषः।

संवा। अन्यतः समुत्सोपवल्य। णं मम पाठे (५२)।

द्यूत। लद्धे गोह्हे (५३)।

माथु। गृहीत्वा। अले प्रेदण्डा! (न) गहीदोसि, पअच्छ तं दसुवण्णं (५४)।

संवा। अज्ज दद्दश्शं (५५)।

माथु। अहुणा पअच्छ(५६)।

संवा। दद्दश्शं, पशादं कलेहि (५७)।

माथु। अले! णं संपदं पअच्छ (५८)

संवा। शिलु पड़दि (५९) (प)।

इति भूमौ पतति। उभौ बहुविधन्ताड़यतः।

माथु। एसु तुमं हु जूदिअरमण्डलीए बद्धोसि (६०)।

(५२) ननु! मम पाठे।

(५३) लब्धः पुरुषः।

(५४) अरे लुप्तदण्डक! गृहीतोऽसि, प्रयच्छ तद्दशसुवर्णम्।

(५५) अद्य दास्यामि।

(५६) अधुना प्रयच्छ।

(५७) दास्यामि, प्रसादं कुरु।

(५८) अरे! ननु साम्प्रतं प्रयच्छ।

(५९) शिरः पतति।

(६०) एष त्वं खलु द्यूतकरमण्डल्या बद्धोऽसि।

---

(न) लुप्तदण्डक लुप्तं दण्डकं पणीकृतं द्रव्यं येन तत् सम्बुद्धौ।

(प) पतति विघूर्णायते।

संवा। उत्थाय सविषादम्। कधं जूदिअलमण्डलीए बद्धोम्हि। ही! एसे अम्हाणं जूदिअलाणं अलङ्घणीए समए, (फ) ता कुदो दइस्सं (६१)।

माथु। अले! गण्डु (ब) कुलु कुलु (६२)।

संवा। एव्वं कलेमि। द्यूतकरमुपसृत्य। अद्धं ते देमि, अद्धं मे मुञ्चदु (६३)।

द्यूत। एव्वं भोदु (६४)।

संवा। सभिकमुपगम्य। अद्धस्स गण्डु कलेमि अद्धं पि मे अज्जो मुञ्चदु (६५)

माथु। को दोसु, एव्वं भोदु (६६)।

संवा। प्रकाशम्। अज्ज! अद्धे तुए मुक्के? (६७)।

माथु। मुक्के (६८)।

---

(६१) कथं द्यूतकरमण्डल्या बद्धोऽस्मि। कष्टम्! एषोऽस्माकं द्यूतकराणाम् अलङ्घनीयः समयः; तस्मात् कुतो दास्यामि।

(६२) अरे! गण्डः क्रियतां क्रियताम्।

(६३) एवं करोमि। अर्द्धं तुभ्यं ददामि, अर्द्धं मे मुञ्चतु।

(६४) एवमस्तु।

(६५) अर्द्धस्य गण्डं करोमि, अर्द्धमपि मे आर्यो मुञ्चतु।

(६६) को दोषः, एवमस्तु।

(६७) आर्य! अर्द्धं त्वया मुक्तम्?

(६८) मुक्तम्।

---

(फ) समयः नियमः।

(ब) गण्डः समयः।

संवा। द्यूतकरं प्रति। अह्ने तुए बि मुक्के ? (६९)।

द्यूत। मुक्के (७०)।

संवा। सम्पदं गमिश्शं (७१)।

माथु। पअच्छ तं दशसुवस्सं, कहिं गच्छसि ?(७२)।

संवा। पेक्खध पेक्खध भट्टालआ! हा! सम्पदं ज्जेव एक्काह अह्ने गन्धु कडे, अवलाह अह्ने मुक्के, तहवि मं अवलं (भ) सम्पदं ज्जेव मग्गदि (७३)।

माथु। ग्रहीत्वा। धुत्त! माथुरु अहं णिउणु, एत्थ ण अहं धुत्तिज्जामि, ता, पअच्छ तं पेदण्डआ! सव्वं सुवस्सं सम्पदं (७४)।

संवा। कुदो ददश्शं ? (७५)

माथु। पिदरं विक्किणिअ पअच्छ (७६)।

---

(६९) अर्द्धं त्वयापि मुक्तम् ?

(७०) मुक्तम्।

(७१) साम्प्रतं गमिष्यामि।

(७२) प्रयच्छ तं दशसुवर्णम्। कुत्र गच्छसि ?

(७३) प्रेक्षध्वं भट्टारकाः! हा! साम्प्रतमेव एकस्य अर्द्धं गण्डः कृतः, अपरस्य अर्द्धं मुक्तम्, तथापि मामबलं साम्प्रतमेव याचते।

(७४) धूर्त्त! माथुरोऽहं निपुणः, अत्र नाहं धूर्त्तयामि। तत् प्रयच्छ तं लुप्तदण्डक! सर्वं सुवर्णं साम्प्रतम्।

(७५) कुतो दास्यामि ?

(७६) पितरं विक्रीय प्रयच्छ।

---

(भ) अवलं अयत्नम्।

संवा। कुदो मे पिदा? (७७)।

माथु। मादरं विक्किणिअ पअच्छ (७८)।

संवा। कुदो मे मादा? (७९)।

माथु। अप्पाणं विक्किणिअ पअच्छ (८०)।

संवा। कलेध पशादं। णेध मं लाजमग्गं (८१)।

माथु। पसरु (८२) (म)।

संवा। एव्वं भोदु। परिक्रामति। अज्जा! किणिध मं इमश्श शहिअश्श हत्थादो दशेहिं शुवस्केहिं। दृष्ट्वा आकाशे। किं भणाध? किं कलइश्शशि त्ति? गेहे दे कम्मकले हुविश्शं। कधं! अदइअ पड़िवअणं गदे! भोदु, एव्वं इमं अस्सं भणइस्सं। पुनस्तदेव पठति। कधं, एशे वि मं अवधीलिअ (य) गदे। आः! अज्ज-चालुदत्तस्स विहवे (र) विहड़िदे एशे वढ्ढामि मंदभाए (८३)।

---

(७७) कुतो मे पिता?

(७८) मातरं विक्रीय प्रयच्छ।

(७९) कुतो मे माता?

(८०) आत्मानं विक्रीय प्रयच्छ।

(८१) कुरुत प्रसादं नयत मां राजमार्गम्।

(८२) प्रसर।

(८३) एवमस्तु। आर्य्याः! क्रीणीध्वं माम्, अस्य सभिकस्य हस्तात् दशभिः सुवर्णकैः। किं भणत? किं करिष्यसीति? गेहे ते

---

(म) प्रसर चल।

(य) अवधीर्य्य अवज्ञाय।

(र) विघटिते नष्टे वर्त्ते जीवामि।

माथु। णं देहि (८४)।

संवा। कुदो दइस्सं ? (८५)। इति पतति। माथुरः कर्षति।

संवा। अज्जा ! पलित्ताअध, पलित्ताअध (८६)।

ततः प्रविशति दर्दुरकः।

दर्दु। भो ! द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्।

न गणयति पराभवं कुतश्चित्,
हरति ददाति च नित्यमर्थजातम्।
नृपतिरिव निकाममायदर्शी
विभववता समुपास्यते जनेन॥ ६॥

अपिच,

कर्मकरो भविष्यामि। कथम्, अदत्त्वा प्रतिवचनं गतः। भवत्वेवम् इमम् अन्यं भणिष्यामि। कथम् एषोऽपि मामवधीर्य्य गतः ! आः ! आर्य्य चारुदत्तस्य विभवे विघटिते एषोऽहं वर्त्ते मन्दभाग्यः।

(८४) ननु देहि।

(८५) कुतो दास्यामि ?

(८६) आर्य्याः ! परित्रायध्वं परित्रायध्वम्।

---

(६) नेति। कुतश्चित् कस्मादपि पराभवं न गणयति न तर्कयति। नित्यं सततं अर्थजातं हरति ददाति च। आयदर्शी आयवान् धन-सम्पन्न इत्यर्थः नृपतिरिव विभववता सम्पत्तिशालिना जनेन। निकामं सम्यक् यथा तथा समुपास्यते सेव्यते द्यूतमिति शेषः सर्वत्र। पुष्पिताग्रा वृत्तम्।

द्रव्यं लब्धं द्यूतेनैव, दारामित्रं द्यूतेनैव।
दत्तं भुक्तं द्यूतेनैव, सर्वं नष्टं द्यूतेनैव॥ ७॥

अपिच,

त्रेता हृतसर्वस्वः, पावर पतनाच्च शोषित-शरीरः।
नर्द्दित-दर्शित-मार्गः, कटेन विनिपातितो यामि॥८॥

अग्रतोऽवलोक्य। अयमस्माकं पूर्वसभिको माथुर इत एवाभिवर्त्तते। भवतु, अपक्रमितुं (क) न शक्यते। तदवगुण्ठयाम्यात्मानम्। बहुविधं नाट्यं कृत्वा स्थितः। उत्तरीयं निरीक्ष्य।

अयं पटः सूत्रदरिद्रतां गतो,
ह्ययं पटश्छिद्रशतैरलङ्कृतः।
अयं पटः प्रावरितुं न शक्यते,
ह्ययं पटः संवृत एव शोभते॥ ९॥

---

(७) द्रव्यमिति। द्यूतेन एव द्रव्यं धनं दारा प्रियः मित्रञ्च लब्धं द्यूतेन एव दत्तं भुक्तं तथा सर्वं नष्टञ्च। अत्र विद्युन्माला छन्दः। "मोमो गोगो विद्युन्माला" इति तल्लक्षणात्।

(८) त्रेतेति। त्रेता नर्द्दितकटशब्दैः द्यूतक्रीड़ान्तर्गतव्यापारविशेषा बोद्धव्याः। पावरशब्देन द्यूतक्रीड़ार्थगुटिका उच्यते। तथाहि त्रेतया हृतं सर्वं स्वं यस्य तादृशः पावरस्य पतनात् शोषितं शरीरं यस्य सः नर्द्दितेन दर्शितः मार्गः क्रीड़ाकौशलं येन तथाभूतः तथा कटेन विनिपातितः विशेषेण विध्वंसितः सन् यामि पलाये इत्यर्थः। अत्र आर्य्याच्छन्दः।

(क) अपक्रमितुं पलायनं कर्त्तुं अवगुण्ठयामि उत्तरीयेण आहृणोमि।

(९) अयमिति। अयं पटः उत्तरीयं सूत्रदरिद्रतां सूत्रहीनतां

अथवा किमयं तपस्वी (व) करिष्यति। यो हि;

पादेनैकेन गगने द्वितीयेन च भूतले।

तिष्ठाम्युल्लम्बितस्तावद्यावत्तिष्ठति भास्करः॥ १०॥

माथु। दापय दापय।

संवा। कुदो देइस्सं ? (८७)। माथुरः कर्षति।

दर्दु। अये! किमेतदग्रतः। आकाशे। किं भवानाह ? अयं द्यूतकरः सभिकेन (श) खलीक्रियते, न कश्चिन्मोचयति ? नन्वयं दर्दुरो मोचयति। उपसृत्य। अन्तरमन्तरम् (ष) दृष्ट्वा। अये! कथं माथुरो धूर्त्तः। अयमपि तपस्वी संवाहकः।

(८७) कुतो दास्यामि।

गतः प्राप्तः जालवद्दलिततन्तुनिर्मितत्वादिति भावः। अयं पटः छिद्रशतैः बहुभिश्छिद्रैः अलङ्कृतः शोभितः जीर्णत्वादिति भावः, सुतरां अयं पटः प्रावरितुं आच्छादयितुं न शक्यते, हि निश्चितं संहतः पिण्डीकृत एव शोभते। वंशस्थविलवृत्तं, "वदन्ति वंशस्थविलं जतौ जरौ" इति तल्लक्षणात्।

(व) तपस्वी वराकः निर्दोषः अधमः इति वा अयमिति आत्मनिर्देशः दर्दुरकः किं करिष्यति करोतु इत्यर्थः।

(१०) पादेनेति। यः अहं यावत् भास्करः सूर्यः तिष्ठति सूर्यास्तगमनपर्य्यन्तमित्यर्थः एकेन पादेन गगने आकाशे, द्वितीयेन पादेन भूतले उल्लम्बितः ऊर्द्ध्वात् लम्बितः सन् तिष्ठामि, एवं कृते कोऽपि मां न स्पृशति, ततो रजन्यां पलायिष्ये इति भावः। अनुष्टुप्छन्दः।

(श) खलीक्रियते क्लिश्यते।

(ष) अन्तरम् अवकाशः दीयतामिति शेषः।

यस्तब्धं दिवसान्तमानतशिरा नास्ते समुल्लम्बितो,
यस्योद्घर्षणलोष्टकैरपि सदा पृष्ठे न जातः किणः ।
यस्यैतच्च न कुक्कुरैरहरहर्जङ्घान्तरं चर्व्यते,
तस्यात्यायतकोमलस्य सततं द्यूतप्रसङ्गेन किम् ॥ ११ ॥

भवतु, माथुरं तावत् सान्त्वयामि। उपगम्य। माथुर ! अभिवादये ।

माथु । प्रत्यभिवादये ।

दर्दु । किमेतत् ?

माथु । अअं दशसुवण्णं धालेदि (८८) ।

दर्दु । ननु ! कल्यवर्त्तमेतत् ।

(८८) अयं दशसुवर्णकं धारयति

(११) य इति । यः संवाहकः समुल्लम्बितः ऊर्द्ध्वात् लम्बितः सुतरां नतशिराः सन् दिवसान्तं दिवावसानपर्य्यन्तं स्तब्धं निश्चलं यथा तथा न आस्ते न तिष्ठति अहमिवेति वक्तव्यम्, उद्घर्षणलोष्टकैः उद्घर्षणस्य प्रहारविशेषस्य लोष्टकैः तत्साधनीभूतलोष्ट्रैरित्यर्थः यस्य संवाहकस्य ममेवेति वक्तव्यं पृष्ठे किणः मालिन्यचिह्नं न जातः द्यूते पणीकृततादृशे तथा क्रियते इति भावः । यस्य च संवाहकस्य ममेवेति अत्रापि योज्यम् । जङ्घान्तरं कुक्कुरैः अहरहः प्रतिदिनं न चर्व्यते, कुक्कुरसदृशैरपरैर्द्यूतकरैः सर्वाङ्गं क्षतविक्षतं क्रियते इति भावः । अत्यायतकोमलस्य अति मृदुनः एतादृशक्लेशासहिष्णोरिति भावः तस्य संवाहकस्य सततं द्यूतप्रसङ्गेन किं न किमपि फलमित्यर्थः, द्यूतप्रसक्तौ यत्परो नास्ति क्लेश इति सन्दर्भार्थः । शार्दूलविक्रीडितं वृत्तम् ।

माथु। दर्दुरस्य कक्षातलमुपढौकितं पटमाकर्षन्। भट्टा! पश्चत, पश्चत, जज्जरपड्प्पाबुदो अश्चं पुलिसो दृशसुवस्सं कल्लवत्तं भणादि (८६)।

दर्दु। अरे मूर्ख! नन्वहं दृशसुवर्णान् कटकरणेन(स) प्रयच्छामि। तत् किं, यस्यास्ति धनं स किं क्रोड़े कृत्वा दर्शयति? अरे!

दुर्वर्णोऽसि विनष्टोऽसि दृशस्वर्णस्य कारणात्।

पञ्चेन्द्रियसमायुक्तो नरो व्यापाद्यते त्वया॥ १२॥

माथु। भट्टा! तुए दृशसुवस्सु कल्लवत्तु, मए एसु विहवु (९०)।

दर्दु। यद्येवं श्रूयतां, तर्हि अन्यान् तावद्दश सुवर्णानस्यैव प्रयच्छ, अयमपि द्यूतं शीलयतु।

माथु। तत् किं भोदु? ((९१।

---

(८६) भट्टारकाः! पश्यत पश्यत, जर्ज्जरपटप्रावृतोऽयं पुरुषो दृशसुवर्णं कल्यवर्त्तं भणति।

(९०) भट्टारक! तव दृशसुवर्णः कल्यवर्त्तः, मम एष विभवः।

(९१) तत् किं भवतु?

---

(स) कटकरणेन कटस्य द्यूतविशेषस्य करणेन अनुष्ठानेन।

(१२) दुर्वर्ण इति। दृशस्वर्णस्य कारणात् अत्यल्पसामान्यधनस्य कारणादित भावः त्वया पञ्चेन्द्रियसमायुक्तः पञ्चभिरिन्द्रियैश्चक्षुरादिभिः समायुक्तः नरः मानवः व्यापाद्यते हन्यते अतस्त्वं दुर्वर्णः अतिहीनजातिः तथा विनष्टः स्वकर्मणैव हतोऽसि। अनुष्टुप्छन्दः।

दर्दु। यदि जेष्यति, तदा दास्यति।

माथु। अह ण जिणादि ? (८२)।

दर्दु। तदा न दास्यति।

माथु। अह ण जुत्तं जप्पिदुं (ह)। एव्वं अक्खन्तो तुमं पयच्छ, धुत्तआ ! अहं पि णाम माथुरु धुत्तु, जूदं मिथ्या आदंसआमि, अस्सम्ह वि अहं ण विभेमि। धुत्ता ! खण्डिअवुत्तो सि तुमं (८३)।

दर्दु। अरे ! कः खण्डितवृत्तः ?

माथु। तुमं क्खु खण्डिअवुत्तो (८४)।

दर्दु। पिता ते खण्डितवृत्तः। संवाहकसायकमित्तं संज्ञां ददाति।

माथु। गोसाविआपुत्ता ! णं एव्वं ज्जेव जूदं तुए सेविदं ? (८५)।

दर्दु। मया एवं द्यूतमासेवितम्।

---

(८२) अथ न जयति ?

(८३) अथ न युक्तं जल्पितुम्। एवमश्रमक्षं प्रयच्छ धूर्त्तक ! अहमपि नाम माथुरो धूर्त्तः, द्यूतं मिथ्या आदर्शयामि, अस्मादपि अहं न बिभेमि। धूर्त्त ! खण्डितवृत्तोऽसि त्वम्।

(८४) त्वं खलु खण्डितवृत्तः।

(८५) वेश्यापुत्र ! एवमेव द्यूतं त्वया सेवितम्।

---

(ह) जल्पितुं वक्तुं त्वयेति शेषः, अक्खन्तो इत्यस्य अक्षम इति संस्कृतं साधुतया प्रकृश्यते अक्षमः अवहन इत्यर्थः। आदर्शयामि अा सम्यक् दर्शयितुं शक्नोमीत्यर्थः खण्डितवृत्तः दुःशील इत्यर्थः।

माथु। दर्दुरस्य कच्चतन्तुग्रहीतं पटमाकृष्य। भट्टा! पश्शत, पश्शत, जज्जरपडप्पाबुदो अश्शं पुलिसो दशसुवस्सं कल्लवत्तं भणादि (८९)।

दर्दु। अरे मूर्ख! नन्वहं दशसुवर्णान् कटकरणेन (स) प्रयच्छामि। तत् किं, यस्यास्ति धनं स किं क्रोड़े कृत्वा दर्शयति? अरे!

दुर्वर्णोऽसि विनष्टोऽसि दशस्वर्णस्य कारणात्।
पञ्चेन्द्रियसमायुक्तो नरो व्यापाद्यते त्वया॥ १२॥

माथु। भट्टा! तुए दशसुवस्सु कल्लवत्तु, मए एसु विहवु (९०)।

दर्दु। यद्येवं श्रूयतां, तर्हि अन्यान् तावद्दश सुवर्णानस्यैव प्रयच्छ, अयमपि द्यूतं शीलयतु।

माथु। तत् किं भोदु? (९१)।

---

(८९) भट्टारकाः! पश्यत पश्यत, जर्ज्जरपटप्रावृतोऽयं पुरुषो दशसुवर्णं कल्यवर्त्तं भणति।

(९०) भट्टारक! तव दशसुवर्णः कल्यवर्त्तः, मम एष विभवः।

(९१) तत् किं भवतु?

---

(स) कटकरणेन कटस्य द्यूतविशेषस्य करणेन अनुष्ठानेन।

(१२) दुर्वर्ण इति। दशस्वर्णस्य कारणात् अत्यन्तसामान्यधनस्य कारणादिति भावः त्वया पञ्चेन्द्रियसमायुक्तः पञ्चभिरिन्द्रियैश्चक्षुरादिभिः समायुक्तः नरः मानवः व्यापाद्यते हन्यते अतस्त्वं दुर्वर्णः अतिहीनजातिः तथा विनष्टः स्वकर्मणैव हतोऽसि। अनुष्टुप्छन्दः।

दर्दु। यदि जेष्यति, तदा दास्यति।

माथु। अह ण जिणादि ? (८२)।

दर्दु। तदा न दास्यति।

माथु। अह ण जुत्तं जम्पिदुं (ह)। एव्वं अक्खन्तो तुमं पयच्छ, धुत्तआ ! अहं पि णाम माथुरु धुत्त, जूदं मिच्छा आदंसआमि, अस्सस्स वि अहं ण बिभेमि। धुत्ता ! खण्डिअवुत्तो सि तुमं (८३)।

दर्दु। अरे ! कः खण्डितवृत्तः ?

माथु। तुमं हु खण्डिअवुत्तो (८४)।

दर्दु। पिता ते खण्डितवृत्तः। संवाहकमपक्रमितं संज्ञां ददाति।

माथु। गोसाविआपुत्ता ! णं एव्वं ज्जेव जूदं तुए सेविदं ? (८५)।

दर्दु। मया एवं द्यूतमासेवितम्।

---

(८२) अथ न जयति ?

(८३) अथ न युक्तं जल्पितम्। एवमप्रयच्छन्त्वं प्रयच्छ धूर्त्तक ! अहमपि नाम माथुरो धूर्त्तः, द्यूतं मिथ्या आदर्शयामि, अश्वादपि अहं न बिभेमि। धूर्त्त ! खण्डितवृत्तोऽसि त्वम्।

(८४) त्वं खलु खण्डितवृत्तः।

(८५) वेश्यापुत्र ! एवमेव द्यूतं त्वया सेवितम्।

---

(ह) जल्पितं वक्तुं त्वयेति शेषः, अक्खन्तो इत्यस्य अक्षम इति संस्कृतं साधुतया सङ्गच्छते अक्षमः असहन इत्यर्थः। आदर्शयामि अा सम्यक् दर्शयितुं शक्नोमीत्यर्थः खण्डितवृत्तः दुःशील इत्यर्थः।

माथु। अले संवाहआ! पग्रच्छ तं दससुवखं (९६)।

संवा। अज्ज दइस्सं, दाव दइस्सं (९७) माथुरः कर्षति।

दर्दु। मूर्ख! परोक्षे खलीकर्त्तुं (घ)युज्यते, न ममाग्रतः खलीकर्त्तुम्।

माथुरः संवाहकमाकृष्य घोणायां(क)मुष्टिप्रहारं ददाति। संवाहकः सशोणितं मूर्च्छां नाटयन् भूमौ पतति। दर्दुरक उपसृत्य अन्तरयति(ख)। माथुरो दर्दुरं ताड़यति। दर्दुरो विप्रतीपं(ग) ताड़यति।

माथु। अले अले दुट्ट छिणालिआपुत्तअ! फलंपि पाविहसि (९८)।

दर्दु। अरे मूर्ख! अहं त्वया मार्गगत एव ताड़ितः, श्वो यदि राजकुले ताडयिष्यसि, तदा द्रक्ष्यसि।

माथु। एसु पेक्खिस्सं (९९)।

दर्दु। कथं द्रक्ष्यसि?

माथु। प्रसार्य्य चक्षुषी। एव्वं पेक्खिस्सं (१००)

---

(९६) अरे संवाहक! प्रयच्छ तत् दश सुवर्णम्।

(९७) अद्य दास्यामि, तावत् दास्यामि।

(९८) अरे अरे दुष्ट पुंश्चलीपुत्रक! फलमपि प्राप्स्यसि।

(९९) एष प्रेक्षिष्ये।

(१००) एवं प्रेक्षिष्ये।

---

(घ) खलीकर्त्तुं क्लेशयितुम्।

(क) घोणायां नासा निम्नभागे।

(ख) अन्तरयति अपसारयति।

(ग) विप्रतीपं अत्युत्कटमिति क्रियाविशेषणम्।

दर्दुरो माथुरस्य पांशुना चक्षुषी पूरयित्वा संवाहकस्यापक्रमितुं संज्ञां ददाति। माथुरोऽक्षिणी निरुध्य भूमौ पतति। संवाहकोऽपक्रामति।

दर्दु। स्वगतम्। प्रधानसभिको माथुरो मया विरोधितः। तस्मान्न युज्यते स्थातुम्। कथितश्च मम प्रियवयस्येन शर्विलकेन, यथा किल आर्य्यकनामा गोपालदारकः(घ) सिद्धादेशेन समादिष्टो राजा भविष्यतीति, सर्व्वश्चास्मद्विधो जनस्तमनुसरति, तदहमपि तत्समीपमेव गच्छामि। इति निष्क्रान्तः।

संवा। सत्रासं परिक्रम्य दृष्ट्वा। एशे कश्शवि अपलाबुदपक्खदुयालके गुहे, ता एत्थ पविशिश्शं। प्रवेशं रूपयित्वा वसन्तसेनामालोक्य। अज्जे! शलणागदेम्हि (१)।

वसं। अभअं सरणागदस्स, हञ्जे! ढक्केहि(ङ)पक्खदुआरअं (२)।

चेटी तथा करोति।

वसं। कुदो दे भअं? (३)।

---

(१) एतत्कस्यापि अपरावृतपक्षद्वारकं गेहं, तदत्र प्रविशामि। आर्य्ये! शरणागतोऽस्मि।

(२) अभयं शरणागतस्य, चेटि! पिधेहि पक्षद्वारकम्।

(३) कुतस्ते भयम्?

---

(घ) गोपालदारकः गोपतनयः।

(ङ) पिधेहि प्रावृणु।

संवा । अज्जे ! धणिकादो (४) ।

चेटी । हञ्जे ! सम्पदं अवावुणु(च) पक्खदुआरअं (५) ।

संवा । आत्मगतम् । कधं धणिकादो तुलिदं(छ) ग्रे भअ-
कालणं ! सुट्ठु क्खु एवं वुच्चदि ।

जे अत्तबलं जाणिअ भालं तुलिदं वहेइ माणुस्से ।
ताह खलणं ण जाअदि, ण अ कन्तालगदू विवज्जदि॥१२

एत्थ लक्खिदम्हि (६) ।

---

(४) आर्य्ये ! धनिकात् ।

(५) चेटि ! साम्प्रतम् अपावृणु पक्षद्वारकम् ।

(६) कथं धनिकात् तुलितम् अस्या भयकारणम् । सुष्ठु खलु
एवमुच्यते ।

य आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः ।
तस्य स्खलनं न जायते, न च कान्तारगतो विपद्यते ॥

अत्र लक्षितोऽस्मि ।

---

(च) अपावृणु, उद्घाटय इत्यर्थः ।

(छ) धनिकात् महाजनात् अस्याः भयकारणं तुलितं तुल्यं
ममेति शेषः ।

(१२) य इति । यः मनुष्यः आत्मबलं निजयोग्यतां ज्ञात्वा
विविच्य तुलितं सदृशं भारं वहति, तस्य स्खलनं पतनं न जायते न
भवति, स कान्तारगतोऽपि कान्तारो दुर्गमं वर्त्म कान्तारो वर्त्म दुर्गम-
मित्यमरः तं गतः अपि न विपद्यते न विपदमाप्नोति । अत्र य आत्म-
बलमिति । महाजनवाक्ये लक्षितः अपरैर्मद्दर्शनतयेति शेषः ।
अयुक्तिमनुसृत्य द्यूतक्रीडायां मम प्रवृत्तिरुचिता, तदविवेचनाद्देतु-
वशात् ममैतादृशी आपदिति भावः ।

माथु । अञ्चिपणी प्रसृत्य द्यूतकरं प्रति । अले ! देहि देहि (७) ।

द्यूत ! भट्टा ! जावच्चिअ अम्हे दद्दुरेण कलहाविदा, (ज) तावच्चिअ सो गोहो अवक्कन्तो (८) ।

माथु । तस्स जूदकलस्स मुट्टिप्पहालेण णासिका भग्गा आसि, ता एहि रुहिरपहं अणुसरेम्ह (९) अनुसृत्य ।

द्यूत । भट्टा ! वसन्तसेणागेहं पविट्टो सो (१०) ।

माथु । भूदाइं (झ) सुवस्साइं (११) ।

द्यूत । लाअउलं गदुअ णिवेदेम्ह (१२) ।

माथु । एस धुत्तो इदो णिक्कमिअ, अस्सत्त गमिस्सदि, ता उअरोधेणेव (ञ) गेह्ले म्ह (१३) ।

(७) अरे ! देहि देहि ।

(८) भर्त्तः ! यावदेव वयं दर्दुरेण कलहायिताः, तावदेव स पुरुषोऽपक्रान्तः ।

(९) तस्य द्यूतकरस्य मुष्टिप्रहारेण नासिका भग्ना आसीत् । तत् एहि रुधिरपथमनुसरावः ।

(१०) भर्त्तः ! वसन्तसेनागृहं प्रविष्टः सः ।

(११) भूतानि सुवर्णानि ।

(१२) राजकुलं गत्वा निवेदयावः ।

(१३) [illegible]धूर्त्त इतो निष्क्रम्य अन्यत्र गमिष्यति, तस्मादुपरोधेनैव गृह्णी[illegible]

---

([illegible]लहायिताः कृतकलहाः ।

([illegible]) भूतानि प्राप्तानीत्यर्थः वसन्तसेनायाः शरणागतवत्सलत्वात् शरणागतदेयधनं तयैव अवश्यं परिशोध्यमिति भावः ।

(ञ) उपरोधेन निरोधेन ।

संवा। अज्जए! शे दाणिं अणुक्कोशकिदेहिं(त) पदाणेहिं (२३)।

वसं। किं उवरदविहवो(थ) संवुत्तो? (२४)।

संवा। अणाचक्खिदेज्जेव कधं अज्जआए विसादं?(२५)।

वसं। किं एत्थ जाणीअदि, दुल्लहा गुणा विहवा अ, अपेएसु तड़ाएसु(द) बहुदरं उदअं भोदि (२६)।

चेटी। अज्ज! किं णामधेओ क्खु सो? (२७)।

संवा। अज्जे! के दाणिं तश्श भूदलमिअंकस्स णामं ण आणादि, शो क्खु शेट्ठिचत्तले पड़िवशदि, शलाहणिज्जणामधेए अज्जचालुदत्ते णाम(२८)।

वसं। सहर्षमासनादवतीर्य्य। अज्जस्स अत्तणकेरकं एदं

---

(२३) आर्य्ये! स इदानीम् अनुक्रोशकृतैः प्रदानैः।

(२४) किम् उपरतविभवः संवृत्तः?

(२५) अनाख्यातमेव कथमार्य्यया विज्ञातम्?

(२६) किमत्र ज्ञातव्यं, दुर्लभा गुणा विभवाश्च, अपेयेषु, तड़ागेषु बहुतरमुदकं भवति।

(२७) आर्य्य! किंनामधेयः खलु सः?

(२८) आर्य्ये! क इदानीं तस्य भूतल-मृगाङ्कस्य नाम न जानाति, स खलु श्रेष्ठिचत्वरे प्रतिवसति, श्लाघनीयनामधेय आर्य्य चारुदत्तो नाम।

---

(त) अनुक्रोशकृतैः अनुक्रोशः दया, तेन कृतानि तैः।

(थ) उपरतविभवः नष्टधनः।

(द) दुर्लभाः गुणा विभवाश्च एकत्रेति शेषः, तड़ागेषु जलाशयेषु।

गेहं, हञ्जे ! देहि से आसणं, तालवेण्टअं गेह्ण, परिस्समो अज्जस्स बाधेदि (२९)।

चेटी तथा करोति।

संवा। स्वगतम्। कधं ! अज्जचालुदत्तस्स णामग्गहणेण ईदिसे मे आदले ! साहु, अज्जचालुदत्तो ! साहु। पुहवीए तुमं एक्के जीवसि,(ध) सेस उण जणे ससदि। इति पादयोर्निपत्य। भोदु अज्जए ! भोदु। आसणे णिसीददु अज्जआ (३०)।

आसने समुपविश्य। अत्त ! कुदो सो धणिओ ? (३१)।

संवा। सक्कालधणे क्खु सज्जणे, काह ण होइ चलाचले धणे। जे पूइदुं पि आणादि, से पूआविसेसंपि आणादि(३२)॥१४॥

वसं। तदो तदो ? (३३)।

---

(२९) आर्य्यस्य आत्मीयम् एतद्गेहम्, चेटि ! देहि अस्य आसनं, तालवृन्तकं गृहाण, परिश्रम आर्य्यस्य बाधते।

(३०) कथम् आर्य्यचारुदत्तस्य नामसंकीर्त्तनेन ईदृशो मे आदरः ! साधु आर्य्य चारुदत्त ! साधु, पृथिव्यां त्वमेकोजीवसि, शेषः पुनर्जनः श्वसिति। भवतु आर्य्ये ! भवतु, आसने निषीदतु आर्य्या।

(३१) आर्य्ये ! कुतः स धनिकः ?

(३२) सत्कारधनः खलु सज्जनः कस्य न भवति चलाचलं धनम्।
यः पूजयितुमपि जानाति, सः पूजाविशेषमपि जानाति॥

(३३) ततस्ततः।

---

(ध) जीवसि जीवितकार्य्यं करोषि श्वसिति इथा प्राणितीत्यर्थः।

संवा। तदो, तेण अज्जेण अवित्ती परिचालके कदम्हि चालित्तावशेशे अ तस्सिं जूदोवजीविम्हि संवुत्ते। तदो, भाअधेअविसमदाए(न) दशसुवण्णअं जूदे हालिदं (२४)।

माथु। उच्छादिदोम्हि(प) मुसिदोम्हि(२५)।

संवा। एदे दे सहिअजूदिअला मं अणुसन्धअन्ति। अम्पदं सुणिअ अज्जआ पमाणं (२६)।

वसं। मदणिए! वासपादवविसंठुलदाए(फ) पक्खिणो इदो तदो वि आहिण्डन्ति। हञ्जे ता गच्छ एदाणं सहिअ-

---

(२४) ततस्तेन आर्य्येण अवृत्तिः परिचारकः कृतोऽस्मि, चारित्र्यावशेषे च तस्मिन् द्यूतोपजीव्यस्मि संवृत्तः। ततो भागधेयविषमतया दशसुवर्णं द्यूते हारितम्।

(२५) उत्सादितोऽस्मि, मुषितोऽस्मि।

(२६) एतौ तौ सभिकद्यूतकरौ मामनुसन्धत्तः, साम्प्रतं श्रुत्वा आर्य्या प्रमाणम्।

---

(न) अवृत्तिः वृत्तिर्वेतनं जीविकायां तद्रहितः। चारित्र्यावशेषे चरित्रमात्रशेषे निर्धने इत्यर्थः, भागधेयविषमतया भाग्यवैपरीत्येन दुरदृष्टतयेत्यर्थः।

(प) उत्सादितः अवसादं गमितः मुषितः चोरितः प्रतारित इत्यर्थः प्राप्तव्यधनप्राप्तौ नैराश्यादिति भावः।

(फ) वासपादपे वासवृक्षे विसंष्ठुलतया वस्तुमस्थिरतया सभिक-माथुरयोरागतयोर्दूरनिरीक्षणेन पश्चात् प्रकटीकृतेन भयसञ्चारादिति भावः।

जूदि अराणं, अग्गं अण्णो ज्जेव पडिबादेदि त्ति, इमं हत्था-भरणअं तुमं देहि(३७)। इति हस्तात्कटकमाकृष्य चेव्याः प्रयच्छति।

चेटी। गृहीत्वा। जं अज्जआ आणवेदि(३८)। इति निष्क्रान्ता।

माधु। उच्छादिदोम्हि, मुसिदोम्हि (३९)।

चेटी। जधा एदे उड्ढं पेक्खन्ति, दीहं णीससन्ति, विसूरअन्ति अ, अहिलङ्घन्ति(ब) अ दुआर-णिहिद-लोअणा, तधा तक्केमि, एदे दे सहिअ जूदिअरा हुविस्सन्ति। उपगम्य। अज्ज! बन्दामि (४०)।

माधु। सुहं तुए होदु (४१)।

चेटी। अज्ज! कदमो तुम्हाणं सहिओ? (४२)।

(३७) मर्दनिके! वामपाद-विसंष्ठुलतया पतिताः इतस्ततोऽपि आहिण्डन्ते। चेटि! तद्गच्छ, एतयोः सभिकद्यूतकरयोः, अयमार्य एव प्रतिपादयतीति, इदं हस्ताभरणं त्वं देहि।

(३८) यदार्या आज्ञापयति।

(३९) उत्सादितोऽस्मि मुषितोऽस्मि।

(४०) यथा एतौ ऊर्द्धं प्रेक्षेते, दीर्घं निश्वसितो खिद्येते च, अभिलपतश्च द्वारनिहितलोचनौ, तथा तर्कयामि, एतौ तौ सभिक-द्यूतकरौ भविष्यतः। आर्य्य! वन्दे।

(४१) सुखं तव भवतु।

(४२) आर्य्य! कतरो युवयोः सभिकः?

---

(ब) अभिलपतः परस्परमालपतः।

माथु ।

कस्स तुमं तणुमज्झे ! अहरेण रद-दट्ठ दुव्विणीदेण ।

जप्पसि मम्महवअणं, आलोअन्ती कड़क्खेण ॥ १४ ॥

णत्थि मम विहवो, अण्णत्त व्वज (४३) ।

चेटी । जइ ईदिसाइं णं मन्तेसि ता ण होसि जूदि-अरो ! अत्थि कोवि तुम्हाणं धारओ ? (४४)(भ) ।

माथु । अत्थि दम्मसुवस्सं धालेदि, किं तस्स ? (४५) ।

चेटी । तस्स कारणादो अज्जआ इमं हत्थाभरणं पड़िवादेदि । णहि, णहि,(म) सो ज्जेव पड़िवादेदि (४६) ।

---

(४३) कस्य त्वं ? तनुमध्ये ! अधरेण रतदष्टदुर्विनीतेन ।

जल्पसि मनोहरवचनम्, आलोकयन्ती कटाक्षेण ॥

नास्ति मम विभवः, अन्यत्र व्रज ।

(४४) यदि ईदृशानि ननु मन्त्रयसि, तदा न भवसि द्यूतकरः । अस्ति कोऽपि युष्माकं धारकः ?

(४५) अस्ति, दशसुवर्णं धारयति, किं तस्य ?

(४६) तस्य कारणात् आर्या इदं हस्ताभरणं प्रतिपादयति, नहि, नहि, स एव प्रतिपादयति ।

---

(१४) तनुमध्ये कृशोदरि ! रते सुरते दष्टः अतएव दुर्विनीतः दुर्दर्शनः तेन उपलक्षिता विशेषणे तृतीया ।

(भ) मन्त्रयसि कथयसि, तदेति शेषः, द्युतकरः आत्मनः निर्धनत्वं कदाचिदपि न प्रकाशयतीति भावः धारकः धारी खातक इत्यर्थः ।

(म) नहि नहीति वसन्तसेनाया औदार्यख्यापनार्थम् आत्मगौरवराहित्यद्योतनार्थञ्च ।

माथु। सहर्षं गृहीत्वा। अले! भणेसि तं कुलवुत्तं, भूदं तुए गन्धु(य)। आअच्छ, पुणो जूदं रमह्म (४७)। इति निष्क्रान्तौ।

चेटी। वसन्तसेनामुपसृत्य। अज्जए! पड़ितुट्ठा गदा सहिअजूदिअरा (४८)।

वस। ता गच्छदु अज्जो बन्धुअणं समस्सासिदु (४९)।

संवा। अज्जए! जइ एव्वं, ता इअं कला पलिअणहत्थगदा कलीअदु (५०) (र)।

वसं। अज्ज! जस्स कारणादो इअं कला सिक्खीअदि, सोज्जेव अज्जेण सुस्सूसिदपुरुव्वो सस्सूसिदव्वो (५१) (ल)।

(४७) अरे! भणसि तं कुलपुत्रं, भूतः स तव गण्डः, आगच्छ, पुनर्द्यूतं रमस्व।

(४८) आर्य्ये! परितुष्टौ गतौ सभिकद्यूतकरौ।

(४९) तद्गच्छतु आर्य्यो बन्धुजनं समाश्वासयितुम्।

(५०) आर्य्ये! यद्येवं, तदियं कला परिजनहस्तगता क्रियताम्।

(५१) आर्य्य! यस्य कारणात् इयं कला शिक्ष्यते, स एव आर्य्येण शुश्रूषितपूर्वः शुश्रूषितव्यः।

(य) कुलपुत्रं कुलीनं सत्कुलोत्पन्नमित्यर्थः संवाहकसुत्यर्थमिदम्। तव गण्डः पर्य्यौकृतनियमः भूतः निबद्धः।

(र) परिजनहस्तगता परिजनस्य योग्यजनस्य मर्नेति भावः हस्तगता शिक्षिता इयं कला अङ्गमर्द्दनरूपा क्रियताम् अनुमन्यतां शिक्षत्वेन मामनुमन्यस्वेति भावः।

(ल) यस्य चारुदत्तस्य कारणात्, शुश्रूषितपूर्वः पूर्वं शुश्रूषितः।

संवा। स्वगतम्। अज्जआए णिउणं पच्चादिट्ठोम्हि (व)। कधं पच्चुवकलिश्शं ? प्रकाशम्। अज्जए ! अहं एदिणा जूदिअ लावमाणेण शक्कशमणके (श) हुविश्शं। ता शंवाहके जूदिअले शक्कशमणके शंवुत्तेत्ति शुमलिदव्वा अज्जआए एदे अक्खलु (५२)।

वसं। अज्ज ! अलं साहसेण (५३)।

संवा। अज्जए ! कले णिच्चए। इति परिक्रम्य।

जूदेण तं कदं मे, जं वीहत्थं जणश्श शव्वश्श।
एणहिं पाअडशीशे णलिन्दमग्गेण विहलिश्शं (५४)॥१५

---

(५२) आर्य्यया निपुणं प्रत्यादिष्टोऽस्मि। कथं प्रत्युपकरिष्ये ? आर्य्ये ! अहमेतेन द्यूतकरापमानेन शाक्यश्रमणको भविष्यामि, तत् संवाहको द्यूतकरः शाक्यश्रमणकः संवृत्त इति स्मर्त्तव्यानि आर्य्यया एतान्यक्षराणि।

(५३) आर्य्य ! अलं साहसेन।

(५४) आर्य्ये ! कृतो निश्चयः।

द्यूतेन तत्कृतं मम यत् विहस्तं जनस्य सर्वस्य।
इदानीं प्रकटशीर्षो नरेन्द्रमार्गेण विहरिष्यामि॥

---

(व) निपुणं चातुर्य्ययुक्तं यथातथा प्रत्यादिष्टः निराकृतः।

(श) शाक्यश्रमणकः बौद्धपरिव्राजकः।

(१५) द्यूतेनेति। सर्वस्य जनस्य समक्षमिति शेषः विहस्तं व्याकुलं व्याकुलीकरणमित्यर्थः अवमाननमिति यावत् विहस्तव्याकुलौ समा नित्यमरः, प्रकटशीर्षः मुण्डितशिरा इत्यर्थः नरेन्द्रमार्गेण राजपथेन भ्रमणेन इतस्ततः इति।

नेपथ्ये कलकलः।

संवा। आकर्ण्य। अले! किं ण्णेदं? आकाशे। किं भणाध? एशे क्खु वशन्तशेणा-केलके खुण्टमोड्के णाम दुट्टहत्थी विहलेदित्ति। अहो! अज्जआए गन्धगजं (च) पेक्खिश्शं गदुअ। अह वा, किं मम एदिणा जधा ववशिदं अणुचिट्ठिश्शं (५५)। इति निष्क्रान्तः।

ततः प्रविशति अपटाक्षेपेण प्रहृष्टो विकटोज्ज्वलवेशः कर्णपूरकः।

कर्ण। कहिं कहिं अज्जआ? (५६)।

चेटी। दुम्मणुस्स! किं ते उब्वेअकारणं? जं अग्गदो-वट्ठिदं अज्जअं न पेक्खसि (५७)।

कर्ण। हङ्घा। अज्जए! वन्दामि (५८)।

(५५) अरे! किं न्विदम्? किं भणथ? एष खलु वसन्तसेनायाः खुण्टमोड्को नाम दुष्टहस्ती विहरतीति। अहो! आर्य्याया गन्ध-गजं प्रेक्षिष्ये गत्वा, अथवा, किं मम एतेन यथा व्यवसितम् अनु-ष्ठास्यामि।

(५६) कुत्र कुत्र आर्य्या?

(५७) दुर्मनुष्य, किन्ते उद्वेगकारणं? यद् अग्रतोऽवस्थिताम् आर्य्यां न प्रेक्षसे।

(५८) आर्य्ये! वन्दे।

(च) गन्धगजं गन्धप्रधानो गजः गन्धगजस्तं मत्तहस्तिन-मित्यर्थः।

चेटं। कसजरअ! परितुट्ठमुहो लक्खीअसि। ता किं खेदं? (५८)।

कर्ण। सविस्मयम्। अज्जए! वञ्चिदासि, जाए अज्ज कासजरअस्स परक्कमो ण दिट्ठो (६०)।

चेटं। कसजरअ! किं किं? (६१)।

कर्ण। सुणादु अज्जआ, जो सो अज्जआए खुण्टमोड़ओ णाम दुट्टहत्थी, सो आलाणत्थम्भं भञ्जिअ, महमेत्तं (स) वावादिअ, महन्तं सङ्खोहं करन्तो, राअमग्गं ओदिण्णो। तदो एत्थन्तरे उग्घुट्टं जणेण।

अवणेध बालअजणं, तुरिदं आरुहध बुक्खपासादं।
किं ण हु पेक्खध पुरदो? दुट्टो हत्थी इदो एदि॥१६॥(६२)

---

(५८) कर्णपूरक! परितुष्टमुखो लक्ष्यसे, तत् किं न्विदम्?

(६०) आर्य्ये! वञ्चितासि, यथा अद्य कर्णपूरकस्य पराक्रमो न दृष्टः।

(६१) कर्णपूरक! किं किम्?

(६२) शृणोतु आर्य्या, यः स आर्य्यायाः खुण्टमोड़को नाम दुष्टहस्ती, स आलानस्तम्भं भंक्त्वा, महामात्रं व्यापाद्य, महान्तं संक्षोभं कुर्वन् राजमार्गमवतीर्णः, ततः अनान्तरे उद्‌घुष्टं जनेन।

अपनयत बालकजनं, त्वरितमारोहत वृक्षप्रासादम्।
किं न खलु प्रेक्षध्वं पुरतो? दुष्टो हस्ती इत एति॥

---

(स) महामात्रं हस्तिपकराजम्।

(१६) अपनयतेति। अपनयत अपसारयत। आर्य्येदमिदम्।

अविअ।

विअलइ णेउरजुअलं, छिज्जन्ति अ मेहलामणिक्खइआ।
बलआ अ सुन्दरदरा, रअणंकुरजालपड़िबद्धा॥ १७॥

तदो तेण दुट्ठहत्थिणा करचलणरदणेहिं फुल्लणलिणिं विअ णअरिं उज्जइणिं अवगाहमाणेण, समासादिदो परिव्वाजओ, तञ्च परिभट्ठदण्डकुण्डिआभाअणं (ङ) सीअरेहिं सिञ्चिअ, दन्तंतरे क्खित्तं पेक्खिअ, पुणोबि उग्घुट्टं जणेण हा! परिव्वाजओ बाबादीअदि त्ति(६३)।

वसं। ससम्भ्रमम्। अहो पमादो! अहो पमादो! (६४)

कर्ण। अलं सम्भमेण, सुणादु दाव अज्जआ। तदो

---

अपि च।

विचलति नूपुरयुगलं, छिद्यन्ते च मेखला मणिखचिताः।
बलयाश्च सुन्दरतरा, रत्नाङ्कुरजालप्रतिबद्धाः॥

ततस्तेन दुष्टहस्तिना करचरणरदनैः, फुल्लनलिनीमिव नगरीमुज्जयिनीमवगाहमानेन, समासादितः परिव्राजकः, तञ्च परिभ्रष्टदण्डकुण्डिकाभाजनं शीकरैः सिक्त्वा, दन्तान्तरे क्षिप्तं प्रेक्ष्य, पुनरप्युद्घुष्टं जनेन, हा! परिव्राजको व्यापाद्यते इति।

(६४) अहो प्रमादः! अहो प्रमादः!

---

(१७) विचलतीति। विचलति झनझनायते, पलायमानानां रथ्यासञ्चारिणीनां नारीणामिति शेषः सर्वत्र। आर्य्यावृत्तमिदम्।

(ङ) परिव्राजकः बौद्धदण्डी संवाहक इति शेषः, परिभ्रष्टदण्डकुण्डिकाभाजनं भयेन हस्तात् प्रच्युतदण्डकमण्डलुं कुण्डीकमण्डलौ कुण्ड इति हेमचन्द्रः।

विच्छिणविसण्ठुल सिङ्खलाकलावअं दन्तन्तरपरिग्गहिदं परिव्वाजअं उव्वहन्तं तं पेक्खिअ, कण्णजरएण मए, णहि, णहि अज्जआए अणपिण्डोवपुट्ठेण दासेण, वामचलणेण जूदखेलअं उग्घुसिअ, उग्घुसिअ, तुरिदं आवणादो लोह-दण्डं गेह्निअ, आआरिदो (च) सो दुट्टहत्थी (६५)।

वस०। तदो तदो (६६)।

कर्ण०। आहणिऊण सरोसं तं हत्थिं विंझसेलसिहराभं।
मोआविओ मए सो दन्तन्तरसंठिओ परिव्वाजओ(६७)॥१८॥

---

(६५) वस० संभ्रमेण, शृणोतु तावदार्या। ततो विच्छिन्न विसंष्ठुल-शृङ्खलाकलापम् उद्वहन्तं दन्तान्तरपरिगृहीतं परिव्राजकम् उद्वहन्तं, तं प्रेक्ष्य कर्णपूरकेण मया, नहि नहि, आर्याया अन्नपिण्डोपपुष्टेन दासेन, वामचरणेन द्यूतखेलकं उद्घुष्य, उद्घुष्य, त्वरितमापणात् लौह-दण्डं गृहीत्वा, आकारितः स दुष्टहस्ती।

(६६) ततस्ततः ?

(६७) आहत्य सरोषं तं हस्तिनं विन्ध्यशैलशिखराभम्।
मोचितो मया स दन्तान्तरसंस्थितः परिव्राजकः॥

---

(च) तत इति। विच्छिन्ना विशेषेण छिन्ना अतएव विसंष्ठुला इतस्ततः स्खलिता शृङ्खला एव कलापो भूषणं यस्य तादृशं कलापो-भूषणे बर्हे इत्यमरः, अन्नपिण्डोपपुष्टेन अन्नराशिपालितेन वाम-चरनेन वक्रगत्या द्यूतखेलकं संवाहकम् उद्घुष्य द्यूतखेलकोऽयं संवा-हकः परिव्राजकोऽभूत् इति कथयित्वा इत्यर्थः, आकारितः आहूतः हूतिराकारणाह्वानमित्यमरः।

(१८) आहत्येति। आर्य्याछन्दः।

अपिच ।

समुद्रवीचीव चलस्वभावाः सन्ध्याभ्र-लेखेव मुहूर्त्तरागाः ।
स्त्रियो हृतार्थाः पुरुषं निरर्थं निष्पीड़िताल‌क्तकवत्त्यजन्ति ॥१५॥

स्त्रियो नाम चपलाः ।

अन्यं मनुष्यं हृदयेन कृत्वा, अन्यं ततो दृष्टिभिराह्वयन्ति ।
अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते ॥१६॥

सूक्तं (ठ) खलु कस्यापि ।

---

कुलशीलसमन्वितेन कुलीनेन सुशीलेन च इत्यर्थः नरेण वेश्याः श्मशान-सुमनाः श्मशाने या सुमनाः मालतीपुष्पं सा इव वर्जनीया ज्ञातव्या इत्यर्थः यथा श्मशानस्थमालतीपुष्पं न केनापि आव्रियते तथा वेश्या-पीति भावः । वसन्ततिलकं वृत्तम् ।

(१५) समुद्रेति । समुद्रवीचीव सागरतरङ्ग इव चलस्वभावाः अतिचपला इत्यर्थः तथा सन्ध्याभ्रलेखेव सन्ध्यायां यदभ्रम् अस्ता-ममनोन्मुखसूर्य्यकिरणरञ्जितो मेघ इति यावत् तस्य लेखेव रेखेव मुहूर्त्तम् अत्यल्पकालं रागः अनुरागः यासां ताः स्त्रियः वेश्या इत्यर्थः हृतः अर्थः याभिः तथाभूताः सत्यः निरर्थं निर्धनं पुरुषं निष्पीड़ितं यदलक्तकं तद्वत् त्यजन्ति । उपजातिर्वृत्तम् ।

(१६) अन्यमिति । हृदयेन अन्यं मनुष्यं कृत्वा अन्यस्मिन् मनुष्ये मन आधाय इति यावत् ततः अनन्तरं दृष्टिभिः अपाङ्ग-दर्शनैरित्यर्थः अन्यम् आह्वयन्ति सङ्केतयन्ति अन्यत्र पुरुषे मदप्रसेकं मदस्य गर्वस्य प्रसेकः प्रयोगः तं साहङ्कारव्यवहारमित्यर्थः अथवा मदस्य मदिरायाः सुरागण्डूषस्य इत्यर्थः प्रसेकं मुखात् प्रक्षेपं मुञ्चन्ति कुर्वन्तीति यावत् तथा अन्यस्य पुरुषं शरीरेण कामयन्ते । इन्द्रवज्रावृत्तम् ।

(ठ) सूक्तं शोभनम् उक्तम् ।

न पर्वताग्रे नलिनी प्ररोहति,
न गर्दभा वाजिधुरं वहन्ति।
यवाःप्रकीर्णा न भवन्ति शालयो,
न वेशजाताः शुचयस्तथाङ्गनाः॥ १७॥

आः, दुरात्मन् चारुदत्तहतक! अयं न भवसि। इति कतिचित् पदानि गच्छति।

मद। अञ्चले गृहीत्वा। अइ असंबद्धभासअ! (ङ) असंभावणीए कुप्पसि? (४५)।

शर्वि। कथमसम्भावनीयं नाम?।

मद। एसो क्खु अलङ्कारओ अज्जआ केरओ (४६)।

शर्वि। ततः किम्?।

मद। स च तस्स अज्जस्स हत्थे बिणिक्खित्तो (४७)।

शर्वि। किमर्थम्?।

---

(४५) अयि असम्बद्धभाषक! असम्भावनीये कुप्यसि?
(४६) एष खलु अलङ्कारः आर्य्यासम्बन्धी।
(४७) स च तस्य आर्य्यस्य हस्ते विनिःक्षिप्तः।

---

(१७) नेति। नलिनी पद्मिनी पर्वताग्रे गिरिशिखरे न प्ररोहति जायते गर्द्दभाः वाजिधुरम् अश्ववाह्यं भारं न वहन्ति, प्रकीर्णाः प्रक्षिप्ताः उप्ता इत्यर्थः यवाः न शालयः धान्यानीत्यर्थः भवन्ति तथा वेशजाता अङ्गनाः वेश्या इत्यर्थः न शुचयः न पवित्राः भवन्तीत्यर्थः। वंशस्थविलं वृत्तम्।

(ङ) असम्बद्धभाषकः असङ्गतभाषिन्।

मद । कधं । एव्वं विश्र (४८) ।

शर्वि । सवैलक्ष्यम् । भोः ! कष्टम् !

छायार्थं ग्रीष्मसन्तप्तो यामेवाहं समाश्रितः ।

अजानता मया सैव पत्रैः शाखा वियोजिता ॥ १८ ॥

मद । कधं ! एसोवि सन्तप्पदि ज्जेव, ता अआणन्तेण एदिणा एव्वं अणुचिट्ठिदं (४९) ।

शर्वि । मदनिके ! किमिदानीं युक्तम् ? ।

मद । एत्थ तुमं ज्जेव पण्डिओ (५०) ।

शर्वि । नैवम् । पश्य ।

स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः ।

पुरुषाणान्तु पाण्डित्यं शास्त्रैरेवोपदिश्यते ॥ १९ ॥

---

(४८) एवमिव ।

(५०) कथमेषोऽपि सन्तप्यते एव, तत् अजानता एतेन एव मनुष्ठितम् ।

(५१) अत्र त्वमेव पण्डितः ।

---

(१८) छायार्थमिति । अहं ग्रीष्मसन्तप्तः सन् छायार्थं यां शाखां समाश्रितः मया अजानता सा एव शाखा पत्रैः वियोजिता पत्रशून्या कृतेत्यर्थः । अप्रस्तुतप्रशंसेयमलङ्कृतिः अनुष्टुप् वृत्तम् ।

(१९) प्रिय इति । एताः स्त्रिय एव निसर्गात् स्वभावात् पण्डिता नाम सम्भावनायां पण्डिता इति सम्भावयामीत्यर्थः पुरुषाणान्तु पाण्डित्यं नैपुण्यं शास्त्रैः शास्त्रदर्शनैरेव न तु स्वत इत्यर्थः उपदिश्यते शिक्ष्यते शास्त्रज्ञानेनैव पुरुषाः पण्डिता भवन्तीत्यर्थः । अनुष्टुप् वृत्तम् ।

मद। सव्विलअ ! जइ मम वअणं सुणीअदि, ता तस्स ज्जेव महाणुभावस्स पडिणिज्जादेहि (ठ) (५१)।

शर्वि। मदनिके ! यद्यसौ राजकुले मां कथयति ?

मद। ण चन्दादो आदवो होदि (५२)।

वसं। साहु, मदणिए ! साहु (५३)।

शर्वि। मदनिके !

न खलु मम विषादः साहसेऽस्मिन् भयं वा,
कथयसि हि किमर्थं तस्य साधोर्गुणांस्त्वम्।
जनयति मम वेदं कुत्सितं कर्म्म लज्जां,
नृपतिरिह शठानां मादृशां किं नु कुर्य्यात् ? ॥२०॥

(५१) शर्विलक ! यदि मम वचनं श्रूयते, तदा तस्यैव महानुभावस्य प्रतिनिर्य्यातय।

(५२) न चन्द्रादातपो भवति।

(५३) साधु मदनिके ! साधु।

---

(ठ) प्रतिनिर्य्यातय प्रत्यर्पय।

(२०) नेति। अस्मिन् साहसे बलात्कार्ये चौर्य्यरूपे सहसा क्रियते यत्तु तत्साहसमिहोच्यते। अप्रकाशं वा प्रकाशं वा सहोबलमिहोच्यते। इति वचनात्। मम विषादः खेदः कथमिदं कृतमित्यनुताप इत्यर्थः, भयं राजदण्डादिति शेषः न खलु नैव अस्तीति शेषः। त्वं तस्य साधोः चारुदत्तस्य गुणान् किमर्थं कथयसि हि अवधारणे अतः इदं कुत्सितं कर्म चौर्य्यं मम लज्जां जनयति वा अवधारणे नृपतिः इह नगरे शठानां धूर्त्तानां मादृशां मत्सदृशजनानां किं कुर्य्यात्

तथापि नीतिविरुद्धमेतत्, अन्य उपायश्चिन्त्यताम्।

मद। सो अअं अवरो उवाओ (५४)।

वसं। को क्खु अवरो उवाओ हुविस्सदि? (५५)।

मद। तस्स ज्जेव अज्जस्स केरओ भविअ एदं अलङ्कारअं अज्जआए उवणेहि (५६)।

शवि। एवं कृते किं भवति?।

मद। तुमं दाव अचोरो, सो वि अज्जो अरिणो, अज्जआए सकं अलङ्कारअं उवगदं (ण) भोदि (५७)।

शवि। नन्वतिसाहसमेतत्।

मद। अइ! उवणेहि, अण्णधा अदिसाहसं (५८)।

वसं। साहु! मदणिए! साहु! अभुजिस्साए विअ मन्तिदं (५९)।

---

(५४) सोऽयमपर उपायः।

(५५) कः खलु अपर उपायो भविष्यति?

(५६) तस्यैव आर्यस्य सम्बन्धी भूत्वा इममलङ्कारकमार्यायै उपनय।

(५७) त्वं तावदचौरः, सोऽपि आर्योऽनृणः, आर्यया स्वकोऽलङ्कारः उपगतो भवति।

(५८) अयि! उपनय, अन्यथा अतिसाहसम्।

(५९) साधु, मदनिके! साधु, अभुजिष्ययेव मन्त्रितम्।

---

ननु' शङ्कायाम् न किमपीत्यर्थः तु वितर्के, प्रश्ने वा। मालिनीवृत्तं ननमययथुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात्।

शर्वि। मयाप्ता महती बुद्धिर्भवतीमनुगच्छता।
निशायां नष्टचन्द्रायां दुर्लभो मार्गदर्शकः॥ २१॥

मद। तेण हि तुमं इमस्सिं कामदेब-गेहे मुहुत्तअं चिट्‌ठ, जाब अज्जआए तुह आगमणं णिबेदेमि (६०)।

शर्वि। एवं भवतु।

मद। उपसृत्य। अज्जए! एसो क्खु चारुदत्तस्स सआसादो बम्हणो आअदो (६१)

वसं। हञ्जे! तस्स केरओ त्ति कधं तुमं जाणासि? (६२)

मद। अज्जए! अत्तकेरअं पि ण जाणामि? (६३)।

वसं। स्वगतं सशिरःकम्पं विहस्य। जुज्जदि। प्रकाशम्। पविसदु (६४)।

मद। जं अज्जआ आणवेदि। उपगम्य। पविसदु सव्विलओ (६५)।

---

(६०) तेन हि त्वमस्मिन् कामदेवगेहे मुहूर्तकं तिष्ठ, यावदार्यायै तवागमनं निवेदयामि।

(६१) आर्य्ये! एष खलु चारुदत्तस्य सकाशात् ब्राह्मणः आगतः।

(६२) चेटि! तस्य सम्बन्धीति कथं त्वं जानासि?

(६३) आर्य्ये! आत्मसम्बन्धिनमपि न जानामि?

(६४) युज्यते। प्रविशतु।

(६५) यदार्य्या आज्ञापयति। प्रविशतु शर्विलकः।

---

(२१) मयेति। मया भवतीं ताम् अनुगच्छता सता महती बुद्धिः आप्ता लब्धा, तथाहि नष्टचन्द्रायाम् अन्धकाराष्टतायां निशायां मार्गदर्शकः दुर्लभः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। अनुष्टुप् वृत्तम्।

अवि । उपसृत्य सवैलक्ष्यम् । स्वस्ति भवत्यै ।

वसं । अज्ज ! वन्दामि, समाविसदु अज्जो (६६)।

अवि । सार्थवाहस्त्वां विज्ञापयति, जर्जरत्वाद्गृहस्य दूरस्थमिदं भाण्डम्, तद्गृह्यताम् । इति मदनिकायाः समर्प्य प्रस्थितः ।

वसं । अज्ज ! ममावि दाव पडिसंदेसं तहिं अज्जो णेदु (६७)।

अवि । स्वगतम् । कस्तत्र यास्यति । प्रकाशम् । कः प्रतिसन्देशः ?।

वसं । पडिच्छदु (त) अज्जो मदणिअं (६८)।

अवि । भवति ! न खल्ववगच्छामि ।

वसं । अहं अवगच्छामि ।

अवि । कथमिव ?।

वसं । अहं अज्ज-चारुदत्तेण भणिदा, जो इमं अलङ्कारअं समप्पइस्सदि, तस्स तुए मदणिआ दादव्वा, ता सो ज्जेव एदं दे देदित्ति एव्वं अज्जेण अवगच्छिदव्वं (६९)

(६६) आर्य्य ! वन्दे, समाविशतु आर्य्यः।

(६७) आर्य्य ! ममापि तावत् प्रतिसन्देशं तत्र आर्य्यो नयतु ।

(६८) प्रतीच्छतु आर्य्यो मदनिकाम् ।

(६९) अहमार्य्यचारुदत्तेन भणिता, य इममलङ्कारकं समर्पयिष्यति, तस्य त्वया मदनिका दातव्या, तत्स एव एतान्ते ददातीति । एवमार्य्येणावगन्तव्यम् ।

---

(त) प्रतीच्छतु स्वीकरोतु ।

शर्विं। स्वगतम्। अये! विज्ञातोऽहमनया। प्रकाशम्।
साधु! आर्य्य-चारुदत्त! साधु।

गुणेष्वेव हि कर्त्तव्यः प्रयत्नः पुरुषैः सदा।
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः॥ २२॥

अपिच।

गुणेषु यत्नः पुरुषेण कार्य्यो, न किञ्चिदप्राप्यतमं गुणानाम्।
गुणप्रकर्षादुडुपेन शम्भोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम्॥ २३॥

वसं। को एत्थ पवहणिओ? (७०) (थ)।

प्रविश्य सप्रवहणश्चेटः। अज्जए! सज्जं पवहणं (७१)।

---

(७०) कोऽत्र प्रवहणिकः?

(७१) आर्य्ये! सज्जं प्रवहणम्।

(२२) गुणेष्विति। पुरुषैः गुणेषु एव सदा प्रयत्नः हि निश्चयेन कर्त्तव्यः, दरिद्रोऽपि गुणयुक्तः अगुणैः गुणहीनैः ईश्वरैः धनिभिः समः तुल्यः न भवतीति शेषः धनिभ्यो हि गुणवान् श्रेष्ठ इति भावः, काव्यलिङ्गमलङ्कारः, हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति लक्षणात्।

(२३) गुणेष्विति। पुरुषेण गुणेषु यत्नः कार्य्यः किञ्चिदपि वस्तु गुणानाम् अप्राप्यतमम् अतिदुष्प्राप्यं न अस्तीति शेषः, तथाहि उडुपेन तारापतिना चन्द्रेण नक्षत्रम् भं तारा तारकाप्युडु वा स्त्रियामित्यमरः गुणप्रकर्षात् गुणातिशयात् अलङ्घ्यं केनाप्यलङ्घितपूर्वं शम्भोः हरस्य उत्तमाङ्गं उत्तमाङ्गं शिरः शीर्षमित्यमरः। उल्लङ्घितं विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। उपेन्द्रवज्राहत्तम्।

(थ) प्रवहणिकः शिविकावाहीत्यर्थः॥

वसं। हञ्जे मअणिए! सुदिट्ठं मं करेहि, दिण्णासि, आरुह पवहणं, सुमरेसि मं (७२)।

मद। रुदती। परिच्चत्तम्हि अज्जआए (७३)। इति पादयोः पतति।

वसं। सम्पदं तुमं ज्जेव वन्दणीआ संवुत्ता। ता गच्छ आरुह पवहणं, सुमरेसि मं (७४)।

शर्वि। स्वस्ति भवत्यै। मदनिके!

सुदृष्टः क्रियतामेष शिरसा वन्द्यतां जनः।
यत्र ते दुर्लभं प्राप्तं वधूशब्दावगुण्ठनम्॥ २४॥

इति मदनिकया सह प्रवहणमारुह्य गन्तुं प्रवृत्तः।

नेपथ्ये। कः कोऽत्र भोः? राष्ट्रियः समाज्ञापयति। एष खल्वार्य्यको गोपालदारको राजा भविष्यतीति सिद्धादेशप्रत्ययपरित्रस्तेन पालकेन राज्ञा घोषादानीय घोरे

(७२) चेटि मदनिके! सुदृष्टां मां कुरु, दत्तासि, आरोह प्रवहणम्, स्मरसि माम्।

(७३) परित्यक्तास्मि आर्यया।

(७४) साम्प्रतं त्वमेव वन्दनीया संवृत्ता, तद्गच्छ, आरोह प्रवहणम्, स्मरसि माम्।

---

(२४) सुदृष्ट इति। एष जनः वसन्तसेनारूपः सुदृष्टः शुभावलोकितः क्रियतां तथा वन्द्यतां यत्र जने अनुकम्पमाने इति शेषः ते तव दुर्लभं अप्राप्यं वधूशब्दावगुण्ठनं वधूशब्द एव अवगुण्ठनं आवरणं प्राप्तं पूर्वं साधारणी आसीरिदानीं मया परिणीता एकपत्नीव्रता अभूरिति भावः। अनुष्टुप्वृत्तम्।

बन्धनागारे बद्धः। ततः स्वेषु स्वेषु स्थानेषु अप्रमत्तैर्भव-द्भिर्भवितव्यम् (द)।

शर्वि। आकर्ण्य। कथं राज्ञा पालकेन प्रियसुहृदार्य्यको मे बद्धः। कलत्रवांश्चास्मि (ध) संवृत्तः। आः! कष्टम्। अथवा

द्वयमिदमतीव लोके प्रियं नराणां सुहृच्च वनिता च।
सम्प्रति तु सुन्दरीणां शतादपि सुहृद्विशिष्टतमः॥ २५॥

भवतु अवतरामि। इत्यवतरति।

मद। साश्रमञ्जलिं बद्ध्वा। एव्वं णेदं। ता परं (न) णेदु मं अज्जउत्तो समीवं गुरुअणाण (७५)।

शर्वि। साधु, प्रिये! साधु, अस्मच्चित्तसदृशमभिहितम्।

(७५) एवं नेदम्, तत्परं नयतु माम् आर्यपुत्रः समीपं गुरुजनानाम्।

(द) राष्ट्रियः राष्ट्रपालः नगररक्षायां नियुक्तः राजपुरुष इत्यर्थः। गोपालदारकः गोपसुतः। सिद्धादेश इत्यादि। सिद्धानां सिद्धपुरुषाणां यः आदेशः आज्ञावाक् तस्मिन् यः प्रत्ययः विश्वासः तस्मात् परित्रस्तः भीतः तेन, घोषात् आभीरपल्ल्याः घोष आभीरपल्ली स्यादित्यमरः। घोरे भयङ्करे बद्धः आर्य्यको गोपालदारक इति शेषः। अप्रमत्तैः अवहितैः।

(ध) कलत्रवान् कृतदारः।

(२५) द्वयमिति। नराणां सुहृच्च वनिता च इदं द्वयं लोके जगति अतीव प्रियं प्रीतिकरं तु किन्तु सम्प्रति इदानीं सकलत्रताव-स्थायामित्यर्थः सुहृद् सुन्दरीणां शतादपि विशिष्टतमः अधिकप्रिय इत्यर्थः ईदृशावस्थायां मित्रसाहाय्यस्यावश्यकत्वादिति भावः।

(न) तत्परं शीघ्रम्।

चेटमुद्दिश्य। भद्र ! आनीये रेभिलस्य सार्थवाहस्योदवसितम् (प)।

चेटः। अधइं (७६)।

शर्वि। तत्र प्रापय प्रियाम्।

चेटः। जं अज्जो आणवेदि (७७)।

मद। जधा अज्जउत्तो भणादि, अप्पमत्तेण दाव अज्जउत्तेण होदव्वं (७८)। इति निष्क्रान्ता।

शर्वि। अहमिदानीम्।

ज्ञातीन्, विटान्, स्वभुजविक्रमलब्धवर्णान्
राजापमानकुपितांश्च नरेन्द्रभृत्यान्।
उत्तेजयामि, सुहृदः परिमोक्षणाय,
यौगन्धरायण इवोदयनस्य राज्ञः ॥२६॥

---

(७६) अथ किम्।

(७७) यदार्य आज्ञापयति।

(७८) यथा आर्यपुत्रो भणति, अप्रमत्तेन तावदार्यपुत्रेण भवितव्यम्।

---

(प) उदवसितम् आवासं गृहमित्यर्थः गृहंगेहोदवसितमित्यमरः।

(२६) ज्ञातीनिति। उदयनस्य राज्ञः वत्सराजस्य यौगन्धरायणस्तदाख्यः प्रधानामात्य इव सुहृदः मित्रस्य आर्य्यकस्य परिमोक्षणाय कारामोचनार्थं ज्ञातीन् स्वगोत्रजान् विटान् पूर्वोक्तलक्षणान् धूर्त्तान् स्वभुजविक्रमेण निजबाहुबलेन लब्धवर्णान् प्राप्तयशसः अथवा स्वबाहुविक्रमप्रकाशे लब्धवर्णान् विचक्षणान् लब्धवर्णो विचक्षण इत्यमरः तथा

अपचि।

> प्रियसुहृदमकारणे गृहीतं
> रिपुभिरसाधुभिराहितात्मशङ्कैः।
> सरभसमभिपत्य मोचयामि,
> स्थितमिव राहुमुखे शशाङ्कबिम्बम्॥ २७॥

इति निष्क्रान्तः।

प्रविश्य चेटी। अज्जए! दिट्ठिआ वड्ढसि; अज्जचारुदत्तस्स सआसादो बम्हणो आअदो (७८)।

---

(७८) आर्ये! दिष्ट्या वर्द्धसे, आर्यचारुदत्तस्य सकाशात् ब्राह्मण आगतः।

राजापमानकुपितान् राज्ञः अपमानेन राजकर्तृकापमानेनेत्यर्थः कुपितान् नरेन्द्रभृत्यान् राजपुरुषान् उत्तेजयामि तत्तत्कारणं प्रदर्श्य स्वनःकोपमुद्दीपयामि भेदयामीत्यर्थः। पुरा किल उदयनो नाम वत्सराजः उज्जयिनीपतिना राज्ञा चन्द्रसेनेन कुतश्चित् कारणात् कारायां निःक्षिप्तः। अथ तत्सचिवः यौगन्धरायणः तस्य राज्ञः प्रकृतिकोपमुत्पाद्य स्वामिनं मोचयामासेति कथात्रानुसन्धेया। वसन्ततिलकवृत्तम्।

(२७) प्रियेति। अकारणे विना हेतुम् आहिता जनिता (मिथ्यादेशेनेति मन्तव्यम्) आत्मनि शङ्का येषां तैः असाधुभिः दुःशीलैः रिपुभिः शत्रुभिः गृहीतम् अतएव राहुमुखे शशाङ्कबिम्बं चन्द्रबिम्बमिव स्थितं प्रियसुहृदम् आर्य्यकं सरभसं सवेगं रभसो वेगहर्षयोरिति कोषः। अभिपत्य गत्वा मोचयामि। पुष्पिताग्रावृत्तम् अयुजि न युगरेफतोयकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा इति तल्लक्षणात्। उपमालङ्कारोऽयम्।

वसं। अहो ! रमणीअदा अज्ज दिवसस्स। ता हञ्जे ! सादरं बन्धुलेण(फ) समं पवेसेहि णं (८०)

चेटी। जं अज्जआ आणवेदि (८१)। इति निष्क्रान्ता।

विदूषको बन्धुलेन सह प्रविष्टः।

विदू। ही, ही भोः ! तवच्चरणकिलेसबिणिज्जिदेण(ब) रक्खसराआ रावणो पुप्फकेण बिमाणेण गच्छदि ; अहं उण बम्हणो अकिदतवच्चरणकिलेसो बि णअरणारी-जणेण गच्छामि (८२)।

चेटी। पेक्खदु अज्जो अम्हकेरकं गेहदुआरं (८३)।

विदू। अवलोक्य, सविस्मयम्। अहो सलिलसित्तमज्जिदकिद-हरिदोवलेवणस्स, बिबिह-सुअंधकुसुमोवहार चित्तलिद-भूमि-भाअस्स, गअणतलालोअण-कोदूहल दूरुण्णामिद-सीसस्स, दोलाअमाणावलंबिदेरावण हत्थब्भमाइद-मल्लिआ

(८०) अहो। रमणीयता अद्य दिवसस्य, तच्चेटि ! सादरं बन्धुलेन समं प्रवेशयैनम्।

(८१) यदार्य्या आज्ञापयति।

(८२) आश्चर्यं भोः ! तपश्चरणक्लेशविनिर्जितेन राक्षसराजो रावणः पुष्पकेण विमानेन गच्छति, अहं पुनर्ब्राह्मणोऽकृततपश्चरण-क्लेशोऽपि नगरनारीजनेन गच्छामि।

(८३) प्रेक्षतामार्य्योऽस्मदीयं गेहद्वारम्।

---

(फ) बन्धुलेन वक्ष्यमाणलक्षणपुरुषविशेषेण।

(ब) तपश्चरणक्लेशविनिर्जितेन तपसा लब्धेनेत्यर्थः, व्यतिरेकाल-ङ्कारोऽयमत्रेति बोद्धव्यम्।

दामगुणालङ्किदस्स, समुच्छिददन्तिदन्ततोरणावभासिदस्स, महारअणोवराअ-सोहिणा पवणबलंदोलणा ललन्तचञ्चलग्गहत्थेण, इदो एहि त्ति वाहरन्तेण विअ मं सोहग्गपडाआणिवहेणोवसोहिदस्स, तोरणधरणत्थंभवेदिआणिक्खित्तसमुल्लसन्तहरिदचूदपल्लवललामफटिह-मङ्गल कलसाभि रामोहअपास्सस्स, महासुरवक्खत्थलदुब्भेज्जवज्जणिरन्तरपडिबद्धकणअकबाड़स्स, दुग्गदजणमणोरहाआसकरस्स, वसन्तसेणाभवणदुआरस्स सस्सिरीअदा। जं सच्चं मज्झत्थस्स वि जणस्स बलाद्दिट्ठिं आआरेदि(८४) (भ)।

---

(८४) अहो! सलिलसिक्त-मार्जित-कृत-हरितोपलेपनस्य, विविध-सुगन्ध कुसुमोपहार-चित्रित-भूमिभागस्य, गगनतलालोकनकौतूहल-दूरोन्नमित शीर्षस्य, दोलायमानावलम्बितैरावण-हस्त-भ्रमायित-मल्लिका-दामगुणालङ्कृतस्य, समुच्छ्रित-दन्तिदन्त-तोरणावभासितस्य, महारजनोपराग-शोभिना पवनबलान्दोलना-ललच्चञ्चलाग्रहस्तेन, इत एहीति व्याहरतेव मां सौभाग्यपताका-निवहेनोपशोभितस्य, तोरणधरण स्तम्भ-वेदिका-निःक्षिप्त-समुल्लसद्धरित चूतपल्लव-ललाम-स्फटिक मङ्गल-कलसाभिरामोभयपार्श्वस्य, महासुर-वक्षःस्थल-दुर्भेद्यवज्र-निरन्तरप्रतिबद्ध-कनककपाटस्य, दुर्गतजनमनोरथायासकरस्य, वसन्तसेनाभवनद्वारस्य सश्रीकता। यत्सत्यं मध्यस्थस्यापि जनस्य बलाद् दृष्टिमाकारयति।

---

(भ) सलिलेन सिक्तं मार्जितं मार्जनीभिः परिष्कृतम् अनन्तरं कृतं हरितोपलेपनं गोमयोपलेपः यत्र तादृशस्य विविधैः सुगन्धैः कुसुमोपहारैः पुष्परचनाभिः चित्रितः सज्जितः भूमिभागः यस्य तादृशस्य गगनतलस्य आकाशस्य आलोकनाय दर्शनाय यत् कौतूहलं औत्सुक्यं

चेटी। एदु, एदु, इमं पढमं पओट्ठं पविसदु अज्जो।(८५)

विदू। प्रविश्यावलोक्य च ही, ही, भोः! इध वि पढमे पओट्ठे, ससिसङ्खमुणालसच्छाहाओ, विणिहिद- चुसमुट्ठिपाण्डुराओ, विविहरअणपडिबद्धकञ्चणसोवाणसोहिदाओ, पासादवन्तिओ, ओलम्बिदमुत्तादामेहिं फटिहवा-

(८५) एतु एतु, इमं प्रथमं प्रकोष्ठं प्रविशतु आर्य्यः।

---

तेन दूरं यथा तथा उन्नमितं शीर्षं शिरोभागः यस्य तथोक्तस्य, दोलायमानः अवलम्बितः अधोलम्बितः ऐरावणहस्तभ्रमायितः ऐरावतशुण्डभ्रमजनकः यः मल्लिकादामगुणः मल्लिकापुष्पमाला तेन अलङ्कृतस्य शोभितस्य, समुच्छ्रितेन समुन्नतेन दन्तिदन्ततोरणेन हस्तिदन्तनिर्मितबहिर्द्वारेण अवभासितस्य विराजितस्य, महारजनं कुसुम्भपुष्पं महारजनं कुसुम्भे स्वर्णे इति हेमचन्द्रः। तस्य उपरागः वर्णः महारञ्जनोपरागः तेन शोभिना पवनबलेन वातवेगेन या आन्दोलना तया लसन् दीप्यमानः चञ्चलः यः अग्रहस्तः हस्ताग्रं तेन, व्याहरतेव वदतेव सौभाग्याय इमङ्गलाय यः पताकानां निवहः समूहः तेन उपशोभितस्य विराजितस्य, तोरणधरणाय ये स्तम्भाः तोरणधरणस्तम्भाः तेषां वेदिकाः तलस्थबद्धप्रदेशा इत्यर्थः तासु निक्षिप्ताः स्थापिताः, समुल्लसन्तः हरिताः चूतपल्लवाः ये आम्रपल्लवाः तैः ललामा रम्याः स्फटिकनिर्मिता ये मङ्गलकलसाः माङ्गलिकपूर्णकुम्भाः तैः अभिरामं रमणीयं उभयपार्श्वं यस्य तथाभूतस्य, महासुरस्य हिरण्यकशिपोः वक्षःस्थलमिव दुर्भेद्यं वज्रेण लौहनिर्मितकीलविशेषेण निरन्तरं निविड़ं यथातथा प्रतिबद्धं कनककपाटं यत्र तथोक्तस्य, तथा दुर्गतानां दरिद्राणां जनानां मनोरथस्य य आयासः परिश्रमः तं करोतीति तस्य सश्रीकता सौन्दर्यम्। मध्यस्थस्य उदासीनस्य विषयनिस्पृहस्येति यावत्। आकारयति आकृत आकर्षतीत्यर्थः।

दाअणमुहचन्देहिं णिज्झाअन्ती विअ उज्जइणिं । सोत्तिओ विअ सुहोववििट्टो णिद्दाअदि दोवारिओ । सदहिणा कलमोदणेण पलोहिदा ण भक्खन्ति वायसा बलिं सुधा-सवण्णदाए (म) । आदेसेदु भोदी (८६) ।

चेटी । एदु, एदु, अज्जो । इमं दुदिअं पओट्ठं पविसदु अज्जो (८७) ।

विदू । प्रविश्यावलोक्य च । ही, ही, भो ! इध वि दुदिए-पओट्ठे पज्जन्तोवणोदजवसबुसकवलसुपुट्टा तेल्लब्भङ्गिदविसाणा बद्धा पवहणवइल्ला । अअं अण्णदरो अवमाणिदो विअ कुलीणो दीहं णीससदि सेरिहो । इदो अ अवणीदजुज्झस्स मल्लस्स विअ मद्दीअदि गीवा मेसस्स ।

---

(८६) अत्रापि प्रथमे प्रकोष्ठे, शशिशङ्खमृणालसच्छायाः, विनिक्षिप्तचूर्णमुष्टिपाण्डुराः, विविधरत्न-प्रतिबद्ध काञ्चनसोपान-शोभिताः, प्रासादपङ्क्तयः, अवलम्बित-मुक्तादामभिः स्फटिकवातायन-मुखचन्द्रैर्निध्यायन्तीवोज्जयिनीम् । श्रोत्रिय इव सुखोपविष्टो निद्राति दौवारिकः । सदध्ना कलमोदनेन प्रलोभिता न भक्षयन्ति वायसा बलिं सुधासवर्णतया । आदिशतु भवती ।

(८७) एतु, एतु, आर्य्यः, इमं द्वितीयं प्रकोष्ठं प्रविशत्वार्यः ।

---

(म) शशिनः शङ्खस्य मृणालस्य च समाना छाया कान्तिर्यासां ताः विनिक्षिप्ता ये चूर्णमुष्टयः मुष्टिपरिमिताः चूर्णाः तैः पाण्डुराः शुभ्रवर्णाः । निध्यायन्तीव निरीक्षन्त इव । श्रोत्रियः छान्दसः वेदनिष्ठः ब्राह्मण इत्यर्थः । सदध्ना दधियुक्तेन कलमस्य धान्यविशेषस्य यत् ओदनम् अन्नं तेन बलिं निवेदितव्यम् । सुधासवर्णतया चूर्णसमानवर्णतया ।

इदो इदो अवराणं अस्साणं केसकप्पणा करीअदि। अअं अवरो पाडच्चरो विअ दढ़बद्धो मन्दुराए साहामिओ। अन्यतोऽवलोक्य च। इदो अ कूरच्चुअ तेल्लमिस्सं पिण्डं हत्थी पड़िच्छाबीअदि मेत्थपुरिसेहिं (य)। आदेसेदु भोदी (८८)।

चेटी। एदु एदु अज्जो, इमं तइअं पओट्ठं पविसदु अज्जो (८९)।

---

(८८) इहापि द्वितीये प्रकोष्ठे, पर्यन्तोपनीत-यवस-बुष कवल-सुपुष्टाः, तैलाभ्यक्तविषाणा बद्धाः प्रवहणबलीवर्द्दाः। अयमन्यतरोऽवमानित इव कुलीनो दीर्घं निश्वसिति सैरिभः। इतश्च अपनीतयुद्धस्य मल्लस्येव मर्द्यते ग्रीवा मेषस्य। इत इतोऽपरेषाम् अश्वानां केशकल्पना क्रियते। अयमपरः पाटच्चर इव दृढ़बद्धो मन्दुरायां शाखामृगः। इतश्च कूरच्युततैलमिश्रं पिण्डं हस्ती प्रतिग्राह्यते मात्रपुरुषैः। आदिशतु भवती।

(८९) एतु एतु आर्यः इमं तृतीयं प्रकोष्ठं प्रविशत्वार्यः।

---

(य) पर्य्यन्तेषु उपनीतानि यानि यवसानि तृणानि तथा बुषाणि धान्यत्वचः यवसं तृणमर्जुनमिति कडङ्गरो बुषं क्लीवे धान्यत्वचि पुमांस्तुष इति चामरः। तेषां कवलैः ग्रासैः सुपुष्टाः तैलेन अभ्यक्तानि स्निग्धानि विषाणानि शृङ्गाणि येषां ते, प्रवहणस्य रथविशेषस्य (चालनार्थं) बलीवर्द्दाः पुङ्गवविशेषाः। अन्यतरः द्वयोर्मध्ये एकः, कुलीनः सत्कुलोत्पन्नः, पक्षे कौ पृथिव्यां लीनः निमग्न इत्यर्थः सैरिभः महिषः। केशकल्पना केशानां ग्रीवावर्त्तिनां लोम्नां कल्पना रचना सज्जना इत्यर्थः कल्पना सज्जना समे इत्यमरः। पाटच्चरस्तस्करः प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचा इत्यमरः मन्दुरायाम् अश्व-

विदू । प्रविश्य दृष्ट्वा च । ही ही भो ! इध वि तइए पओट्ठे इमाइं दाव कुलउत्त-जणोववेसण णिमित्तं विरइदाइं आसणाइं । अद्धवाचिदो पासअपीठे चिट्ठइ पोत्थओ । एसो अ मणिमअ-सारिआ-सहिदो पासअपीठो । इमे अ अवरे मअण सन्धि विग्गह-चदुरा विविह-वण्णिआ-विलित्त-चित्त-फलअग्गहत्था (२) इदो तदो परिब्भमति गणिआ वुड्ढविड़ा अ । आदेसेदु भोदो (९०) ।

चेटी । एदु एदु अज्जो, इमं चउट्ठं पओट्ठं पविसदु अज्जो (९१) ।

---

(९०) इहापि तृतीये प्रकोष्ठे, इमानि तावत् कुलपुत्रजनोपवेशन-निमित्तं विरचितानि आसनानि । अर्द्धवाचितं पाशकपीठे तिष्ठति पुस्तकम् । एतच्च मणिमयसारिकासहितं पाशकपीठम् । इमे चापरे मदनसन्धि-विग्रह-चतुरा विविधवर्णिका-विलिप्त-चित्रफलकाग्रहस्ता इतस्ततः परिभ्रमन्ति गणिका वृद्धविटाश्च । आदिशतु भवती ।

(९१) एतु एतु आर्यः इमं चतुर्थं प्रकोष्ठं प्रविशत्वार्यः ।

शालायां शाखामृगः वानरः । कुरच्युततैलमिश्रं कुरात् द्रव्यविशेषात् च्युतं यत् तैलं तेन मिश्रं युक्तं पिण्डम् अन्नं, मातृपुरुषै हस्तिपकै-रित्यर्थः ।

(२) अर्द्धवाचितं पठितार्द्धं, पाशकपीठे आसनविशेषे । मणि-मयसारिकासहितं मणिनिर्मितगुटिकायुक्तं पाशकपीठं पाशकस्य क्रीड़ा-विशेषस्य पीठम् आसनं स्थानमित्यर्थः । मदनस्य कामस्य सन्धिः मेलनं विग्रहः कलहश्च तयोः चतुराः निपुणाः, विविधाभिः नानाविधाभिः वर्णिकाभिः वर्णैः विलिप्तं विशेषेण लिप्तं चित्रितं यत् चित्रफलकं तत् अग्रहस्ते हस्ताग्रे येषां यासां वा तथाभूता ।

विदू। (प्रविश्यावलोक्य च।) ही ही भो ! इध वि चउट्ठे पओट्ठे जुवदिकर-ताड़िदा जलधरा विअ गम्भीरं णदन्ति मुरआ, खीणपुण्णाओ विअ गअणादो तारआओ णिवडंति कंसतालआ, महुअर-विरुअ-महुरं वज्जदि वंसो। इअं अवरा ईसापणअ-कुविद-कामिणी विअ अंकारोविदा कर-रुह-परामरिसेण सारिज्जदि वीणा। इमाओ अवराओ कुसुम-रसमत्ताओ विअ महुअरिओ अदिमहुरं पगीदाओ गणिआ-दारिआओ णच्चीअन्ति, णट्टअं पठीअन्ति, ससिंगगारओ ओवग्गिदा। गवक्खेसु वादं गेह्णन्ति सलिलगग्गरीओ (ल)। आदिसेदु भोदी (८२)।

(८२) आश्चर्यं भोः ! इहापि चतुर्थे प्रकोष्ठे युवतिकरताड़िता जलधरा इव गम्भीरं नदन्ति मृदङ्गाः, क्षीणपुण्या इव गगनात्तारका निपतन्ति कांस्यतालाः मधुकरविरुतमधुरं वाद्यते वंशः। इयमपरा ईर्षाप्रणय-कुपितकामिनीव अङ्कारोपिता कररुहपरामर्शेन सार्य्यते वीणा। इमा अपराश्च कुसुमरसमत्ता इव मधुकर्य्योऽतिमधुरं प्रगीता गणिका-दारिका नर्त्त्यन्ते, नाट्यं पाठ्यन्ते, सशृङ्गारा अपवल्गिताः। गवाक्षेषु वातं गृह्णन्ति सलिलगर्गर्य्यः। आदिशतु भवती।

---

(ल) अङ्कारोपिता क्रोड़निहिता, कररुहपरामर्शेन अङ्गुलि-स्पर्शेन सार्य्यते संक्रियते। प्रगीताः प्रकर्षेण गानपरा इत्यर्थः गणि-कादारिकाः वेश्याकुमार्य्यः, नाट्यं नाट्यशास्त्रं सशृङ्गाराः आदिरस-रसिकाः उज्ज्वलवेशा वा शृङ्गारः शुचिरुज्ज्वल इत्यमरः। अपवल्गिताः भङ्गिविशेषयुता इत्यर्थः। सलिलगर्गर्य्यः जलपूर्णपात्रविशेषाः वातं गृह्णन्तीति वातग्रहणेन स्वस्थं जलं शीतलयन्तीति भावः।

चेटी। एदु एदु अज्जो, इमं पढमं पओट्ठं पविसदु अज्जो (८३)।

विदू। प्रविश्य दृष्ट्वा च। ही ही भो! इध वि पढमे पओट्ठे अअं दलिद्दजण-लोहुप्पादणअरो आहरइ उवचिदो हिंगुतेल्लगन्धो। विविह-सुरहि-धूमुग्गारेहिं विअ सन्ताविज्ज-माण णीससदि विअ महाणसं दुवारमुहेहिं। अधिअं उस्सुआवेदि मं साहिज्जमाण-बहुविह-भक्ख-भोअण-गंधो। अअं अवरो पडच्चरं विअ धोदि धोअदि रूपिदारओ। बहुविहाहारविआरं उवसाहेदि सूअआरो। बज्झन्ति मोदआ, पच्चन्ति अ पूवआ। आत्मगतम्। अवि दाणिं इध वड्ढिअं भुञ्जसु त्ति पादोदअं (व) लहिस्सं?। अन्यतो-ऽवलोक्य च। इदो गन्धव्व-सुरगणेहिं विअ विविहालङ्कार-

(८३) एतु एतु आर्य्यः, इमं प्रथमं प्रकोष्ठं प्रविशत्वार्य्यः।

(व) आहरति उद्वहति, उपचितः वर्द्धितः। महानसं चुल्ली, उत्सुकायते उत्सुकं करोतीति उत्सुकायते लालसं करोतीत्यर्थः, साध्यमानानां निष्पाद्यमानानां बहुविधानां भक्ष्याणां चर्व्याणां भोज-नानां खाद्यानां गन्धः आमोदः। पटच्चरं जीर्णवस्त्रमित्यमरः पेशीं मांसविशेषं धावति प्रक्षालयति रूपिदारकः सुन्दरबालकः अथवा रूपिणं प्राणिनं दारयतीति पशुघातक इत्यर्थः। बहुविधानाम् आहा-राणां भोजनीयानाम् विकारः विविधं करणं विविधानि आहार-वस्तूनीत्यर्थः उपसाधयति सम्पादयति सूपकारः पाचकः। वर्द्धितं हविर्युक्तं यथेष्टमित्यर्थः। पादोदकं पादप्रक्षालनार्थं जलम्।

सोहिदेहिं गणिआजणेहिं बन्धुलेहिं अ तं सव्वं सम्मी-अदि एदं गेहं। भो! के तुम्हे बन्धुला णाम? (८४)।

बन्धुलाः। वयं खलु,

> परगृहललिताः, परान्नपुष्टाः,
> परपुरुषैर्जनिताः पराङ्गनासु।
> परधननिरता गुणेष्ववाच्या-
> गजकलभा इव बन्धुला ललामः॥ २८॥

विदू। आदेसेदु भोदी (८५)।

चेटी। एदु एदु अज्जो, इमं छट्ठं पओट्ठं पविसदु अज्जो (८६)।

(८४) आश्चर्यं, भोः! इहापि षष्ठे प्रकोष्ठे अयं दारिद्र्यजन-क्षोभोत्पादनकरमाहरत्युपचितो हिङ्गुतैलगन्धः। विविधसुरभिधूमो-द्गारैर्नित्यसन्तप्यमानं निश्वसितीव महानसं द्वारमुखैः। अधिकमुत्सुका-यते मां साध्यमान-बहुविध-भक्ष्य-भोजन गन्धः। अयमपरः पटच्चरमिव प्रहृतपशूदरपेशिं धावति रूपिदारकः। बहुविधाहारविकारमुपसाध-यति सूपकारः। बध्यन्ते मोदकाः, पच्यन्ते च पूपकाः। अपीदानी-मिह वर्धितं भुङ्क्ष्व इति पादोदकं लप्स्ये? इह गन्धर्वैरप्सरगणैरिव विविधालङ्कार-शोभितै गणिकाजनै बन्धुलैश्च यत्सत्यं स्वर्गायते इदं गेहम्। भोः! के यूयं बन्धुला नाम?

(८५) आदिशतु भवती।

(८६) एतु एतु आर्यः, इमं षष्ठं प्रकोष्ठं प्रविशत्वार्यः।

---

(२८) परगृहेषु। ललिताः पालिताः, गुणेषु अवाच्याः निर्गुणा इत्यर्थः: गजकलभाः हस्तिशावकाः इव ललामः विहरामः। अत्रापि

विदू। (प्रविश्यावलोक्य च।) ही ही भो! इध वि छट्ठे पओट्ठे अमुं दाव सुवस्स रअणाणं कम्मतोरणाइं णीलरअण-विणिक्खित्ताइं इन्दाउहट्ठाणं विअ दरिसअन्ति, वेदुरिअ-मोत्तिअ पवाल-पुप्फराअ इन्दणील कक्केतरअ-पउमराअ-मर-गअ-पहुदिआइं रअणविसेसाइं अण्णोण्णं विआरेन्ति सि-प्पिणो, बज्झन्ति जादरूवेहिं माणिक्काइं, घडिज्जन्ति सुव-ण्णालङ्कारा रत्तसुत्तेण, गत्थीअन्ति मोत्तिआभरणाइं, घसीअन्ति धीरं वेदुरिआइं, छेदीअन्ति सङ्खआ, साणि-ज्जन्ति पवालआ, सुक्खविअन्ति ओल्लविद-कुङ्कुम पत्थरा, सालीअदि मेलज्जअं, विस्साणीअदि चंदणरसो, संजोई-अन्ति गन्धजुत्तीओ। दीअदि गणिआ कामुकाणं सकप्पूरं तम्बोलं, अवलोईअदि सकडक्खअं, पअट्टदि हासो, पिवी-अदि अ अणवरअं ससिक्कारं मइरा। इमे चेड़ा, इमा चेडि-आओ, इमे अवरे अवधीरिद पुत्तदार वित्ता (ग) मणुस्सा

(ग) कर्मतोरणानि कर्म शिल्पक्रिया तस्य तोरणानि तदर्थ-निर्मितबहिर्द्वारप्रदेशविशेषा इत्यर्थः नीलरत्नैः विनिक्षिप्तानि अवभा-सितानि सन्ति इन्द्रायुधस्थानं शक्रधनुषः अवकाशभूमिमिव दर्शयन्ति आत्मानमिति शेषः। शिल्पिनः शिल्पकाराः। जातरूपैः स्वर्णैः। बध्यन्ते खच्यन्ते। शाणैः प्रस्तरविशेषैः। आर्द्राः कुङ्कुमाख्य तेषां प्रस्ताराः विस्ताराः समूहा इत्यर्थः। शाल्यते परिष्क्रियते। अवधी-रितानि अगणितानि पुत्राः दारा वित्तानि च यैः तादृशाः पुत्रकलत्र-धनमायावर्ज्जिता इत्यर्थः।

आसवकरआ-पीदमइरेहिं गणिआ-जणेहिं, जे मुक्का ते पिअन्ति। आदिसेदु भोदी (९७)।

चेटी। एदु एदु अज्जो, इमं सत्तमं पओट्ठं पविसदु अज्जो (९८)।

विदू। प्रविश्यावलोक्य च। ही ही भो! इध वि सत्तमे पओट्ठे, सुसिलिट्ठ विहंगवाडो सुहणिसण्णाइं, अण्णोण्ण-चुम्बण-पराइं सुहं अणुभवन्ति पारावद-मिहुणाइं, दहि-भत्त-पूरिदोदरो बम्हणो विअ सुत्तं पढदि पंजरसुओ। इअं अवरा सामिसंमाणणा-लद्ध-पसरा विअ घरदासी अधिअं कुरुकुरायदि मदणसारिआ, अणेअ फलरसास्साद पहुट्ट-कण्ठा कुम्भदासी विअ कूअदि परउट्ठा, आलम्बिदा णाग-

(९७) आश्चर्यं, भोः! इहापि षष्ठे प्रकोष्ठे अमूनि तावत्सु-वर्णरत्नानां कर्मतोरणानि नीलरत्नविनिक्षिप्तानि इन्द्रायुधस्थानमिव दर्शयन्ति, वैदूर्य मौक्तिक प्रवालक-पुष्परागेन्द्रनील-कर्केतरक पद्मराग-मर-कतप्रभृतीन् रत्नविशेषान् अन्योऽन्यं विचारयन्ति शिल्पिनः, बध्यन्ते जात-रूपैर्माणिक्यानि, घट्यन्ते सुवर्णालङ्कारा रक्तसूत्रेण, ग्रथ्यन्ते मौक्ति-काभरणानि, घृष्यन्ते धीरं वैदूर्याणि, छिद्यन्ते शङ्खाः शाणैर्घृष्यन्ते प्रवा-लकाः, शोष्यन्ते आर्द्रकुङ्कुमप्रस्तराः, सार्यते कस्तूरिका, विशेषेण घृष्यते चन्दनरसः, संयोज्यन्ते गन्धयुक्तयः, दीयते गणिका-कामुकयोः सकर्पूरं ताम्बूलम्, अवलोक्यते सकटाक्षम्, प्रवर्त्तते हासः, पीयते चानवरतं ससीत्कारं मदिरा। इमे चेटाः, इमाश्चेटिकाः, इमे अपरे अवधीरितपुत्रदारवित्ता मनुष्याः, आसव-करकापीत-मदिरैर्गणिका-जनैर्ये मुक्तास्ते पिबन्ति। आदिशतु भवती।

(९८) एतु एतु आर्य्यः, इमं सप्तमं प्रकोष्ठं प्रविशत्वार्य्यः।

दंतेसु पञ्जर परम्पराओ, ओधीअंति लावआ, आलवीअन्ति पञ्जरकविञ्जला, पेसीअन्ति पञ्जरकवोदा। इदो तदो विविह-मणि चित्तलिदो विअ अअं सहरिसं णच्चन्तो रवि-किरण सन्तत्तं पक्ख, क्खे वेहिं विधुवेदि विअ पासादं घर-मोरो। अन्यतोऽवलोक्य। इदो पिण्डीकिदा विअ चन्दपादा पदगदिं सिक्खन्ता विअ कामिणीणं पच्छादो परिब्भ-मन्ति राअहंस-मिहुणा। एदे अवरे वुड्ढमहल्लका विअ इदो तदो सञ्चरन्ति घरसारसा। ह्वी ह्वी भो! पसारणअं किदं गणिआए णाणा पक्खिसमूहेहिं (ष)। जं सच्चं क्खु णन्दणवणं विअ मे गणिआवरं पडिभासदि। आदेसेदु भोदी (८८)।

---

(८८) इहापि सप्तमे प्रकोष्ठे सुश्लिष्टविहङ्गवाटीसुखनिषण्णानि अन्योऽन्यचुम्बनपराणि सुखमनुभवन्ति पारावतमिथुनानि, दधिभक्त-पूरितोदरो ब्राह्मण इव सूक्तं पठति पञ्जरशुकः। इयमपरा स्वामि-

(ष) सुश्लिष्टा सुघटना या विहङ्गवाटी पक्षिशाला तस्यां सुखेन निषण्णानि स्थितानि इत्यर्थः। सूक्तं वेदोक्तमन्त्रविशेषं सुवचनञ्च। स्वामिनः सम्माननया आदरेण लब्धः प्रसरः प्रभावः यया तादृशी कुरकुरायते कुरकुरेति अव्यक्तं शब्दायते अन्यत्र सुखरायते। मदनशारिका मयना इति प्रख्याता। कुम्भदासी कुट्टनी कुम्भदासी तु कुट्टनीतिशब्दरत्नावली। परपुष्टा कोकिला। लावकाः पक्षिविशेषाः विधुवतीव कम्पयतीव वीजयतीवेत्यर्थः। पिण्डीकृता इव राशीकृता इव। इत्यभिप्रायः वृद्धाः गमनमन्दत्वादिति भावः। प्रसारणं विस्तारः व्यापनमिति यावत् पक्षिसमूहैर्व्याप्तमित्यर्थः।

चेटी। एदु अज्जो, इमं अट्ठमं पओट्ठं पविसदु अज्जो (१००)।

विदू। प्रविश्यावलोक्य च। भोदि! को एसो पट्टपावारअ-पाउदो अधिअदरं अच्चब्भुद-पुणरुत्तालङ्कारलंकिदो (स) अंगभंगेहिं परिक्खलन्तो इदो तदो परिब्भमदि? (१)।

चेटी। अज्ज! एसो अज्जआए भादा भोदि (२)।

विदू। केत्तिअं तवच्चरणं कदुअ वसन्तसेणाए भादा भोदि। अधवा। मा दाव, जदि वि एसो उज्जलो सिणि

सुस्नाननान्नप्रसरा इव गृहदासी अधिकं कुरकुरायते मदनसारिका। अनेक-फलरसास्वाद प्रहृष्टकण्ठा कुम्भदासीव कूजति परपुष्टा, आलम्बिता नागदन्तेषु पञ्जरपरम्पराः, योध्यन्ते लावकाः आलाप्यन्ते पञ्जरकपिञ्जलाः, प्रेष्यन्ते पञ्जर-कपोताः, इतस्ततो विविध मणि-चित्रित इवायं सहर्षं नृत्यन् रविकिरणसन्तप्तं पक्षोत्क्षेपैर्विधुवतीव प्रासादं गृहमयूरः। इतः पिण्डीकृता इव चन्द्रपादाः पदगतिं शिक्षमाणानीव कामिनीनां पश्चात्परिभ्रमन्ति राजहंसमिथुनानि। एते अपरे वृद्धमेषा इव इतस्ततः सञ्चरन्ति गृहसारसाः। आश्चर्यं भोः प्रसारणं कृतं गणिकाया नानापक्षिसमूहैः। यत्सत्यं खलु नन्दनवनमिव मे गणिकागृहं प्रतिभासते। आदिशतु भवती।

(१००) एत्वार्यः, इममष्टमं प्रकोष्ठं प्रविशत्वार्यः।

(१) भवति! क एष पट्टप्रावारकप्रावृतोऽधिकतरमत्यद्भुतपुनरुक्ता-लङ्कारालङ्कृतः अङ्गभङ्गैः परिस्खलन्नितस्ततः परिभ्रमति?

(२) आर्य! एष आर्यायाः भ्राता भवति।

---

(स) अत्यद्भुतैः पुनरुक्तैः अधिकाधिकैरलङ्कारैरलङ्कृतः शोभितः।

थीअ सुअन्धो अ, तह वि मसाणवीधीए जादो विअ चम्पअरुक्खो अणहिगमणीओ लोअस्स। कञ्चतोऽवलोक्य। भोदि! एसा उण का फुल्लपावारअपाउदा, उवाणह-जुअल-णिक्खित्त-तेल्ल चिक्कणेहिं पादेहिं (छ) उच्चासणे उव-विट्ठा चिट्ठदि? (३)।

चेटी। अज्ज! एसा क्खु अम्हाणं अज्जआए अत्तिआ (४)।

विदू। अहो! से कारट्टडाइणीए पोट्टवित्थारो, ता किं एदं पवेसिअ महादेवं विअ दुआरसोहा इह घरे णिम्मिदा? (च) (५)।

(३) कियत्तपश्चरणं कृत्वा वसन्तसेनाया भ्राता भवति। अथवा मा तावत्, यद्यपि एष उज्ज्वलः स्निग्धश्च सुगन्धश्च तथापि श्मशान-वीथ्यां जात इव चम्पकवृक्षः अनभिगमनीयो लोकस्य। भो! एषा पुनः का पुष्पप्रावारकप्रावृता उपानद्युगल-निक्षिप्त-तैल-चिक्कणाभ्यां पादाभ्यामुच्चासनोपविष्टा तिष्ठति?

(४) आर्य! एषा खल्वस्माकम् आर्याया माता।

(५) अहो! अस्या अपवित्रडाकिन्या उदरविस्तारः, तत्किमेतां प्रवेश्य महादेवमिव द्वारशोभा इह गृहे निर्मिता?

---

(छ) अनभिगमनीयो लोकस्येति वेश्याजातत्वादिति भावः। पुष्प-प्रावारकप्रावृता पुष्पनिर्मितः प्रावारकः उत्तरीयपटः तेन प्रावृता आच्छा-दिता, पादाभ्यामिति विशेषणे तृतीया।

(च) उदरविस्तारः कुक्षेः स्थौल्यं महादेवमिव स्थूलोदराम् एतां वसन्तसेनामातरं, निर्मिता कृता।

चेटी। हदास ! मा एव्वं उवहस अह्माणं अत्तिअं। एसा क्खु चाउत्थिएण (क) पीड़ीअदि (६)।

विदू। सपरिहासम्। भअवं चाउत्थिअ ! एदिणा उवआरेण (ख) मं पि बम्हणं आलोएहि (७)।

चेटी। हदास ! मरिस्ससि (८)।

विदू। सपरिहासम्। दासीए धीए ! वरं ईदिसो सूणपीण-जठरो (ग) मुदो ज्जेव (९)।

सीहु-सुरासव मत्तिआ एआवत्थं गदा हि अत्तिआ।
जइ मरइ एत्थ अत्तिआ भोदि सिआल सहस्स जत्तिआ ॥२९

---

(६) हताश ! मैवमुपहसास्माकं मातरम्। एषा खलु चातुर्थिकेन पीड्यते।

(७) भगवन् चातुर्थिक ! एतेनोपचारेण मामपि ब्राह्मणमालोकय।

(८) हताश ! मरिष्यसि।

(९) दास्याः पुत्रि ! वरम् ईदृशः शूनपीनजठरो मृत एव।

(क) चातुर्थिकेन प्रतिचतुर्थदिवसीयेन रोगविशेषेण।

(ख) उपचारेण स्वाम्येणेत्यर्थः।

(ग) शूनः वृद्धिं प्राप्तः पीनः स्थूलः जठरः उदरं यस्य तादृशः जनः मृत एव वरं मनाक् प्रिय इत्यर्थः।

(२९) सीधुसुरासवमत्ता सीधुभिः सुराभिः आसवैश्च त्रिविधमद्यैः मत्ता समततत् पानरता इत्यर्थः त्रिविधानामेव लक्षणमुक्तं भावप्रकाशे, "इक्षोः पक्वै रसैः सिद्धः सीधुः पक्वरसश्च सः। आमैस्तैरेव यः सीधुः स च शीतरसः स्मृतः। सीधुः पक्वरसः श्रेष्ठः स्वराग्नि-

भोदि ! किं तुम्हाणं जाणवत्ता वहन्ति (घ)·(१०)।

चेटी। अज्ज ! णहि णहि (११)।

विदू। किं वा एत्थ पुच्छीअदि, तुम्हाणं क्खु, पेम्म णिम्मल-जले मअण समुद्दे त्थण-णिअम्ब-जहणा ज्जेव जाणवत्ता मणहरणा। एव्वं वसंतसेणाए बहुवुत्तन्तं, अट्ट-पओट्ठं भवणं पेक्खिअ, जं सच्चं जाणामि, एकत्थं विअ तविट्ठअं दिट्ठं, पसंसिदुं णत्थि मे वाआ विहवो। किं दाव, गणिआ-घरो ? अहवा कुबेर भवणपरिच्छेदो (ङ) त्ति ? कहिं तुम्हाणं अज्जआ ? (१२)।

(१०) शीधुसुरासवमत्ता एतादृशीमवस्थां गता हि माता।
यदि म्रियते अत्र माता भवति शृगालसहस्रयात्रा॥
भवति ! किं युष्माकं यानपात्राणि वहन्ति ?

(११) आर्य्ये! नहि नहि।

(१२) किं वा अत्र पृच्छ्यते, युष्माकं खलु प्रेमनिर्मलजले मदनसमुद्रे

बलवर्णकृत्। वातपित्तकरो हृद्यः स्नेहनो रोचनो हरेत्। विबन्ध-मेदः शोथार्शः शोफोदरकफा मयान्। तस्मादल्पगुणः शीतरसः संके-खनः स्मृतः। शालिषष्टिकपिष्टादिकृतं मद्यं सुरा स्मृता। सुरा गुर्वी बलस्तन्यपुष्टि मेदः कफप्रदा। ग्राहिणी शोथगुल्मार्शो ग्रहणीमूत्रकृच्छ्र-नुत्। यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः। आसवस्य गुणा ज्ञेया वीजद्रव्यगुणैः समा इति। शृगालसहस्राणां यात्रा उत्सवः यात्रा तु यापनोऽपि स्याद्गमनोत्सवयोः स्त्रियामिति मेदिनी।

(घ) यानपात्राणि गमनाधाराः शकटपोतादयः वाणिज्यार्थमिति-भावः वहन्ति चलन्ति अन्यथा कथमीदृगविभव इत्याशयः।

(ङ) कुबेरभवनपरिच्छेदः कुबेरस्य धनपतेर्देवस्य भवनपरिच्छेदः खण्डमिदमिति निश्चयः।

चेटी। अज्ज ! एसा रुक्खवाडिआए चिट्ठदि, ता पविसदु अज्जो (१३)।

विदू। प्रविश्य दृष्ट्वा च। ही ही भो ! अहो रुक्खवाडिआए सस्सिरिअदा ! अच्छरीअ कुसुमा जत्थ रोबिदा अणअपादवा, णिरन्तर पादवतल णिम्मिदा जुवदिजण जहणप्पमाणा पट्टदोला, सुवण्णजूधिआ सेहालिआ मालई-मल्लिआ णोमालिआ कुरवआ-अदिमोत्तअ (च) प्पहुदिकुसुमेहिं सअं णिवाडिदेहिं जं सच्चं, लहु करेदि विअ णन्दणवणस्स सस्सिरीअदं। अन्यतोऽवलोक्य। इदो अ उदअन्तर-समप्पहेहिं कमलरत्तोप्पलेहिं सञ्झाअदि विअ दीहिआ।

अवि अ,

स्तनितम्बजघनान्येव यानपात्राणि मनोहराणि। एवं वसन्तसेनाया बहुवृत्तान्तम् अष्टप्रकोष्ठं भवनं प्रेक्ष्य, यत्सत्यं जानामि एकस्थमिव त्रिविष्टपं दृष्टं, प्रशंसितुं नास्ति मे वाग्विभवः। किं तावत् गणिकागृहम् ? अथवा कुवेरभवनपरिच्छेदः ? इति। कुत्र युष्माकमार्या ?

(१३) आर्य्य ! एषा वृक्षवाटिकायां तिष्ठति, तस्मात् प्रविशत्वार्य्यः।

---

(च) अच्छा निर्मला निर्दोषा मनोहरा इति यावत् रीतिः विकाशप्रकारः येषां तादृशानि कुसुमानि येषां तथोक्ताः। आश्चर्य-कुसुमा इति पाठान्तरं पट्टदोला पट्टसूत्रनिर्मिता दोला। सुवर्णेत्यादि। शोभनो वर्णो येषां तादृशैः कुसुमैरित्यनेनान्वयः। अतिमुक्तकः माधवीलता।

एसो असोअ-रुक्खो णवणिग्गम-कुसुम-पल्लवो भादि ।
सुहडो व्व समरमज्झे घण-लोहिद-पङ्क-चच्चिक्को ॥२०॥

भोदु, ता कहिं तुम्हाणं अज्जआ ? (१४) ।

चेटी । अज्ज ! ओणमेहि दिट्ठिं पेक्ख अज्जअं (१५) ।

विदू । दृष्ट्वा उपसृत्य । सोत्थि भोदीए (१६) ।

वसं । अये ! मैत्रेयः । उत्थाय । स्वागतम् ? इदमासनम्, अत्रोपविश्यताम् ।

(१४) आश्चर्य्यं, भो ! अहो वृक्षवाटिकायाः सश्रीकता ! आश्च-र्य्यकुसुमा यत्र रोपिता अनेकपादपाः, निरन्तर-पादपतल-निर्मिता युवतिजन-जघन-प्रमाणा पट्टदोला, सुवर्णयूथिका-शेफालिका-मालती-मल्लिका-नवमल्लिका-कुरुवकातिमुक्तक-प्रभृतिकुसुमैः स्वयं निपतितैर्लघुत्वं करोतीव नन्दनवनस्य सश्रीकताम् । इतश्च, उदयत्सूर्य्यसमप्रभैः कमल-रक्तोत्पलैः सन्ध्यायते इव दीर्घिका ।

अपि च, एषोऽशोकवृक्षो नवनिर्गत कुसुमपल्लवो भाति ।
सुभट इव समरमध्ये घनलोहितपङ्कचर्च्चिकः ॥

भवतु, तत् कुत्र युष्माकमार्य्या ?

(१५) आर्य्य ! अवनमय दृष्टिं, पश्यार्य्याम् ।

(१६) स्वस्ति भवत्यै ।

(२०) घनलोहितपङ्कचर्च्चिकः । घनैर्लोहितैरक्तैरेव पङ्कैः चर्च्चा गात्रशोभा घनलोहितपङ्कचर्च्चा तया युक्त इति । ठञेकादिति स्वार्थे णिक प्रत्ययः । इदमासनमित्यादि वाक्यं वसन्तसेनाया वैदग्ध्यद्योतनाय संस्कृतभाषया निबद्धं तदाह भरतः । कार्य्यतश्चोत्तमादीनां कार्य्यो भाषा विपर्य्ययः । योषित् सखीबालवेश्या कितवाप्सरसां तथा । वैदग्ध्यार्थं प्रदातव्यं संस्कृतञ्चान्तरान्तरा इति ।

विदू। उवविसदु भोदी (१७)। उभाउपविशतः।

वधू। अपि कुशलं सार्थवाहपुत्रस्य ?।

विदू। भोदि ! कुसलं (१८)।

वधू। आर्य्य मैत्रेय ! अपीदानीम्।

गुणप्रवालं विनयप्रशाखं विश्रम्भमूलं महनीयपुष्पम्।
तं साधुवृक्षं स्वगुणैः फलाढ्यं सुहृद्विहङ्गाः सुखमाश्रयन्ति ?॥२१

विदू। स्वगतम्। सुट्ठु उवलक्खिदं (क) दुट्ठविलासिणीए।
प्रकाशम्। अवइं (१९)।

वधू। अये ! किमागमनप्रयोजनम् ?।

विदू। सुणादु भोदी। तत्तभवं चारुदत्तो सीसे अञ्जलिं
कदुअ भोदिं विण्णवेदि (२०)।

वधू। अञ्जलिं बद्ध्वा। किमाज्ञापयति ?।

---

(१७) उपविशतु भवती।

(१८) भवति ! कुशलम्।

(१९) सुष्ठु उपलक्षितं दुष्टविलासिन्या। अथ किम्।

(२०) शृणोतु भवती। तत्रभवान् चारुदत्तः शीर्षे अञ्जलिं कृत्वा
आर्य्यां विज्ञापयति।

(२१) गुणप्रवालमिति। सुहृद एव विहङ्गाः पक्षिणः गुणा
दयादाक्षिण्यादय एव प्रवालाः पल्लवाः यस्य तं विनया एव प्रशाखाः
प्रकृष्टाः शाखाः यस्य तादृशं विश्रम्भः विश्वास एव मूलं यस्य तथोक्तं
महनीयपुष्पं तथा स्वगुणैः विशिष्टनिजगुणैः फलाढ्यम् उत्कृष्टगुणफल-
युक्तमित्यर्थः तं साधुरेव वृक्षः तं सुखं यथा तथा आश्रयन्ति ?

(क) उपलक्षितं अनुभूतम्।

विदू। मए तं सुवस्सभण्डअं विस्सम्भादो अत्तणकेरकेत्ति कदुअ जूदे हारिदं, सो अ सहिओ राअंवात्थहारी (ज) ण आणिअदि कहिं गदो त्ति (२१)।

चेटी। अज्जए! दिट्टिआ वड्ढसि, अज्जो जूदिअरो संवुत्तो (२२)।

वसं। स्वगतम्। कधं! चोरेण अवहदं पि सोण्डीरदाए (झ) जूदे हारिदं त्ति भणादि, अदो ज्जेव कामीअदि (२३)।

विदू। ता तस्स कारणादो गेण्हदु भोदी इमं रअणावलिं (२४)।

वसं। आत्मगतम्। किं दंसेमि तं अलङ्कारअ? विचिन्त्य। अधवा ण दाव (२५)।

(२१) मया तत् सुवर्णभाण्डं विश्रम्भादात्मीयमिति कृत्वा द्यूते हारितं, स च सभिको राजवार्त्ताहारी न ज्ञायते कुत्र गत इति।

(२२) आर्य्ये! दिष्ट्या वर्द्धसे, आर्य्यो द्यूतकरः संवृत्तः।

(२३) कथं, चौरेणापहृतमपि शौण्डीरतया द्यूते हारितमिति भणति, अतएव काम्यते।

(२४) तत्तस्य कारणात् गृह्णातु भवती इमां रत्नावलीम्।

(२५) किं दर्शयामि तमलङ्कारम्? अथवा न तावत्।

(ज) विश्रम्भात् विश्वासात् सभो विश्रम्भविश्वासाविस्रम्भः राजवार्त्ताहारी राजवार्त्तावहः।

(झ) शौण्डीरतया अत्यौदार्य्येण इत्यर्थः।

विदू। किं दाव ण गेण्हदि भोदी, एदं रअणावलिं ? (२६)।

वधू। विदूषकस्य मुखमवलोकयन्ती। मित्तेअ ! कधं ण गेण्हिस्सं रअणावलिं। इति गृहीत्वा पार्श्वे स्थापयति, स्वगतम्। कधं झीणकुसुमादो वि सहआरपादवादो मअरन्दविन्दुओ णिवडन्ति ! प्रकाशम्। अज्ज ! विण्णवेहि तं जूदिअरं मम वअणेण अज्जचारुदत्तं अहं पि पदोसे अज्जं पेक्खिदुं आअच्छामि त्ति (२७)।

विदू। स्वगतम् किं अण्णं तहिं गदुअ गेण्हिस्सदि ? प्रकाशम्। भोदि ! भणामि। स्वगतम्। णिअत्तीअदु गणिआपसङ्गादो त्ति (२८)। इति निष्क्रान्तः।

वधू। हञ्जे ! गेण्ह एदं अलङ्कारअं चारुदत्तं अहिरमिदुं गच्छम्ह (२९)।

चेटी। अज्जए ! पेक्ख पेक्ख, उण्णमदि अकालदुद्दिणं (३०)

(२६) किं तावत् न गृह्णाति भवती इमां रत्नावलीम् ?

(२७) मैत्रेय ! कथं न ग्रहीष्यामि रत्नावलीम्। कथं ! क्षीणकुसुमादपि सहकार-पादपान्मकरन्दविन्दवो निपतन्ति ! आर्य्य ! विज्ञापय तं द्यूतकरं मम वचनेनार्य्यचारुदत्तम्। अहमपि प्रदोषे आर्य्यं प्रेक्षितुमागच्छामीति।

(२८) किमन्यत्र गत्वा ग्रहीष्यति ? भवति ! भणामि निवर्त्ततां सम्प्रात् गणिकाप्रसङ्गादिति।

(२९) चेटि ! गृहाणैतमलङ्कारं, चारुदत्तमभिरन्तुं गच्छामः।

(३०) आर्य्ये ! पश्य पश्य, उन्नमत्यकालदुर्द्दिनम्।

वसं। उदयन्तु नाम मेघा, भवतु निशा, वर्षमविरतं पततु।
गणयामि नैव सर्व्वं दयिताभिमुखेन हृदयेन ॥३२॥

हञ्जे! हारं गेह्णिअ लहुं आअच्छ (३१) इति निष्क्रान्ताः सर्व्वे।

मदनिकार्थविलको नाम चतुर्थोऽङ्कः।

# पञ्चमोऽङ्कः।

ततः प्रविशत्यासनस्थः सोत्कण्ठश्चारुदत्तः।

चारु। ऊर्द्धमवलोक्य। उन्नमत्यकालदुर्दिनम्। यदेतत्।

आलोकितं गृहशिखण्डिभिरुत्कलापै-
र्हंसैर्यियासुभिरपाकृतमुन्मनस्कैः।
आकालिकं सपदि दुर्दिनमन्तरीक्ष-
मुत्कण्ठितस्य हृदयं च समं रुणद्धि ॥ १ ॥

(३१) चेटि! हारं गृहीत्वा शीघ्रमागच्छ

(३२) उदयन्त्विति। मेघा उदयन्तु उद्गच्छन्तु, निशा भवतु, अविरतं वर्षं वृष्टिः पततु, अहं दयिताभिमुखेन प्रियाभिगमनोत्सुकेन हृदयेन एतत् सर्वं नैव गणयामि लक्षयामि।

(१) आलोकितमिति। उत्कलापैः ऊर्द्ध्वं प्रसारितबर्हैः गृह-शिखण्डिभिः गृहमयूरैः आलोकितं दृष्टं तथा यियासुभिः गन्तु-

अपिच ।

मेघो जलार्द्र महिषोदर भृङ्गनीलो,
विद्युत्प्रभा-रचित-पीत पटोत्तरीयः ।
आभाति संहत बलाक-गृहीतशङ्खः,
खं केशवोऽपर इवाक्रमितुं प्रवृत्तः ॥ २ ॥

अपिच ।

केशव गात्रश्यामः कुटिल बलाकावली-रचितशङ्खः ।
विद्युद्गुण-कौशेयश्चक्रधर इवोन्नतो मेघः ॥ ३ ॥

मिच्छुभिः मानसं सर इति शेषः जलधरसमये मानसं यान्ति हंसा इति कविसमयप्रसिद्धिवचनात् अतएव उन्मनस्कैः मानसगमनाय उत्सुकै-रित्यर्थः हंसैः अपाकृतं निराकृतं अनभिनन्दितमित्यर्थः आकालिकं असमयोत्पन्नं दुर्दिनं मेघाच्छन्नमहः मेघाच्छन्नेऽह्नि दुर्दिनमित्यमरः सपदि झटिति अन्तरीक्षम् आकाशम् उत्कण्ठितस्य जनस्य हृदयञ्च समं युगपत् रुणद्धि आवृणोति उद्वेजयति च । अत्र वसन्ततिलकं वृत्तम् ।

(२) मेघ इति । जलार्द्रमहिषस्य उदरं भृङ्गश्च तद्वत् नीलः श्यामः विद्युत्प्रभया रचितं पीतपट इव उत्तरीयं यस्य तादृशः तथा संहतः संलग्नः बलाक एव गृहीतशङ्खः हस्तधृतपाञ्चजन्यं यस्य तथा-भूतः मेघः अपरः द्वितीयः केशव इव वामन इव खम् आकाशम् आक्रमितुं प्रवृत्तः । पुरा किल वामनरूपो हरिः बलियज्ञे त्रिपाद्मितां भूमिं भिक्षित्वा एकेन पदा आकाशमाचक्रामेति पौराणिकी वार्त्ता-त्रानुसन्धेया । वसन्ततिलकं वृत्तम् । उपमालङ्कारश्च ।

(३) उक्तमर्थमार्य्यया पुनराह केशवेति । केशवगात्रवत् श्यामः कुटिला वक्रगमनशीला या बलावली बकपङ्क्तिः सा एव रचितः कृतः शङ्खः येन तथोक्तः तथा विद्युदेव गुणः विद्युद्गुणः स एव कौशेयं

एता निषिक्त-रजतद्रव-सन्निकाशा
धारा जवेन पतिता जलदोदरेभ्यः।
विद्युत्प्रदीपशिखया क्षणनष्टदृष्टा-
श्छिन्ना इवाम्बरपटस्य दशाः पतन्ति ॥ ४ ॥

संसक्तैरिव चक्रवाक-मिथुनैर्हंसैः प्रडीनैरिव
व्याविद्धैरिव मीनचक्रमकरैर्हर्म्यैरिव प्रोच्छ्रितैः।
तैस्तैराकृतिविस्तरैरनुगतैर्मेघैः समभ्युन्नतैः
पत्रच्छेद्यमिवेह भाति गगनं विश्लेषितैर्वायुना ॥ ५ ॥

शौतवस्त्रं यस्य कौशेयं क्रिमिकोशोत्थमित्यमरः मेघः चक्रधर इव कृष्ण इव उन्नतः उदितः। आर्य्यावृत्तमिदम्।

(४) एता इति। निषिक्ताः क्षरिताः ये रजतद्रवाः द्रवीभूत-रजतानीत्यर्थः तेषां सन्निकाशाः सदृश्यः जलदोदरेभ्यः मेघजठरेभ्यः पतिता एताः धाराः विद्युदेव प्रदीपशिखा तया क्षणेन नष्टा दृष्टाश्च सत्यः छिन्नाः अम्बरपटस्य आकाशरूपवसनस्य दशाः प्रान्तभागा इव जवेन पतन्ति। वसन्ततिलकं वृत्तम्। अत्र रूपकानुप्राणितोपमालङ्कारः।

(५) संसक्तैरिति। वायुना विश्लेषितैः विभेदं गमितैः इतस्ततश्चालितैरित्यर्थः। संसक्तैः मिलितैः चक्रवाकमिथुनैरिव, प्रडीनैः उड्डीयमानैः हंसैरिव व्याविद्धैः समुद्रमन्थनादुत्पतितैः मीनानां चक्रैः समूहैः तथा मकरैरिव प्रोच्छ्रितैः समुन्नतैः हर्म्यैरिव तैः तैः आकृतीनां विस्तरैः अनुगतैः युक्तैः समभ्युन्नतैः अत्युच्छ्रितैः मेघैः कारणीभूतैरित्यर्थः इह एतत्प्रदेशावच्छिन्नं गगनं पत्रच्छेद्यम् आलेख्यगतमिव भाति विराजते। उत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

एतत्तद्धृतराष्ट्र-चक्रसदृशं मेघान्धकारं नभो,
हृष्टो गर्जति चातिदर्पितबलो दुर्य्योधनो वा शिखी।
अक्षद्यूतजितो युधिष्ठिर इवाध्वानं गतः कोकिलो,
हंसाः सम्प्रति पाण्डवा इव वनादज्ञातचर्य्यां गताः ॥६॥

विचिन्त्य। चिरः खलु कालो मैत्रेयस्य वसन्तसेनायाः सकाशं गतस्य, नाद्याप्यागच्छति।

प्रविश्य विदूषकः। अहो ! गणिआए लोभो अदक्खिणदा अ, जदो ण कधा वि कदा असा, अणाअरेण ज्जेव अभणिअ किं पि, एअमेअ गहिदा रअणावली। एत्तिआए ऋद्धीए ण तए अहं भणिदो, अज्ज मित्तेअ ! वीसमीअदु

---

(६) एतदिति। एतत् मेघैः अन्धकारो यस्मिन् तत् मेघाहृत-मित्यर्थः नभः आकाशं तस्य प्रसिद्धस्य तच्छब्दोऽत्र प्रसिद्धार्थकः। धृत-राष्ट्रचक्रस्य धृतराष्ट्राधिकारस्य सदृशं वर्त्तते इति शेषः तथाहि शिखी मयूरः अतिदर्पितबलः दुर्य्योधनो वा दुर्योधन इव वा स्यादिकल्पोपमयो-रेवार्थेऽपि समुच्चये इत्यमरः। हृष्टः सन् गर्जति शब्दायते, कोकिलः अक्षद्यूते पाशक्रीड़ायां जितः युधिष्ठिर इव अध्वानम् अशब्दं मौनमिति यावत्। गतः प्राप्तः अध्वानमित्यत्र अरण्यमिति पाठे अरण्यं वनं गतः वसन्तापगमे कोकिलानां निःशब्दतया वनगमनस्य कविसमयसिद्धत्वादिति भावः, सम्प्रति हंसाः पाण्डवा इव वनात् स्वप्रचारस्थानात् द्वादशवर्षो-षितात् अरण्यात् अज्ञातचर्य्याम् अज्ञाते परैरविदिते मानसे सरसि चर्य्यां गमनं जलधरसमये मानसं यान्ति हंसा इति कविप्रसिद्धेः अन्यत्र अज्ञाते परैरविदिते स्थाने विराटराज्ये इत्यर्थः चर्य्यां वासं गताः प्राप्ताः। श्लोपमानुप्राणित समासोक्तिरलङ्कारः, इदञ्च शार्दूलविक्रीडितम्।

मल्लकेण पाणीअं पि पिबिअ गच्छीअदु त्ति । ता मा दाव दासीए धीआए गणिआए मुहं पि पेक्खिस्सं । विचिन्त्य । सुट्ठु क्खु वुच्चदि, अकन्द-समुत्थिदा पउमिणी, अवंचओ वाणिओ, अचोरो सुवस्सआरो, अकलहो गामसमागमो, अलुद्धा गणिआ त्ति, दुक्कर एदे संभावीअन्ति (क) । ता पिअवअस्सं गदुअ इमादो गणिआ पसंगादो णिवत्ताबेमि । परिक्रम्य दृष्ट्वा । कधं ! पिअवअस्सो रुक्खवाड़िआए उवविट्ठो चिट्ठदि, ता जाव उवसप्पामि । उपसृत्य । सोत्थि भवदे वड्ढदु भवं (१) ।

---

(१) अहो ! गणिकाया लोभः अदाक्षिण्यता च, यतो न कथापि कृता अनया, अनादरेणैव अभणित्वा किमपि एवमेव गृहीता रत्नावली । एतावत्या ऋद्ध्या न तया अहमभाणितः, आर्य्य मैत्रेय ! विश्रम्यतां, मल्लकेन पानीयमपि पीत्वा गम्यतामिति, तत् मा तावत् दास्याः पुत्र्या गणिकाया मुखमपि द्रक्ष्यामि । सुष्ठु खलु उच्यते, अकन्दसमुत्थिता पद्मिनी, अवञ्चको वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः, अलुब्धा गणिकेति, दुष्करमेते सम्भाव्यन्ते । तत् प्रियवयस्यं

(क) अदाक्षिण्यता अनुदारता, (अस्सा) इत्यस्य अनया इति संस्कृतं साधुतया सङ्गच्छते अन्या इत्यस्यार्थः न तथा मनोरमः प्रतिभातीति बोध्यम् । किमपि अभणित्वा कथं हारितं सुवर्णभाण्डं कदा वा कथञ्चैतत् प्रतिदानमिति अकथयित्वा इत्यर्थः । ऋद्ध्या सम्पत्त्या, मल्लकेन पात्रविशेषेण मल्लः पात्रे कपोले चेति मेदिनी, अकन्दसमुत्थिता, कन्दः मूलविशेषः भुँपोति भाषा, विना कन्दं समुत्थिता, ग्रामसमागमः ग्रामे लोकसमागम इत्यर्थः । दुष्करं सम्भाव्यन्ते सम्भावना दुष्करा नैव सम्भाव्यते इत्यर्थः ।

चारु। विलोक्य। अये! सुहृन्मे मैत्रेयः प्राप्तः। वयस्य! स्वागतम्? आस्यताम्।

विदू। उवविट्टम्हि (२)।

चारु। वयस्य! कथय तत् कार्य्यम्।

विदू। तं क्खु कज्जं विणट्टं (३)।

चारु। किं तया न गृहीता रत्नावली?।

विदू। कुदो अम्हाणं एत्तिअं भाअधेअं? णव णलिणकोमलं अञ्जलिं मत्थए कदुअ पड़िच्छिआ (४) (ख)।

चारु। तत्किं ब्रवीषि विनष्टमिति?।

विदू। भो! कधं ण विणट्टं, जं अभुत्तस्स अपीदस्स चोरेहिं अवहृदस्स अप्पमुल्लस्स सुवण्णभंडअस्स कारणादो चदुस्समुद्दसारभूदा रअणमाला हारिदा (५)।

---

गत्वा चस्मात् गणिकाप्रसङ्गात् निवर्त्तयामि। कथं! प्रियवयस्यो वृक्षवाटिकायामुपविष्टस्तिष्ठति, तत् यावदुपसर्पामि, स्वस्ति भवते, वर्द्धतां भवान्।

(२) उपविष्टोऽस्मि।

(३) तत् खलु कार्य्यं विनष्टम्।

(४) कुतोऽस्माकमेतावद्भागधेयं, नवनलिनकोमलमञ्जलिं मस्तके कृत्वा प्रतीष्टा।

(५) भोः! कथं न विनष्टम्? यत् अभुक्तस्यापीतस्य चौरैरपहृतस्य अल्पमूल्यस्य सुवर्णभाण्डस्य कारणात् चतुःसमुद्रसारभूता रत्नमाला हारिता।

---

(ख) प्रतीष्टा प्रतिगृहीता।

चारु। वयस्य ! मा मैवम्।

यं समालम्ब्य विश्वासं न्यासोऽस्मासु तया कृतः।

तस्यैतन्महतो मूल्यं प्रत्ययस्यैव दीयते ॥ ७ ॥

विदू। भो वअस्स ! एदं पि मे दुदिअं सन्ताव-कारणं जं सहीअण-दिस-संणाए पडन्तोवारिदं मुहं कदुअ, अहं उवहसिदो, ता अहं बम्हणो भविअ दाणिं भवन्तं सीसेण पडिअ विसज्जेमि। णिवत्तीअदु अप्पा इमादो बहुपच्चवाआदो गणिआपसंगादो। गणिआ णाम पादुअन्तर-प्पविट्टा विअ लेट्ठुआ दुक्खेण उण णिराकरीअदि। अविअ, भो वअस्स ! गणिआ, हत्थी, काअत्थओ, भिक्खु, चाटो, रासहो अ, जहिं एदे णिवसन्ति तहिं दुट्टा वि ण जाअंति (६) (ग)।

---

(६) भो वयस्य ! एतदपि मे द्वितीयं सन्तापकारणं, यत् सखीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वा अहमुपहसितः। तदहं ब्राह्मणो भूत्वा इदानीं भवन्तं शीर्षेण पतित्वा विज्ञापयामि। निवर्त्त्य-तामात्मा अस्माद् बहुप्रत्यवायात् गणिकाप्रसङ्गात्। गणिका नाम, पादुकान्तरप्रविष्टा इव लेष्टुका, दुःखेन पुनर्निराक्रियते। अपिच, भो वयस्य ! गणिका, हस्ती, कायस्थो, भिक्षुः, चाटो, रासभश्च, यत्र एते निवसन्ति, तत्र दुष्टा न जायन्ते।

---

(७) यमिति। तया वसन्तसेनया यं विश्वासं समालम्ब्य अस्मासु न्यासः कृतः तस्य महतः प्रत्ययस्य विश्वासस्यैव एतत् मूल्यं दीयते इत्यन्वयः। अनुष्टुप् वृत्तम्।

(ग) सखीजनदत्तसंज्ञया सखीजनेन दत्ता संज्ञा सङ्केतः यस्यै तया

चारु। वयस्य! अलमिदानीं सर्वं परिवादमुक्त्वा, अवस्थयैवास्मि (च) निवारितः। पश्य।

वेगं करोति तुरगस्त्वरितं प्रयातुं,
प्राणव्ययान्न चरणास्तु तथा वहन्ति।
सर्वत्र यान्ति पुरुषस्य चलाः स्वभावाः,
खिन्नास्ततो हृदयमेव पुनर्विशन्ति॥ ८॥

अपि च। वयस्य!।

यस्यार्थास्तस्य सा कान्ता, धनहार्य्यो ह्यसौ जनः।

स्वगतम्। न, गुणहार्य्यो ह्यसौ जनः। प्रकाशम्।

संज्ञा स्यात्चेतना नाम हस्ताद्यैश्चार्थसूचनेत्यमरः, पटान्तापवारितम् अञ्चलाच्छादितम्। बहुप्रत्यवायात् पापभूयिष्ठात्। लेष्टुका चुट्लोष्टुं काँकर इति भाषा, गणिकाप्रणयः अनायासेन न निराकर्तुं शक्यते इति भावः चाटः धूर्त्तः। यत्र यस्मिन् आश्रये यमाश्रित्य इत्यर्थः दुष्टाः सदोषा अपि जना न जायन्ते न तिष्ठन्तीत्यर्थः दोषातिरेक-स्यावश्यम्भावादिति भावः।

(च) परिवादं निन्दाम् उक्त्वा अलं निन्दावादेनालमित्यर्थः। अवस्थयैवेति दुरवस्थं जनं वेश्या न समाश्रयतीति भावः।

(८) वेगमिति। तुरगः त्वरितं प्रयातुं वेगं करोति, तु किन्तु चरणाः तदीया इत्यर्थः प्राणव्ययात् बलक्षयात् अधिकसमयपर्य्यटनेनेति भावः तथा न वहन्ति न धावन्ति तथाहि पुरुषस्य बलाश्चञ्चलाः स्वभावाः सर्वत्र यान्ति, पुनः किन्तु ततः खिन्नाः खेदं प्राप्ताः सन्तः कल्पना-मात्रसारत्वादिति भावः हृदयमेव विशन्ति लयं गच्छन्ति। वसन्त-तिलकं वृत्तम्।

वयमर्थैः परित्यक्ता, ननु त्यक्तैव सा मया ॥ ८ ॥

विदू। अधोऽवलोक्य स्वगतम्। जधा, एसो उड्ढं पेक्खिअ दीहं णिससदि, तधा तक्केमि मए विणिवारिअन्तस्स अधिअदरं वड्ढिदा से उक्कण्ठा, ता, सुट्ठु क्खु, एव्वं वुच्चदि, कामो वामो (ङ) त्ति। प्रकाशम्। भो वअस्स! भणिदं अ ताए भणेहि चारुदत्तं, अज्ज पओसे मए एत्थ आअन्तव्वं त्ति, ता तक्केमि रअणावलीए अपरितुट्ठा अवरं मग्गिदुं आअमिस्सदि त्ति (७)।

चारु। वयस्य! आगच्छतु, परितुष्टा यास्यति।

चेटः। प्रविश्य। अवेध (च) माणहे!।

(७) यथा एष ऊर्द्ध्वं प्रेक्ष्य दीर्घं निश्वसिति, तथा तर्कयामि, मया निवार्य्यमाणस्य अधिकतरं वृद्धा अस्योत्कण्ठा, तत् सुष्ठु खल्वेवमुच्यते, कामो वाम इति। भो वयस्य! भणितञ्च तया, भण चारुदत्तम्, अद्य प्रदोषे मया अत्रागन्तव्यमिति, तत्तर्कयामि रत्नावल्या अपरितुष्टा अपरं याचितुमागमिष्यतीति।

(८) यस्येति। यस्य जनस्य अर्थाः धनानि सन्तीति शेषः तस्य सा कान्ता वसन्तसेना, हि यतः असौ जनः धनहार्य्यः धनेन हार्य्यः वशगः वेश्यात्वादिति भावः। ( न, धनहार्य्यः न भवतीति भावः हि यतः असौ गुणहार्य्यः ) वयम् अर्थैः परित्यक्ताः हीनाः, ननु भोः सा मया त्यक्ता एव सुतरां त्यक्ता इत्यर्थः।

(ङ) वामः प्रतिकूलः दुर्निवार्य्यतयेति भावः।

(च) अवेत अवगच्छत।

जधा जधा वश्शदि अब्भखण्डे, तधा तधा तिम्मदि पुट्ठिचम्मे ।
जधा जधा लग्गदि शीदवादे, तधा तधा वेवदि मे हलक्के (८)१०

प्रहस्य ।

वंशं वाए शत्तच्छिद्दं शुशद्दं, वीणं वाए शत्ततन्तिं णदन्तिं ।
गीअं गाए गद्दहश्शाणुलूअं के मे गाणे तुम्बुलू णालदे वा (९) ११

आणत्तम्हि अज्जआए वशन्तशेणाए, कुम्भीलआ ! गच्छ तुमं, मम आगमणं अज्जचालुदत्तश्श णिवेदेहि त्ति, ता जाव ! अज्ज-चालुदत्तश्श गेहं गच्छामि । परिक्रम्य प्रविष्टकेन दृष्ट्वा । एशे चालुदत्ते लुक्खवाडिआए चिट्ठदि । एशे वि शे दुट्टबडुके, ता जाव उवशप्पेमि । कधं ढक्किदे दुवाले लुक्खवाडिआए ! भोदु, एदश्श दुट्टबडुकश्श शण्णं (क) देमि (१०) । इति लोष्टगुटिकाः क्षिपति ।

(८) अवेत मानवाः !
यथा यथा वर्षति अभ्रखण्डं, तथा तथा तिम्यति पृष्ठचर्म ।
यथा यथा लगति शीतवात स्तथा तथा वेपते मे हृदयम् ॥

(९) वंशं वादयामि सप्तच्छिद्रं सुशब्दं, वीणां वादयामि सप्ततन्त्रीं नदन्तीम् ।
गीतं गायामि गर्द्दभस्यानुरूपं को मे गाने तुम्बुरुर्नारदो वा ॥

(१०) आज्ञप्तोऽस्मि आर्य्यया वसन्तसेनाया, कुम्भीलक ! गच्छ त्वं ममागमनमार्य्यचारुदत्तस्य निवेदयेति, तद्यावत् आर्य्यचारुदत्तस्य गेहं

(१०) अभ्रखण्डं मेघशकलं, तिम्यति आर्द्रीभवति । उपेन्द्रवज्राहृत्तम् ।

(११) तुम्बुरुर्नारदो वा गाने विषये मम कः न कोपीत्यर्थः अतितुच्छम् इति यावत् । अत्र शालिनीवृत्तम् ।

(क) संज्ञां सङ्केतम् ।

विदू। अए! को दाणिं एसो पाआर वेट्टिदं (ज) विअ कइत्थं मं लोट्टकेहिं ताडेदि? (११)।

चारु। आराम-प्रासाद-वेदिकायां (झ) क्रीड़द्भिः पारावतैः पातितं भवेत्।

विदू। दासीए उत्त दुट्ट पारावअ! चिट्ठ, चिट्ठ जाव एदिणा दण्डकट्ठेण सुपक्कं विअ चूअफलं इमादो पासादादो भूमीए पाड़इस्सं (१२)। इति दण्डकाष्ठमुद्यम्य धावति।

चारु। यज्ञोपवीते आकृष्य। वयस्य! उपविश, किमनेन, तिष्ठतु दयितासहितस्तपस्वी (ञ) पारावतः।

गच्छामि। एष चारुदत्तो वृक्षवाटिकायां तिष्ठति, एषोऽपि स दुष्टवटुकः, तद्यावदुपसर्पामि। कथमाच्छादितं द्वारं वृक्षवाटिकायाः! भवतु, एतस्य दुष्टवटुकस्य संज्ञां ददामि।

(११) अये! क इदानीमेव प्राकारवेष्टितमिव कपित्थं मां लोष्टकैस्ताड़यति?

(१२) दास्याः पुत्र दुष्टपारावत! तिष्ठ, तिष्ठ, यावदेतेन दण्डकाष्ठेन सुपक्कमिव चूतफलम् अस्मात् प्रासादात् भूमौ पातयिष्यामि।

---

(ज) प्राकारवेष्टितं प्राचीरान्तःस्थितम्।

(झ) आरामप्रासादवेदिकायाम् आरामे उपवने आरामः स्यादुपवनमित्यमरः यः प्रासादः हृहदट्टालिका तत्र या वेदिका तस्याम्।

(ञ) तपस्वी वराकः अनभिज्ञतया निर्दोष इत्यर्थः।

चेटः। कधं पारावदं पेक्खदि मं ण पेक्खदि? भोदु, अवराए लोट्टगुड़िआए पुणो वि ताड़इस्सं (१३)। तथा करोति।

विदू। दिशोऽवलोक्य। कधं कुम्भीलओ? ता जाव उव सप्पामि। उपसृत्य, द्वारमुद्घाट्य। अरे कुम्भीलअ? पविस, साअदं दे? (१४)।

चेटः। प्रविश्य। अज्ज! वन्दामि (१५)।

विदू। अरे! कहिं तुमं ईदिसे दुद्दिणे अन्धआरे आअदो? (१६)

चेटः। अले! एशा शा (१७)।

विदू। का एसा का? (१८)।

चेटः। एशा शा (१९)।

विदू। किं दासीए दासीए उत्ता! दुब्भिक्खकाले

(१३) कथं पारावतं पश्यति मां न पश्यति? भवतु, अपरया लोष्टगुटिकया पुनरपि ताड़यिष्यामि।

(१४) कथं कुम्भीलक! तत् यावदुपसर्पामि, अरे कुम्भीलक! प्रविश, स्वागतं ते?

(१५) आर्य्य! वन्दे।

(१६) अरे! कुत्र त्वमीदृशे दुर्दिने अन्धकारे आगतः?

(१७) अरे! एषा सा।

(१८) का एषा का?

(१९) एषा सा।

बुड्ढरङ्को विअ (ट) उदकं सासाअसि एसा सा मेत्ति (२०)।

चेटः। अले! तुमं पि दाणिं इन्दमह-कामुको विअ सुट्ठु किं काकाअसि काऐत्ति (२१) (ठ)।

विदू। ता कहेहि (२२)।

चेटः। स्वगतम्। भोदु, एव्वं भणिश्शं। प्रकाशम्। अले! पह्णं दे दइश्शं (२३)।

विदू। अहं दे मुण्डे गोड़ं दइस्सं (२४)।

चेटः। अले! जाणाहि दाव तेण हि, कश्शिं काले चूआ मौलेन्ति? (२५)।

(२०) किमिदानीं दास्याः पुत्र! दुर्भिक्षकाले वृद्धरङ्क इव उदकं स्वादयसे, एषा सा मेति।

(२१) अरे! त्वमपि इदानीमिन्द्रमखकामुक इव सुष्ठु किं काका-यसे काकेति।

(२२) तत् कथय।

(२३) भवतु, एवं भणिष्यामि। अरे! प्रश्नं ते दास्यामि।

(२४) अहन्ते मस्तके पादं दास्यामि।

(२५) अरे! जानीहि तेन हि, कस्मिन् काले चूताः मुकुलिता भवन्ति?

---

(ट) वृद्धरङ्क इव वृद्धाधम इव अतिदृद्ध इवेत्यर्थः।

(ठ) इन्द्रमखकामुक इव इन्द्रस्य मखः यज्ञः शक्रध्वजपूजा इत्यर्थः तस्य कामुक इव आकाङ्क्षीव शक्रध्वजपूजायां हि काकेभ्यो वलिर्दीयते इति प्रसिद्धिः, तद्वलिकामुकः काक इवेति भावः।

विदू । अरे दासीए उत्ता ! गिम्हे (२६) ।

चेटः । सहासम् । अले ! णहि णहि (२७) ।

विदू । स्वगतम् । किं दाणिं एत्थ कहिस्सं । विचिन्त्य । भोदु, चारुदत्तं गदुअ पुच्छिस्सं । प्रकाशम् । अरे ! मुहुत्तअं चिट्ठ । चारुदत्तमुपसृत्य । भो वअस्स ! पुच्छिस्सं दाव, कस्सिं काले चूआ मौलेन्ति ? (२८) ।

चारु । मूर्ख ! वसन्ते ।

विदू । चेटमुपगम्य । मुक्ख ! वसन्ते (२९) ।

चेटः । दुदिअं दे पह्णं दइश्शं । शुशमिद्धाणं गामाणं का लक्खअं कलेदि ? (३०) ।

विदू । अरे ! रच्छा (३१) ।

चेटः । सहासम् । अले ! णहि णहि (३२) ।

विदू । भोदु, संसए पड़िदम्हि । विचिन्त्य । भोदु, चारु-

---

(२६) अरे दास्याः पुत्र ! ग्रीष्मे ।

(२७) अरे ! नहि नहि ।

(२८) किमिदानीमत्र कथयिष्यामि ? भवतु, चारुदत्तं गत्वा प्रक्ष्यामि । अरे ! मुहूर्तकं तिष्ठ । भो वयस्य ! प्रक्ष्यामि तावत्, कस्मिन् काले चूता मुकुलिता भवन्ति ?

(२९) मूर्ख ! वसन्ते ।

(३०) द्वितीयन्ते प्रश्नं दास्यामि । सुसमृद्धानां ग्रामाणां का रक्षां करोति ?

(३१) अरे ! रथ्या ।

(३२) अरे ! नहि नहि ।

दत्तं पुणो वि पुच्छिस्सं (३३)। पुनर्निवृत्य चारुदत्तं तथैवोदाहरति।

चारु। वयस्य ! सेना।

विदू। चेटमुपगम्य। अरे! दासिए उत्ता ! सेणा (३४)।

चेटः। अले! दुवे वि एक्कश्शिं कदुअ शिग्घं भणाहि (३५)

विदू। सेणावसन्ते (३६)।

चेटः। णं पलिवत्तिअ भणाहि (३७)।

विदू। कायेन परिवृत्य। सेणावसन्ते।

चेटः। अले मुक्ख बडुट्टका! पदाइं पलिवत्तावेहि (३८)

विदू। पादौ परिवर्त्य। सेणावसन्ते।

चेटः। अले मुक्ख! अक्खलपदाइं पलिवत्तावेहि (३९)

विदू। विचिन्त्य। वसन्तसेणा (४०)।

चेटः। एशा शा आअदा (४१)।

---

(३३) भवतु, संशये पतितोऽस्मि। भवतु, चारुदत्तं पुनरपि प्रक्ष्यामि।

(३४) अरे! दास्याः पुत्र ! सेना।

(३५) अरे! द्वे अपि एकस्मिन् कृत्वा शीघ्रं भण।

(३६) सेनावसन्ते।

(३७) ननु परिवर्त्य भण।

(३८) अरे! मूर्ख वटुक! पदे परिवर्त्तय।

(३९) अरे मूर्ख! अक्षरपदे परिवर्त्तय।

(४०) वसन्तसेना।

(४१) एषा सा आगता।

विदू। ता जाव चारुदत्तस्स णिवेदेमि। उपसृत्य। भो चारुदत्त! धणिओ दे आअदो (४२)।

चारु। कुतोऽस्मत्कुले धनिकः?।

विदू। जइ कुले णत्थि, ता दुवारे अत्थि। एसा वसन्तसेणा आअदा (४३)।

चारु। वयस्य! किं मां प्रतारयसि?।

विदू। जइ मे वअणे ण पत्तिआअसि, ता एदं कुम्भीलअं पुच्छ। अरे दासीए उत्ता कुम्भीलअ! उवसप्प (४४)।

चेटः। उपसृत्य। अज्ज! वन्दामि (४५)।

चारु। भद्र! स्वागतं? कथय सत्यं प्राप्ता वसन्तसेना?।

चेटः। एशा शा आअदा वशन्तशेणा (४६)।

चारु। सहर्षम्। भद्र! न कदाचित् प्रियवचनं निष्फलीकृतं मया, तद्गृह्यतां पारितोषिकम्। इत्युत्तरीयं प्रयच्छति।

---

(४२) तत् यावत् चारुदत्तस्य निवेदयामि। भो चारुदत्त! धनिकस्ते आगतः।

(४३) यदि कुले नास्ति, तत् द्वारे अस्ति। एषा वसन्तसेना आगता।

(४४) यदि मे वचने न प्रत्ययसे, तदिमं कुम्भीलकं पृच्छ। अरे दास्याः पुत्र कुम्भीलक! उपसर्प।

(४५) आर्य्य! वन्दे।

(४६) एषा सा आगता वसन्तसेना।

चेटः । गृहीत्वा प्रणम्य सपरितोषम् । जाव अज्जआए णिवेदेमि (४७) ।

इति निष्क्रान्तः ।

विदू । भो ! अवि जाणासि, किं णिमित्तं ईदिसे दुद्दिणे आअदेत्ति ? (४८) ।

चारु । वयस्य ! न सम्यगवधारयामि ।

विदू । मए जाणिदं, अप्पमुल्ला रअणावली, बहुमुल्लं सुवस्स भण्डअं त्ति ण परितुट्टा, अवरं मग्गिदुं आअदा (४९) ।

चारु । स्वागतम् । परितुष्टा यास्यति ।

ततः प्रविशति उज्ज्वलाभिसारिकावेशेन वसन्तसेना, सोत्कण्ठा छत्रधारिणी, विटश्च ।

विटः । वसन्तसेनामुद्दिश्य ।

अपद्मा श्रीरेषा, प्रहरणमनङ्गस्य ललितं,
कुलस्त्रीणां शोको, मदनवरवृक्षस्य कुसुमम् ।
सलीलं गच्छन्ती, रतिसमयलज्जा प्रणयिनी,
रतिक्षेत्रे रङ्गे प्रियपथिकसार्थैरनुगता ॥ १२ ॥

---

(४७) यावदार्य्यायै निवेदयामि ।

(४८) भो ! अपि जानासि किं निमित्तम् ईदृशे दुर्दिने आगतेति ?

(४९) मया ज्ञातम्, अल्पमूल्या रत्नावली, बहुमूल्यं सुवर्णभाण्डमिति न परितुष्टा, अपरं याचितुमागता ।

---

(१२) अपद्मेति । रतिसमये सुरतकाले या लज्जा तस्याः प्रणयिनी सहचरी सलज्जा इत्यर्थः प्रियपथिकसार्थैः हृद्यपान्थगणैः

वसन्तसेने ! पश्य पश्य ।

> गर्ज्जन्ति शैलशिखरेषु विलम्बिविम्बा
>
> मेघा वियुक्त वनिता हृदयानुकाराः ।
>
> येषां रवेण सहसोत्पतितैर्मयूरैः
>
> खं वीज्यते मणिमयैरिव तालवृन्तैः ॥ १३ ॥

अपि च ।

पङ्कक्लिन्नमुखाः पिबन्ति सलिलं धाराहता दर्दुराः,
कण्ठं मुञ्चति बर्हिणः समदनो नीपः प्रदीपायते ।
संन्यासः कुलदूषणैरिव जने मेघैर्वृतश्चन्द्रमा,
विद्युन्नीचकुलोद्गतेव युवति र्नैकत्र सन्तिष्ठते ॥ १४ ॥

---

अनुगता समभिव्याहृता रङ्गे रागवर्द्धिनि रतिक्षेत्रे सङ्केतभूमौ सलीलं सविलासं गच्छन्ती एषा वसन्तसेना अपद्मा पद्मरहिता श्रीः लक्ष्मीः अनङ्गस्य ललितं सुन्दरं प्रहरणम् अस्त्रम्, कुलस्त्रीणां शोकः शोकस्थानमित्यर्थः अस्या दर्शने तासामात्मनि हेयत्वावभासादिति भावः तथा मदनवरवृक्षस्य कामरूपतरुश्रेष्ठस्य कुसुमम् । अतिशयोक्तिरलङ्कारः, शिखरिणी वृत्तम् । "रसैरुद्रैश्छिन्ना य म न स भ ला गः शिखरिणी" इति तल्लक्षणात् ।

(१३) गर्जन्तीति । वियुक्तानां विरहितानां वनितानां हृदयानुकारा मानससदृशाः मलिना इति भावः, शैलशिखरेषु पर्वतशृङ्गेषु विलम्बिविम्बा लम्बमानमण्डला मेघाः गर्जन्ति येषां रवेण नादेन सहसा उत्पतितैः उड्डीनैः हर्षातिशय्यादिति भावः मयूरैः मणिमयैः नीलरत्नादिखचितैः तालवृन्तैः व्यजनैरिव खम् आकाशं वीज्यते । वसन्ततिलकं वृत्तम् ।

(१४) पङ्केति । दर्दुरा भेकाः दर्दुरो भेकमेघयोरिति हेमचन्द्रः ।

वसं। भाव ! सुट्ठु दे भणिदं (५०) एषा हि

मूढ़े ! निरन्तर पयोधरया मयैव
कान्तः सहाभिरमते यदि किन्तवात्र।
मां गर्जितैरिति मुहुर्विनिवारयन्ती
मार्गं रुणद्धि कुपितेव निशा सपत्नी ॥ १५ ॥

विटः। भवत्वेवं तावत्, उपालभ्यतां (ड) तावदियम्।

वसं। भाव! किमनया स्त्रीस्वभाव दुर्विदग्धयोपालब्धया (ढ)। पश्यतु भावः।

---

(५०) भाव ! सुष्ठु ते भणितम्।

---

धाराभिः हतास्ताड़िताः तथा पङ्केन कर्दमेन क्लिन्नं सुखं येषां तथोक्ताः सन्तः सलिलं पिबन्ति, संमर्द्दनः सङ्कामः सानन्द इत्यर्थः वर्हिणः मयूरः कण्ठं सुष्ठुति केकारवं करोति, नीपः कदम्बः प्रदीपायते प्रदीप इव आचरति प्रफुल्लत्वादिति भावः, मेघैः कुलदूषणैः वंशकलङ्कारैर्जनैः संन्यासः यति धर्म इव चन्द्रमाः इतः तिरस्कृतः, तथा विद्युत् नीचकुलोद्गता अधमकुलजा युवतिरिव कुलटेव इत्यर्थः एकत्र न सन्तिष्ठते। शार्दूलविक्रीड़ितं वृत्तम्।

(१५) मूढ़े इति। निशा कुपिता सपत्नीव इति एवं प्रकारैः गर्जितैः मुहुः वारं वारं मां विनिवारयन्ती सती मार्गं पन्थानं रुणद्धि आवृणोति गर्जितप्रकारमाह मूढ़े इति रे मूढ़े ! निरन्तरपयोधरया निविड़मेघावृतया निविड़कुचया च मयैव सह कान्तः प्रियः यदि अभिरमते, अत्र तव किम् न किमपीत्यर्थः। वसन्ततिलकं वृत्तम्।

(ड) उपालभ्यतां तिरस्क्रियताम्।

(ढ) स्त्रीस्वभावेन दुर्विदग्धा हिंसापरा तया, उपालब्धया तिरस्कृतया।

मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा ।
गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः ॥१६॥

विटः । वसन्तसेने ! पश्य पश्य । अयमपरः,

पवनचपलवेगः स्थूलधाराशरौघः
स्तनितपटहनादः स्पष्टविद्युत्पताकः ।
हरति करसमूहं खे शशाङ्कस्य मेघो
नृप इव पुरमध्ये मन्दवीर्यस्य शत्रोः ॥ १७ ॥

वसं । एव्वं णेदं, ता कधं एसो अवरो ? (५१) ।

एतैरेव यदा गजेन्द्र-मलिनैराध्मात-लम्बोदरै-
र्गर्जद्भिः सतड़िद्बलाक-शवलैर्मेघैः सशल्यं मनः ।
तत्किं प्रोषितभर्तृ-बध्य पटहो हाहा हताशो बकः,
प्रावृट्प्रावृड़िति ब्रवीति शठधीः, क्षारं क्षते प्रक्षिपन् ॥१८॥

(५१) एवं न्विदं तत्कथमेषोऽपरः ।

(१६) मेघा इति । रमणाभिमुखाः कान्तार्थिन्यः । अन्यत् सुगमम् ।

(१७) पवनेति । पवनेन चपलो वेगो यस्य सः अन्यत्र पवन इव चपलवेगः स्थूलधारा शरौघः बाणसमूह इव यस्य सः अन्यत्र स्थूलधारा इव शरौघो यस्य तादृशः स्तनितं गर्जितं पटहनादः रणवाद्यविशेषरव इव यस्य सः अन्यत्र स्तनितमिव पटहनादो यस्य तादृशः तथा स्पष्टा सुव्यक्ता विद्युत् पताका इव यस्य सः अन्यत्र स्पष्टविद्युदिव पताका यस्य तथाभूतः मेघः पुरमध्ये मन्दवीर्यस्य हतवीर्यस्य पराजितस्येति यावत् शत्रोः नृप इव खे आकाशे शशाङ्कस्य करसमूहं किरणसंहतिम् अन्यत्र राजस्वसदायं हरति । उपमालङ्कारः, मालिनीवृत्तं न नमययमुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ।

(१८) एतैरिति । यदा गजेन्द्रमलिनैः आध्मातानि जलपूरितानि

विटः। वसन्तसेने! एवमेतत्। इदमपरं पश्य।

बलाका-पाण्डुरोष्णीषं विद्युदुत्क्षिप्त-चामरम्।
मत्त-वारण-सारूप्यं कर्त्तुकाममिवाम्बरम्॥ १९॥

चेटः। भाव! पेक्ख पेक्ख (५२)।

एतैरार्द्र-तमालपत्र-मलिनैरापीतसूर्य्यं नभो,
वल्मीकाः शरताड़िता इव गजाः सीदन्ति धाराहताः।
विद्युत् काञ्चनदीपिकेव रचिता प्रासादसञ्चारिणी,
ज्योत्स्ना दुर्बलभर्तृकेव वनिता प्रोत्सार्य्य मेघैर्हृता॥२०॥

(५२) भाव पश्य! पश्य।

लम्बानि लम्बमानानि उदराणि अभ्यन्तरभागा येषां तैः तादृशैः सह वर्त्तमानाः स्तनितैः ते बलाकाः स्तनितबलाकाः तैः शबलाः विचित्राः तैः तथा गर्जद्भिः मेघैः मनः विरहिणामिति शेषः सशल्यं शल्यविद्धमिव जातमिति शेषः। तत् तदा हाहेति खेदसूचकमव्ययं प्रोषिता भर्त्तारो यासां ताः विरहिण्य इत्यर्थः ता एव वध्याः वधार्हाः ततृपटहः तासां वधसमये वाद्यमानः वाद्यभेदस्वरूपः शठा धीर्यस्य सः तथा हता आशा यस्य तादृशः ग्रीष्मे सलिलसञ्चयादनायासेनैव मत्स्यादिस्वीकारे समर्थ आसीदिदानीन्तु प्रभूतजलवशादिष्टसाधने असमर्थ इति भावः बकः क्षते व्रणे क्षारं लवणं क्षिपन् इवेति पदमध्याहार्य्यं प्राइट् प्राइट् वर्षा वर्षा इति कथं अवीति। शार्दूलविक्रीड़ितं छन्दः।

(१९) बलाकेति। अम्बरम् आकाशं बलाका बकपङ्क्तिरेव पाण्डुरं श्वेतम् उष्णीषं यस्य तत् तथा विद्युदेव उत्क्षिप्तः चामरः यत्र तथाभूतम् अतएव मत्तवारणसारूप्यं मत्तस्य वारणस्य गजेन्द्रस्य सारूप्यं समानरूपतां कर्त्तुकाममिव वर्त्तते इति शेषः अनुष्टुप् छन्दः।

(२०) एतैरिति। आर्द्राणि तमालपत्राणि आर्द्रतमालपत्राणि

विटः । वसन्तसेने ! पश्य पश्य

एते हि विद्युद्‌गुण-बद्ध-कक्षा
गजा इवान्योऽन्यमभिद्रवन्तः ।
शक्राज्ञया वारिधराः सधारा
गां रूप्यरज्ज्वेव समुद्धरन्ति ॥ २१ ॥

अपिच पश्य ।

महावाताध्मातैर्महिषकुल नीलैर्जलधरै-
श्चलैर्विद्युत्पक्षैर्जलधिभिरिवान्तःप्रचलितैः ।
इयं गन्धोद्दामा नवहरित शष्पाङ्कुरवती
धरा धारापातैर्मणिमयशरैर्भिद्यत इव ॥ २२ ॥

तद्वत् मलिनास्तैः एतैर्मेघैरिति शेषः नभः अम्बरम् आपीतः आच्छादितः सूर्य्यो यस्य तत् तादृशं जातमिति अध्याहार्य्यम् । धाराभिः वर्षदरम्पराभिः हताः वल्मीकाः कीटविशेषाः शरताड़िता गजा इव सीदन्ति अवसादं गच्छन्ति, विद्युत् प्रासादसञ्चारिणी समुन्नतहर्म्योपरितनविचरणशीला काञ्चनदीपिकेव रचिता, तथा दुर्बलः भर्त्ता यस्यास्तादृशी वनितेव ज्योत्स्नामेघैः प्रोत्सार्य्य अपसार्य्य हृता । शार्दूलविक्रीड़ितं वृत्तम् उपमालङ्कारः ।

(२१) एते इति । अन्योन्यं परस्परम् अभिद्रवन्तः आक्रमन्तः गजा इव विद्युदेव गुणः तेन बद्धाः कक्षा मध्यभागा येषां तथाभूताः एते सधाराः वारिधराः जलदाः शक्रस्य इन्द्रस्य आज्ञया रूप्यरज्ज्वा इव रजतगुणेनेव गां पृथ्वीं समुद्धरन्ति यथा लोके रज्ज्वा बद्ध्वैव भारवत् वस्तु ऊर्द्ध्वं नीयते तथा वारिधारारूपरज्ज्वा पृथिवीं बद्ध्वैव ऊर्द्ध्वं नयन्तीत्यर्थः । इन्द्रोपेन्द्रवज्रयोः संमेलनादुपजातिवृत्तम् ।

(२२) महेति । गन्धोद्दामा नूतनवारियोगात् उत्थितेन गन्धेन

वसं। भाव! एसो अवरो (५२)।

एह्येहीति शिखण्डिनां पटुतरं केकाभिराक्रन्दितः,
प्रोड्डीयेव बलाकया सरभसं सोत्कण्ठमालिङ्गितः।
हंसैरुज्झितपङ्कजैरतितरां सोद्वेगमुद्वीक्षितः,
कुर्वन्नञ्जनमेचका इव दिशो मेघः समुत्तिष्ठते॥ २२॥

विटः। एवमेतत्। तथाहि, पश्य

(५२) एषोऽपरः।

उद्दामा उत्कटा अतिसुरभिः तथा नवानां हरितां शष्पाणां ये अङ्कुराः प्ररोहाः तद्वती धरा पृथिवी महावातेन प्रबलवायुना आध्मातैः पूरितैः, महिषकुलानीव नीलाभैः विद्युदेव पक्षाः सहाया येषां तैः पक्षः पतं सहायोऽस्त्रीत्यमरः अन्तः अन्तरीक्षे अन्तरिति अव्ययमन्तरीक्षवाचकं प्रचलितैः जलधिभिः समुद्रैरिव चलैः इतस्ततः सञ्चरद्भिः जलधरैः मेघैः मणिमयशरैः तत्तुल्यैरित्यर्थः धारापातैः भिद्यते इव उत्प्रेक्षालङ्कारः। शिखरिणीवृत्तं रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति लक्षणात्।

(२२) एह्येहीति। शिखण्डिनां मयूराणां केकाभिः वाग्भिः एहि एहि आगच्छ आगच्छ इति पटुतरम् उच्चैस्तरम् आक्रन्दितः बान्धवबुद्ध्या आहूतः, बलाकया बकपङ्क्त्या सरभसं सवेगं प्रोड्डीय सोत्कण्ठं समुत्सुकं यथा तथा आलिङ्गितः तथा उज्झितपङ्कजैः परित्यक्तकमलैः हंसाः कमलवने विचरन्ति कमलानि च वर्षासु नाशं गच्छन्तीति प्रसिद्धिः। हंसैः अतितराम् अतिशयेन सोद्वेगं यथा तथा उद्वीक्षितः ऊर्द्ध्वं निरीक्षितः मेघः दिशः अञ्जनमेचकाः कज्जलवत् मलिनाः दिशः समुत्तिष्ठते उद्गच्छति। उत्प्रेक्षालङ्कारोऽयं शार्दूल-विक्रीडितं वृत्तम्।

निष्पन्दीकृत-पद्मषण्ड-नयनं नष्टक्षपावासरं
विद्युद्भिः क्षणनष्टदृष्टतिमिरं प्रच्छादिताशामुखम्।
निश्चेष्टं स्वपितीव सम्प्रति पयोधारा-गृहान्तर्गतं
स्फीताम्भोधर-धाम-नैकजलद-च्छत्रापिधानं जगत्॥ २४॥

वसं। भाव! एव्वं ण्णेदं। ता पेक्ख पेक्ख (५४)।

गता नाशं तारा उपकृतमसाधाविव जने,
वियुक्ताः कान्तेन स्त्रिय इव न राजन्ति ककुभः।
प्रकामान्तस्तप्तं त्रिदशपति-शस्त्रस्य शिखिना
द्रवीभूतं मन्ये पतति जलरूपेण गगनम्॥ २५॥

(५४) भाव! एवं न्विदं तत्पश्य पश्य।

---

(२४) निष्पन्दीति। सम्प्रति निष्पन्दीकृतानि विकाशाभावात् अस्पन्दानि पद्मषण्डानेव नयनानि यस्य तत् नष्टौ क्षपावासरौ रात्रिदिनौ यत्र तादृशं विद्युद्भिः क्षणेन नष्टं दृष्टञ्च तिमिरं यत्र तथाभूतं, प्रच्छादितानि आशामुखानि दिशः मुखानीव यस्य तथोक्तं पयसां जलानां धाराः पयोधाराः ता एव गृहाणि तेषु अन्तर्गतं तन्मध्यस्थितमित्यर्थः तथा स्फीते विशाले अम्भोधराणां मेघानां धामनि आकाशे इत्यर्थः ये नैकजलधराः बहव मेघाः ते छत्राणीव तानि अपिधानानि आच्छादनानि यस्य तथोक्तं जगत् निश्चेष्टं सत् स्वपितीव निद्रातीवेत्युत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

(२५) गतेति। तारा नक्षत्रं असाधौ जने उपकृतम् उपकार इव नाशं गता, ककुभः दिशः दिशश्च ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरः कान्तेन पतिना सूर्येणेति ध्वनिः वियुक्ताः विर-
[illegible] तथा गगनं त्रिदशपतिशस्त्रस्य

पि च पश्य।

उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघम्।
प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि॥२६॥

विटः। एवमेतत्।

विद्युद्भिर्ज्वलतीव, संविहसतीवोच्चैर्बलाकाशतै-
र्माहेन्द्रेण विवल्गतीव धनुषा धाराशरोद्गारिणा।
विस्पष्टाशनि निस्वनेन रसतीवाघूर्णतीवानिलै-
र्नीलैः सान्द्रमिवाहिभिर्जलधरैर्धूपायतीवाम्बरम्॥२७॥

वज्रस्य शिखिना अग्निना प्रकाशमानस्य प्रकाशेन सम्यक् आनन्दस्य अन्तरस्य द्रवीभूतं यत् जलवदेव पतति मन्ये सम्भावयामीत्यर्थः, उत्प्रेक्षोपमेचे अलङ्कारौ, शिखरिणीवृत्तम्।

(२६) उन्नमतीति। मेघः प्रथमा श्रीर्यस्य तादृशः प्रथमलक्ष्मीवान् पुरुष इव अनेकानि रूपाणि करोति तथाहि उन्नमति उत्तिष्ठते, नमति अधोलम्बते वर्षति गर्जति तथा तिमिरौघम् अन्धकारसमूहं करोति, अन्यत्र उन्नतकार्यमाचरति नीचतामापद्यते धनानि वितरति आस्फालनं करोति पापराशिमातनोतीति बोध्यम्। आर्यावृत्तम्।

(२७) विद्युद्भिरिति। अम्बरम् आकाशं विद्युद्भिः ज्वलतीव, बलाकाशतैः उच्चैः यथा तथा संविहसतीव, धाराशरोद्गारिणा आसारवर्षिणा माहेन्द्रेण धनुषा इन्द्रधनुषा विवल्गतीव युध्यते इव, विस्पष्टाशनि निस्वनेन प्रकटवज्ररवेण रसतीव उच्चैः नादं करोतीव अनिलैः आघूर्णतीव तथा अहिभिरिव सर्पैरिव नीलैः जलधरैः सान्द्रं गाढं यथा तथा धूपायतीव धूपधूमाकुलं भवतीव मालोत्प्रेक्षालङ्कारः शार्दूलविक्रीडितं वृत्तम्।

निष्पन्दीकृत पद्मषण्ड-नयनं नष्टक्षपावासरं
विद्युद्भिः क्षणनष्टदृष्टतिमिरं प्रच्छादिताशामुखम्।
निश्चेष्टं स्वपितीव सम्प्रति पयोधारा-गृहान्तर्गतं
स्फीताम्भोधर-धाम-नैकजलद-च्छत्रापिधानं जगत्॥ २४॥

वसं। भाव! एव्वं ण्णेदं। ता पेक्ख पेक्ख (५४)।

गता नाशं तारा उपकृतमसाधाविव जने,
वियुक्ताः कान्तेन स्त्रिय इव न राजन्ति ककुभः।
प्रकामान्तस्तप्तं त्रिदशपति-शस्त्रस्य शिखिना
द्रवीभूतं मन्ये पतति जलरूपेण गगनम्॥ २५॥

---

(५४) भाव! एवं न्विदं तत्पश्य पश्य।

---

(२४) निष्पन्दीति। सम्प्रति निष्पन्दीकृतानि विकाशाभावात् अस्पन्दानि पद्मषण्डानेव नयनानि यस्य तत् नष्टौ क्षपावासरौ रात्र्यह्नी यत्र तादृशं विद्युद्भिः क्षणेन नष्टं दृष्टञ्च तिमिरं यत्र तथाभूतं, प्रच्छादितानि आशामुखानि दिशः मुखानीव यस्य तथोक्तं पयसां जलानां धाराः पयोधाराः ता एव गृहाणि तेषु अन्तर्गतं तन्मध्यस्थितमित्यर्थः तथा स्फीते विशाले अम्भोधराणां मेघानां धामनि आकाशे इत्यर्थः ये नैकजलधराः बहव मेघाः ते छत्राणीव तानि अपिधानानि आच्छादनानि यस्य तथोक्तं जगत् निश्चेष्टं सत् स्वपितीव निद्रातीवेत्युत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं छन्दः।

(२५) गतेति। तारा नक्षत्रं असाधौ जने उपकृतम् उपकार इव नाशं गता, ककुभः दिशः; दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरः; कान्तेन पतिना सूर्य्येणेति ध्वनिः वियुक्ताः विरहिताः स्त्रिय इव, राजन्ति न शोभन्ते, तथा गगनं त्रिदशपतिशस्त्रस्य

अपि च पश्य ।

उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघम् ।
प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि ॥ २६ ॥

विटः । एवमेतत् ।

विद्युद्भिर्ज्वलतीव, संविहसतीवोच्चैर्बलाकाशतै-
र्माहेन्द्रेण विवल्गतीव धनुषा धाराशरोद्गारिणा ।
विस्पष्टाशनिनिस्वनेन रसतीवाघूर्णतीवानिलै-
र्नीलैः सान्द्रमिवाहिभिर्जलधरैर्धूपायतीवाम्बरम् ॥२७॥

वज्रस्य शिखिना अग्निना प्रकामान्तप्तं प्रकामेन सम्यक् अन्तप्तम् अत एव द्रवीभूतं सत् जलच्छलेन पतति अम्बो सम्भावनामीलच्छः, उद्-प्रेक्षोत्प्रेक्षे अलङ्कारौ, शिखरिणीवृत्तम् ।

(२६) उन्नमतीति । मेघः प्रथमा श्रीर्यस्य तादृशः प्रथमलब्ध-सम्पद् पुरुष इव अनेकानि रूपाणि करोति तथाहि उन्नमति उत्तिष्ठति, नमति अधोलम्बते वर्षति गर्जति तथा तिमिरौघम् अन्धकारसमूहं करोति, अन्यत्र उन्नतकार्यमाचरति नीचतामापद्यते धनानि वितरति आस्फालनं करोति पापराशिमातनोतीति बोध्यम् । आर्यावृत्तम् ।

(२७) विद्युद्भिरिति । अम्बरम् आकाशं विद्युद्भिः ज्वलतीव, बलाकाशतैः उच्चैः यथा तथा संविहसतीव, धाराशरोद्गारिणा आसारवर्षिणा माहेन्द्रेण धनुषा इन्द्रधनुषा विवल्गतीव युध्यते इव, विस्पष्टाशनि निस्वनेन प्रकटवज्ररवेण रसतीव उच्चैः नादं करोतीव अनिलैः आघूर्णतीव तथा अहिभिरिव सर्पैरिव नीलैः जलधरैः सान्द्रं गाढं यथा तथा धूपायतीव धूपधूमाकुलं भवतीव मालोत्प्रेक्षालङ्कारः शार्दूलविक्रीडितं वृत्तम् ।

वर्षं ।

जलधर! निर्लज्जस्त्वं यन्मां दयितस्य वेश्म गच्छन्तीम्।
स्तनितेन भीषयित्वा धाराहस्तैः परामृशसि ॥ २८ ॥

भोः शक्र ! ।

किन्ते ह्यहं पूर्वरतिप्रसक्ता यत्त्वं नदस्यम्बुद-सिंहनादैः ।
न युक्तमेतत्प्रियकाङ्क्षिताया मार्गं निरोद्धुं मम वर्षपातैः ॥२

अपि च ।

यद्वदहल्याहेतोर्मृषा वदसि शक्र ! गौतमोऽस्मीति ।
तद्वन्ममापि दुःखं निरवेक्ष्य निवार्यतां जलदः ॥ ३० ॥

(२८) जलधरेति । हे जलधर ! त्वं निर्लज्जः यत् यस्मात् दयितस्य प्रियस्य वेश्म सदनं वेश्म सद्मनिकेतनमित्यमरः गच्छन्तीं मां स्तनितेन गर्जितेन भीषयित्वा त्रासयित्वा धाराहस्तैः धाराक्षपकरैः परामृशसि स्पृशसि ? आर्य्यावृत्तम् ।

(२९) किमिति । अहं ते तव पूर्वरतिप्रसक्ता पूर्वस्मिन् काले या रतिरनुरागः तत्र प्रसक्ता किं ? यत् त्वम् अम्बुदसिंहनादैः मेघगर्जितरूपमहानादैः नदसि शब्दायसे, वर्षपातैः धारासम्पातैः प्रियकाङ्क्षिताया प्रियः काङ्क्षितः यया तादृश्याः अथवा प्रियेण काङ्क्षितायाः मम मार्गं निरोद्धुं मार्गनिरोधनम् अयुक्तम् अनुचितमेतत् । इन्द्रोपेन्द्रवज्रयोः संमेलनादुपजातिवृत्तम् ।

(३०) यद्वदिति । हे शक्र ! इन्द्र ! अहल्या गौतमपत्नी तस्याः हेतोः तां लब्धुमित्यर्थः यद्वत् यथा गौतमः अस्मीति मृषा वदसि, पुरा किल अहल्यां कामयमान इन्द्रः शिष्यो भूत्वा कियन्तं कालं गौतमाश्रमे स्थितः । एकदा स्नानाय गते गुरौ गौतमे असौ गौतमरूपमास्थाय रिरंसया अहल्यामुपययौ । तया तु निशाशेषे पतिं

अपिच ।

गर्ज वा वर्ष वा शक्र ! मुञ्च वा शतशोऽशनिम् ।
न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥ ३१ ॥
यदि गर्जति वारिधरो गर्जतु, तन्नाम निष्ठुराः पुरुषाः ।
अयि विद्युत् ! प्रमदानां त्वमपि च दुःखं न जानासि ? ॥३२॥

विटः । भवति ! अलमलमुपालम्भेन, उपकारिणी तवेयम् ।

ऐरावतोरसि चलेव सुवर्णरज्जुः,
शैलस्य मूर्द्ध्नि निहितेव सिता पताका ।
आखण्डलस्य भवनोदरदीपिकेय-
माख्याति ते प्रियतमस्य हि सन्निवेशम् ॥ ३३ ॥

प्रस्थितं जानत्या कस्त्वमिति पृष्टः गौतमोऽस्मि त्वत्सम्भोगलालसया पुनः प्रत्याहृत्त इत्युक्त्वा तां दूषयामासेति पौराणी वार्त्तात्रानुसन्धेया । ममापि तद्वत् तथा दुःखं प्रियसम्भोगलालसाजनितमिति भावः निरवेक्ष्य दृष्ट्वा जलदः निवार्य्यताम् । आर्य्यावृत्तमिदम् ।

(३१) गर्जेति । सर्वं सुगमम् । अनुष्टुप् वृत्तम् ।

(३२) यदीति । तव क्षणेन प्रकाशः क्षणेन च विनाशो नोचितः अपि तु मम पथप्रदर्शनार्थं सततमेव तव प्रकाशो युक्त इति भावः । आर्य्यावृत्तम् ।

(३३) ऐरावतोरसीति । ऐरावतस्य उरसि चला चञ्चला सुवर्णरज्जुरिव, शैलस्य पर्वतस्य मूर्ध्नि निहिता स्थापिता सिता शुभ्रा पताकेव आखण्डलस्य इन्द्रस्य भवनोदरदीपिका गृहाभ्यन्तरवर्त्तिनी दीपिका इयं सौदामिनी ते तव प्रियतमस्य सन्निवेशं भवनम् आख्याति हि कथयत्येव प्रकाशयत्येवेति यावत् वसन्ततिलकं वृत्तम् ।

वधं। भाव ! एव्वं तं ज्जेव एदं गेहं (५५)।

विटः। सकलकलाभिज्ञाया न किञ्चिदिह तवोपदेष्टव्य-मस्ति, तथापि स्नेहः प्रलापयति (त)। अत्र प्रविश्य कोपो-ऽत्यन्तं न कर्त्तव्यः।

यदि कुप्यसि नास्ति रतिः, कोपेन विनाथवा कुतः कामः।
कुप्य च कोपय च त्वं प्रसीद च त्वं प्रसादय च कान्तम्॥२४

भवत्वेवं तावत्। भो भो ! निवेद्यतामार्य्यचारुदत्ताय।

एषा फुल्ल-कदम्ब-नीप सुरभौ काले घनोद्भासिते,
कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका।
विद्युद्वारिद-गर्ज्जितैः सचकिता त्वद्दर्शनाकाङ्क्षिणी
पादौ नूपुरलग्नकर्द्दमधरौ प्रक्षालयन्ती स्थिता॥ २५ ॥

---

(५५) भाव ! एवं तदेव एतद्गेहम्।

(त) सकलासु कलासु चतुःषष्टिकामविद्यासु अभिज्ञया विशेषज्ञा-नवत्याः प्रलापयति मुखरयति।

(२४) यदीति। रतिः अनुरागः सम्भोगो वा सततकोपे न रति-सम्भव इत्यर्थः अथवा कोपेन विना कामो न रतिर्न कदाचित् कोपः कामदर्शये भवतीति भावः न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते इति दर्पणधृतवचनात्। अन्यत् सुगमम्।

(२५) एषेति। फुल्लैः विकाशं गतैः कदम्बैः नीपैश्च कदम्ब-विशेषैश्च सुरभिः सुगन्धिः तस्मिन् घनोद्भासिते घनैर्मेघैरुद्भासिते समाहते काले प्रावृषि इत्यर्थः समदना सकामा जलेन आर्द्राः अलका-श्चूर्णकुन्तला यस्याः तादृशी एषा वसन्तसेना हृष्टा सती कान्तस्य तव आलयम् आगता परं विद्युद्वारिदगर्जितैः विद्युद्भिः वारिदानां

चारु । आकर्ण्य । वयस्य ! ज्ञायतां किमेतदिति ।

विदू । जं भवं आणवेदि । वसन्तसेनामुपगम्य । सादरम् । सोत्थि भोदीए (५६) ।

वसं । अज्ज ! वन्दामि, साअदं अज्जस्स ?। भाव ! एसा छत्तधारिआ भावस्स ज्जेव भोदु (५७) ।

विटः । स्वगतम् । अनेनोपायेन निपुणं प्रेषितोऽस्मि । प्रकाशम् । एवं भवतु । भवति वसन्तसेने ! ।

साटोप-कूट-कपटानृत-जन्मभूमिः
शाठ्यात्मकस्य रतिकेलि-कृतालयस्य ।
वेश्यापणस्य सुरतोत्सव-संग्रहस्य
दाक्षिण्य-पण्यसुख-निष्क्रयसिद्धिरस्तु ॥ ३६ ॥

इति निष्क्रान्तः ।

---

(५६) यज्भवानाज्ञापयति । स्वस्ति भवत्यै ।

(५७) आर्य्य ! वन्दे, स्वागतमार्यस्य । भाव ! एषा छत्रधारिका भावस्यैव भवतु ।

गर्जितैश्च सचकिता सत्रासा तथा नूपुरलग्नकर्दमधरौ पादौ प्रक्षालयन्ती स्थिता तिष्ठतीत्यर्थः वर्त्तमाने क्त प्रत्ययः । शार्दूलविक्रीड़ितं वृत्तम् ।

(३६) साटोपेति । साटोपं सदम्भं कूटं माया, कपटं छलं, अनृतं मिथ्या च तस्य जन्मभूमेः आकरस्य शाठ्यं शठता आचरतीति यावत् तदेव आत्मा यस्य तादृशस्य रतिकेलिना सुरतक्रीड़या कृतः आलयः यस्मिन् तथा सुरतोत्सवस्य संग्रहः सम्यक् ग्रहणं यस्मिन् तथाभूतस्य वेश्यापणस्य वेश्यारूपस्य विपणेः क्रयविक्रयस्थानस्य दाक्षिण्येन परस्परस्य औदार्य्येण न तु अर्थतः पणस्य विक्रेयस्य सुयौवनस्य इति

वसं । अज्ज मित्तेअ ! कहिं तुम्हाणं जूदिअरो ? (५८) ।

विदू । स्वगतम् । ह्वी ह्वी भो ! जूदिअरो त्ति भणन्तीए अलङ्किदो पिअवअस्सो । प्रकाशम् । भोदि ! एसो क्खु सुक्खरुक्खवाडिआए (५९) ।

वसं । अज्ज ! का तुम्हाणं सुक्खरुक्खवाडिआ वुच्चदि ? (६०) ।

विदू । भोदि ! जहिं ण खाईअदि ण पीईअदि (६१) ।

वसन्तसेना । स्मितङ्करोति ।

विदू । ता पविसदु भोदी (६२) ।

वसं । जनान्तिकम् । एत्थ पविसिअ किं मए भणिदव्वं (६३)

चेटी । जूदिअर ! अवि सुहो दे पदोसो ? त्ति (६४) ।

वसं । अवि पारइस्सं ? (६५) ।

---

(५८) आर्य्य मैत्रेय ! कुत्र युष्माकं द्यूतकरः ?

(५९) आश्चर्य्यं भो ! द्यूतकर इति भणन्त्या अलङ्कृतः प्रियवयस्यः । भवति ! एष खलु शुष्कवृक्षवाटिकायाम् ।

(६०) आर्य्य ! का युष्माकं शुष्कवृक्षवाटिका उच्यते ?

(६१) भवति ! यत्र न खाद्यते न पीयते ।

(६२) तस्मात् प्रविशतु भवती ।

(६३) अत्र प्रविश्य किं मया भणितव्यम् ।

(६४) द्यूतकर ! अपि सुखस्ते प्रदोषः ? इति ।

(६५) अपि पारयिष्यामि ?

---

भावः सुखनिष्क्रयः सुखमेव निष्क्रयः मूल्यं तस्य सिद्धिः अस्तु भवतु । वसन्ततिलकं वृत्तम् ।

चेटी। अवसरो ज्जेव पारइस्सदि (६६)।

विदू। पविसदु भोदी (६७)।

वसं। प्रविश्योपसृत्य च। पुष्पैस्ताड़यन्ती। अइ जूदिअर! अवि सुहो दे पदोसो? (६८)।

चारु। अवलोक्य। अये! वसन्तसेना प्राप्ता। सहर्षमुत्थाय। अयि प्रिये!।

सदा प्रदोषो मम याति जाग्रतः,
सदा च मे निश्वसतो गता निशा।
त्वया समेतस्य विशाललोचने!
ममाद्य शोकान्तकरः प्रदोषकः॥ ३७॥

तत् स्वागतं भवत्यै। इदमासनम्, अत्रोपविश्यताम्।

विदू। इदं आसणं उवविसदु भोदी (६९)।

वसन्तसेना नाट्येनाधीना सर्वे उपविशन्ति।

चारु। वयस्य! पश्य पश्य।

---

(६६) अवसर एव पारयिष्यति।
(६७) प्रविशतु भवती।
(६८) अयि द्यूतकर! अपि सुखस्ते प्रदोषः?
(६९) इदमासनम्, उपविशतु भवती।

---

(३७) सदेति। जाग्रत एव मम प्रदोषः रात्रिः याति गच्छति, निश्वसतश्च मे सदा निशा गता जाग्रत् निश्वसंश्च निशाम् अतिवाहया-मीत्यर्थः हे विशाललोचने! अद्य त्वया समेतस्य मम प्रदोषकः रात्रिः शोकान्तकरः दुःखनाशक इत्यर्थः। वंशस्थविलं वृत्तम्।

वर्षोदकमुद्गिरता श्रवणान्तविलम्बिना कदम्बेन ।
एकः स्तनोऽभिषिक्तो नृपसुत इव यौवराज्यस्थः ॥३८॥

तद्वयस्य ! क्लिन्ने वाससी वसन्तसेनायाः, अन्ये प्रधान-वाससी (ङ) समुपनीयेतामिति ।

विदू । जं भवं आणवेदि (७०) ।

चेटी । अज्ज मित्तेअ ! चिट्ठ तुमं, अहं ज्जेव अज्जअं सुस्सूसइस्सं (७१) । तथा करोति ।

विदू । अपवारितकेन । भो वअस्स ! पुच्छामि दाव तत्थ-भोदिं किं पि (७२) ।

चारु । एवं क्रियताम् ।

विदू । प्रकाशम् । अध किं णिमित्तं उण ईदिसे पणट्ठ-चन्दालोए दुद्दिण अन्धआरे आअदा भोदी ? (७३) ।

---

(७०) यद्भवानाज्ञापयति ।

(७१) आर्य्य मैत्रेय ! तिष्ठ त्वम्, अहमेवार्य्यं शुश्रूषयिष्यामि ।

(७२) भो वयस्य ! पृच्छामि तावत्तत्रभवतीं किमपि ।

(७३) अथ किं निमित्तं पुनरीदृशे प्रनष्टचन्द्रालोके दुर्दिनान्धकारे आगता भवती ?

---

(३८) वर्षोदकमिति । वर्षोदकं वृष्टिजलविन्दु उद्गिरता श्रवणान्त विलम्बिना कर्णान्तविलम्बमानेन कदम्बेन एकः स्तनः वसन्तसेनाया इति शेषः यौवराज्यस्थः नृपसुत इव अभिषिक्तः । नृपसुतोपमानेन स्तनस्यातिसम्मानना व्यज्यते । आर्य्यावृत्तम् ।

(ङ) क्लिन्ने जलार्द्रे, प्रधानवाससी उत्कृष्टवसने ।

चेटी। अज्जए! उजुओ (ढ) बम्हणो (७४)।

वसं। णं णिउणोत्ति भणाहि (७५)।

चेटी। एसा क्खु अज्जआ एव्वं पुच्छिदुं आअदा, केत्तिअं ताए रअणावलीए मुल्लं त्ति (७६)।

विदू। जनान्तिकम्। भो! भणिदं मए, जधा अप्पमुल्ला रअणावली; बहुमुल्लं सुवस्सभण्डअं, ण परितुट्ठा, अवरं मग्गिदुं आअदा (७७)।

चेटी। सा क्खु अज्जआए अत्तणा केरकेत्ति भणिअ जूदे हारिदा। सो अ सहिओ राअवात्थहारो ण आणीअदि कहिं गदोत्ति (७८)

विदू। भोदि! मन्तिदं ज्जेव मन्तीअदि (७९)।

(७४) आर्ये! ऋजुको ब्राह्मणः।

(७५) ननु निपुण इति भण।

(७६) एषा खलु आर्या एवं प्रष्टुमागता कियन्मूल्याः रत्नावल्या मूल्यमिति।

(७७) भो! भणितं मया, यथा अल्पमूल्या रत्नावली बहुमूल्यं सुवर्णभाण्डं न परितुष्टा अपरं याचितुमागता।

(७८) सा खलु आर्यया आत्मीयेति भणित्वा द्यूते हारिता, सच सभिकः राजवार्त्ताहारी, न ज्ञायते कुत्र गत इति।

(७९) हे भवति! मन्त्रितमेव मन्त्र्यते।

(ढ) ऋजुकः सरलः सहजमर्मविरहितः।

चेटी। जाव सो अखेसीअदि ताव एदं ज्जेव गेह्ण सुवस्सभण्डअं (८०)। इति दर्शयति।

विदूषको विचारयति।

चेटी। अदिमेत्तं अज्जो णिज्झाअदि, ता किं दिट्ठपुरुव्वो दे? (८१)।

विदू। भोदि! सिप्पकुसलदाए ओबन्धेदि(ण) दिट्ठिं (८२)

चेटी। वञ्चिदोसि दिट्ठीए, तं ज्जेव एदं सुवस्सभण्डअं (८३)

विदू। सहर्षम्। भो वअस्स! तं ज्जेव एदं सुवस्सभण्डअं जं अम्हाणं गेहे चोरेहिं अवहृदं (८४)।

चारु। वयस्य!।

योऽस्माभिश्चिन्तितो व्याजः कर्त्तुं न्यासप्रतिक्रियाम्।
स एव प्रस्तुतोऽस्माकं किन्तु सत्यं विडम्बना॥ ३८॥

(८०) यावत्सोऽन्विष्यते, तावदिदमेव गृहाण सुवर्णभाण्डम्।

(८१) अतिमात्रमार्य्यो निध्यायति, तत्किं दृष्टपूर्व्वं ते।

(८२) हे भवति! शिल्पकुशलतया अवबध्नाति दृष्टिम्।

(८३) आर्य्य! वञ्चितोऽसि दृष्ट्या, तदेवेदं सुवर्णभाण्डम्।

(८४) भो वयस्य! तदेवेदं सुवर्णभाण्डं, यदस्माकं गृहे चौरैरपहृतम्।

---

(ण) अवबध्नाति इत्यर्थः।

(३८) य इति। अस्माभिः न्यासप्रतिक्रियां न्यासस्य प्रतिक्रियां प्रतिशोधं कर्त्तुं यः व्याजः छलं चिन्तितः उद्भावितः, स रत्नावल्यर्पण-मित्यर्थः अस्माकं किन्तु विडम्बना प्रतारणा सत्यं प्रस्तुतः प्रतारणरूपेण परिणत इत्यर्थः अनुष्टुप वृत्तम्।

विदू। भो वयस्स ! सच्चं सम्रामि (त) बम्हस्से ण (८५)।

चारु। प्रियं नः प्रियम्।

विदू। जनान्तिकम्। भो ! पुच्छामि णं कुदो एदं समासादिदं त्ति (८६)।

चारु। को दोषः।

विदू। चेट्याः कर्णे। एव्वं विश्र (८७)।

चेटी। विदूषकस्य कर्णे। एव्वं विश्र ?।

चारु। किमिदं कथ्यते, किं वयं बाह्याः ? (थ)।

विदू। चारुदत्तस्य कर्णे। एव्वं विश्र(८८)।

चारु। भद्रे ! सत्यं तदेवेदं सुवर्णभाण्डम् ?

चेटी। अज्ज ! अध इं(८९)।

चारु। भद्रे ! न कदाचित् प्रियनिवेदनं निष्फलीकृतं मया। तद्गृह्यतां पारितोषिकमिदमङ्गुलीयकम्। इत्यनङ्गुलीयकं हस्तमवलोक्य लज्जां नाटयति।

---

(८५) भोः वयस्य ! सत्यं शपे ब्राह्मण्येन।

(८६) भोः ! पृच्छामि ननु कुत इदं समासादितमिति।

(८७) एवमिव।

(८८) एवमिव।

(८९) आर्य्य ! अथ किम्।

---

(त) सत्यं शपामि अहमेवं। वेश्यासक्ततया वेश्यायै रत्नावलीं दत्तवानिति वयस्यस्य शङ्का माभूदित्याशयः।

(थ) बाह्याः बहिरङ्गाः नान्तरङ्गाः यतः अस्मान् त्यक्त्वा वेश्याः कर्णे कथयसीति भावः।

वसं। आत्मगतम्। अहो ज्जेव कालीअस्सि(६०)।

चारु। अनात्मिकम्। भोः! कष्टम्।

धनैर्वियुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत्।
यस्य प्रतीकार-निरर्थकत्वात् कोपप्रसादा विफलीभवन्ति॥४०॥

अपिच।

पक्षविकलश्च पक्षी, शुष्कश्च तरुः, सरश्च जलहीनम्।
सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च॥४१॥

अपिच।

शून्यैर्गृहैः खलु समाः पुरुषा दरिद्राः
कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः।
यद् दृष्टपूर्वजन-सङ्गम-विस्मृताना-
मेवं भवन्ति विफलाः परितोषकालाः॥४२॥

(६०) अतएव काम्यसि।

(४०) धनैरिति। लोके जगति धनैः वियुक्तस्य विहीनस्य जनस्य आदितएव प्रथमतएव जीवितेन किं तावत् न किमपि फलमित्यर्थः। यस्य जनस्य कोपप्रसादाः क्रोधानुग्रहाः प्रतीकारनिरर्थकत्वात् प्रतीकारे प्रतिरोधे निरर्थकत्वात् असमर्थत्वादिति यावत् विफलीभवन्ति निष्फलाः जायन्ते। इन्द्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिवृत्तम्।

(४१) पक्षेति। लोके जगति पक्षविकलः पक्षशून्यः पक्षी शुष्कः तरुः जलहीनं सरः, उद्धृतदंष्ट्रः विषदन्तविहीनः सर्पः, दरिद्रश्च तुल्यं वृथा जीवन्त्येते इति भावः। आर्यावृत्तम्।

(४२) शून्यैरिति। दरिद्राः पुरुषाः शून्यैः गृहैः, तोयरहितैः कूपैः तथा शीर्णैः तरुभिश्च खलु निश्चयेन समाः तुल्याः, यत् यस्मात् दृष्टपूर्वा

विदू। भो! अलं अदिमेत्तं सन्तप्पिदेण। प्रकाशं सपरिहासम्। भोदि! समप्पीअदु मम केरिआ ण्हाणसाडिआ (६१)।

चेटी। अज्ज चारुदत्त! जुत्तं णेदं इमाए रअणावलीए इमं जणं तुलइदुं (६२) (द)।

चारु। सविलक्षस्मितम्। वसन्तसेने! पश्य पश्य।

कः श्रद्धास्यति भूतार्थं सर्व्वो मां तूलयिष्यति।
शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता॥४३॥

विदू। हञ्जे! किं भोदीए इध ज्जेव सुविदव्वं? (६३)।

---

(६१) भो! अलमतिमात्रसन्तापितेन। हे भवति! समर्प्यतां मम स्नानशाटिका।

(६२) आर्य्य चारुदत्त! युक्तं नेदम्, अनया रत्नावल्या इमं जनं तुलयितुम्।

(६३) चेटि! किं भवत्या इहैव स्वप्तव्यम्?

---

जनाः दृष्टपूर्वजनाः परिचितजना इत्यर्थः तेषां सङ्गमः विस्मृतः यैः तेषां दारिद्र्यात् परिचिता बान्धवा अपि सङ्गं त्यजन्ति सुतरां तत् सङ्गमस्य विस्मरणमिति भावः। दरिद्राणां परितोषकाला एवं प्रकारेण विफला भवन्ति पुरस्कारदानासामर्थ्यादिति भावः केचित् दृष्टपूर्वस्य परिचितप्रियजनस्य सङ्गमेन समागमेन विस्मृताभिलाषाः तेन समीचीनं प्रकृते कथञ्चित् तदर्थसङ्गतावपि दरिद्रसाधारण्ये तदर्थस्यायुक्तत्वात् पूर्वोक्तं सामान्यतः सर्वेषामेव दरिद्राणां कीर्त्तनादिति ध्येयम्। वसन्ततिलकं वृत्तम्।

(द) तुलयितुं परीक्षितुम्।

(४३) क इति। तृतीयेऽङ्के १२० पृष्ठायां व्याख्यातमेतत्।

चेटी। विहस्य। अज्जमित्तेअ! अदिमेत्तं दाणिं उजुअं अत्ताणअं दंसेसि (८४)

विदू। भो वअस्स! एसो क्खु ओसारअन्तो विअ सुहोवविट्ठं जणं पुणोवि वित्थारिवारिधाराहिं पविट्ठो पज्जस्रो (८५) (ध)।

चारु। सम्यगाह भवान्।

अमूर्हि भित्त्वा जलदान्तराणि पङ्कान्तराणीव मृणालसूच्यः।
पतन्ति चन्द्रव्यसनाद्विमुक्ता दिवोऽम्बुधारा इव वारिधाराः॥४४॥

अपिच। धाराभिरार्य्यजनचित्तसुनिर्मलाभि-
स्वण्डाभिरर्ज्जुनशर-प्रतिकर्कशाभिः।
मेघाः स्रवन्ति बलदेव-पटप्रकाशाः
शक्रस्य मौक्तिकनिधानमिवोद्गिरन्तः॥४५॥

---

(८४) आर्य्य मैत्रेय! अतिमात्रमिदानीम् ऋजुमात्मानं दर्शयसि।

(८५) भो वयस्य! एष खलु अपसारयन्निव सुखोपविष्टं जनं विस्तारिवारिधाराभिः प्रविष्टः पर्जन्यः।

---

(ध) पर्ज्जन्य मेघः अपसारयन् स्थानान्तरं नयन्।

(४४) अमूरिति। अमूः वारिधाराः मृणालसूच्यः पङ्कान्तराणीव जलदान्तराणि भित्त्वा चन्द्रव्यसनात् चन्द्रस्य व्यसनं विपद् मेघावरणमिति भावः तस्मात् कारणात् विमुक्ताः परित्यक्ताः दिवः आकाशस्य अम्बुधारा इव पतन्ति। उपेन्द्रेन्द्रवज्रयोः संमेलनादुपजातिवृत्तम्।

(४५) धाराभिरिति। बलदेवस्य पटः वस्त्रं नीलवसनमित्यर्थः तद्वत्प्रकाशो येषां ते मेघाः आर्य्यजनानां साधुजनानां चित्तानीव सुनि-

प्रिये ! पश्य पश्य,

एतैः पिष्ट-तमाल-वर्णकनिभैरालिप्तमम्भोधरैः
संसक्तैरुपवीजितं सुरभिभिः शीतैः प्रदोषानिलैः।
एषाऽम्भोद-समागम-प्रणयिनी स्वच्छन्दमभ्यागता
रक्ता कान्तमिवाम्बरं प्रियतमा विद्युत् समालिङ्गति ॥४६॥

वसं। शृङ्गारभावं नाटयन्ती चारुदत्तमालिङ्गति।

चारु। स्पर्शं नाटयन् प्रत्यालिङ्ग्य।

भो मेघ ! गम्भीरतरं नद त्वं, तव प्रसादात् स्मरपीड़ितं मे।
संस्पर्श-रोमाञ्चित-जातरागं कदम्बपुष्पत्वमुपैति गात्रम् ॥४७॥

---

मेलाः ताभिः, अर्जुनशरा इव प्रतिकर्कशाः अतिकर्कशाः ताभिः अत-एव चण्डाभिः उग्राभिः धाराभिः शक्रस्य इन्द्रस्य मौक्तिकनिधानं मौक्तिकानां निधानं इन्द्रकर्तृकाकाशनिहितसुक्ताराशिमिव उद्गिरन्तः स्रवन्ति। उत्प्रेक्षालङ्कारः। वसन्ततिलकं वृत्तम्।

(४६) एतैरिति। अम्भोदसमागमे जलदोदये प्रणयिनी प्रेमवती मेघोदय एव विद्युद्दर्शनात् कामस्य उद्दीपनाच्चेति भावः स्वच्छन्दं स्वेच्छया अभ्यागता कुतश्चित् आगता एषा रक्ता रक्तवर्णा अनुरागिणी च विद्युत् प्रियतमा कान्तमिव पिष्टं मथितं यत् तमालं तस्य वर्णकः विलेपनम् अथ वर्णकः। विलेपने मलयजे इति हेमचन्द्रः। तन्निभैः नीलैरित्यर्थः अम्भोधरैः मेघैः आलिप्तम् आवृतं तथा संसक्तैः सतत-सञ्चारिभिः सुरभिभिः सुगन्धैः शीतैः शीतलैः प्रदोषानिलैः निशावायुभिः उपवीजितम् अम्बरम् आकाशं समालिङ्गति अत्र समासोक्त्युपाश्लिष्ट-सोपमालङ्कारः शार्दूलविक्रीड़ितं वृत्तम्।

(४७) भो इति। भो मेघ ! त्वं गम्भीरतरं नद तव प्रसादात् मे मम स्मरपीडितं गात्रं संस्पर्शेन प्रियतमायाः [illegible]

विदू। दासीए पुत्त दुद्दिण ! अणज्जो दाणिं सि तुमं, जं एव्वं भोदिं(न) बिज्जुआए भाआवेसि (८६)।

चारु। वयस्य ! नार्हस्युपालब्धुम्।

वर्षशतमस्तु दुर्दिनमविरतधारं शतह्रदा स्फुरतु।
अस्मद्विधदुर्लभया यदहं प्रियया परिष्वक्तः॥ ४८॥

अपिच, वयस्य !

धन्यानि तेषां खलु जीवितानि,
ये कामिनीनां गृहमागतानाम्।
आर्द्राणि मेघोदकशीतलानि
गात्राणि गात्रेषु परिष्वजन्ति॥ ४९॥

---

(८६) दास्याः पुत्र दुर्दिन ! अनार्य्य इदानीमसि त्वं, यदेवं भवतीं विद्युता भीषयसि।

---

सञ्जातरोमोद्गमम् अतएव जातरागं जातः उत्पन्नः रागः अनुरागः यस्मिन् तथाभूतं सत् कदम्बपुष्पम् उपैति प्राप्नोति। इन्द्रोपेन्द्रवज्रयोः संमेलनादुपजातिवृत्तम्।

(न) भवतीं मान्यां वसन्तसेनामिति यावत्।

(४८) वर्षेति। अविरता अविच्छिन्ना धारा यस्मिन् तत् दुर्दिनं वर्षशतं व्याप्य अस्तु, शतह्रदा विद्युच्च स्फुरतु, यत् यस्मात् अहम् अस्मद्विधानां दुर्लभया दुष्प्राप्यया दारिद्र्यात् तादृशवेश्यारत्नसम्भोगस्य प्रचुरार्थसाध्यत्वाच्चेति भावः प्रियया परिष्वक्तः आलिङ्गितः। आर्य्यावृत्तमिदम्।

(४९) धन्यानीति। ये जनाः गृहमागतानां कामिनीनां मेघोदकशीतलानि अतएव आर्द्राणि गात्राणि गात्रेषु स्वशरीरेषु परिष्वजन्ति आलिङ्गन्ति, तेषां जीवितानि धन्यानि खलु। इन्द्रवज्रावृत्तम्।

प्रिये वसन्तसेने !

स्तम्भेषु प्रचलित-वेदिसञ्चयान्तं
शीर्णत्वात् कथमपि धार्य्यते वितानम्।
एषा च स्फुटित-सुधाद्रवानुलेपात्
संक्लिन्ना सलिलभरेण चित्रभित्तिः॥५०॥

ऊर्द्ध्वमवलोक्य। अये इन्द्रधनुः! प्रिये! पश्य पश्य।

विद्युज्जिह्वेनेदं महेन्द्र-चापोच्छ्रितायतभुजेन।
जलधरविवृद्ध-हनुना विजृम्भितमिवान्तरीक्षेण॥५१॥

---

(५०) स्तम्भेष्विति। प्रचलितः वायुवेगेनेति शेषः वेद्याः वद्धभूमेः सञ्चये आभोगे अन्तः प्रान्तभागः यस्य तादृशं वितानम् उल्लोचः चन्द्रातप इत्यर्थः अस्त्री वितानमुल्लोच इत्यमरः। शीर्णत्वात् स्तम्भेषु कथमपि धार्य्यते, एषा चित्रभित्तिः विचित्ररूपेण निर्म्मिता भित्तिः कुड्यञ्च स्फुटितस्य गलितस्य सुधाद्रवस्य द्रवीभूतचूर्णस्य अनुलेपात् संक्लिन्ना सम्यक् आर्द्रीकृता एतेन प्रवलवायुवर्षणाभ्याम् अस्य प्रदेशस्य भग्नत्वसम्भावना अतः अभ्यन्तरं प्रवेष्टव्यमिति ध्वन्यते। वृत्तमत्र प्रहर्षिणी त्र्याशाभिर्म्नजरगाः प्रहर्षिणीयमिति लक्षणात्।

(५१) विद्युदेव जिह्वा यस्य तेन, महेन्द्रचापः इन्द्रधनुरेव उच्छ्रितौ उत्क्षिप्तौ आयतौ दीर्घौ भुजौ यस्य तादृशेन इन्द्रधनुषः मण्डलाकारत्वेन उत्क्षिप्त सम्मिलितहस्तद्वयेन सादृश्यम्। तल्लक्षणञ्चोक्तं वराहमिहिरसंहितायां यथा सूर्य्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे। वियति धनुः संस्थाना ये दृश्यन्ते तदिन्द्रधनुः॥ इति। तथा जलधर एव विवृद्धः विशेषेण वृद्धिं गतः हनुः गण्डोपरिभागः यस्य तथाभूतेन अन्तरीक्षेण विजृम्भितमिव साङ्गभङ्गं मुखव्यादानं कृतमिवेत्यर्थः। उत्प्रेक्षालङ्कारः आर्य्याछन्दश्च।

तदेषाभ्यन्तरमेव प्रविशावः। इत्युत्थाय परिक्रामति।

तालीषु तारं, विटपेषु मन्द्रं शिलासु रुक्षं, सलिलेषु चण्डम्।
सङ्गीतवीणा इव ताड्यमानास्तालानुसारेण पतन्ति धाराः॥५२॥

इति निष्क्रान्ताः सर्वे।

दुर्दिनोनाम पञ्चमोऽङ्कः।

## अथ षष्ठोऽङ्कः।

ततः प्रविशति चेटी।

चेटी। कधं अज्ज वि अज्जआ ण विबुज्झदि! भोदु, पविसिअ पडिबोधइस्सं (१)।

इति नाट्येन परिक्रामति।

ततः प्रविशत्याच्छादितशरीरा प्रसुप्ता वसन्तसेना।

चेटी। निरूप्य। उत्थेदु उत्थेदु अज्जआ, पभादं संवुत्तं (२)

(१) कथमद्यापि आर्य्या न विबुध्यते! भवतु, प्रविश्य प्रतिबोधयिष्यामि।

(२) उत्तिष्ठतु, उत्तिष्ठतु, आर्य्या, प्रभातं संवृत्तम्।

---

(५२) तालीष्विति। धाराः वृष्टिप्रवाहाः तालानुसारेण ताड्यमानाः वाद्यमानाः सङ्गीतवीणा इव तालीषु तालवनेषु तारम् उच्चैः, विटपेषु वृक्षशाखासु मन्द्रं गम्भीरं शिलासु पाषाणेषु रुक्षं कर्कशं तथा सलिलेषु चण्डं तीक्ष्णं यथा तथा पतन्ति। इन्द्रोपेन्द्रवज्रयोः संमेलनादुपजातिवृत्तम् उपमालङ्कारश्च।

वसं। प्रतिबुध्य। कधं रत्तिं ज्जेव पभादं संवुत्तं ? (३)।

चेटी। अम्हाणं एसो पभादो, अज्जआए उण रत्तिं ज्जेव (४)।

वसं। हञ्जे! कहिं उण तुम्हाणं जूदिअरो ? (५)।

चेटी। अज्जए! वड्ढमाणअं समादिसिअ, पुप्फकरण्डअं (क) जिण्णुज्जाणं गदो अज्जचारुदत्तो (६)।

वसं। किं समादिसिअ ? (७)।

चेटी। जोएहि रादीए पवहणं, वसन्तसेना गच्छदु त्ति (८)।

वसं। हञ्जे! कहिं मए गन्तव्वं ? (९)।

चेटी। अज्जए! जहिं चारुदत्तो (१०)।

(३) कथं रात्रिरेव प्रभातं संवृत्तम् ?

(४) अस्माकमेतत्प्रभातम्, आर्य्यायाः पुनः रात्रिरेव।

(५) चेटि! कुतः पुनर्युष्माकं द्यूतकरः ?

(६) आर्य्ये! वर्द्धमानकं समादिश्य पुष्पकरण्डकं जीर्णोद्यानं गत आर्य्यचारुदत्तः।

(७) किं समादिश्य ?

(८) योजय रात्रौ प्रवहणं, वसन्तसेना गच्छत्विति।

(९) चेटि! कुत्र मया गन्तव्यम् ?

(१०) आर्य्ये! यत्र चारुदत्तः।

---

(क) पुष्पकरण्डकं पुष्पाणां करण्डकम् आधारविशेषः तत् कुसुमपूर्णमित्यर्थः।

वसं। चेटीं परिष्वज्य। हञ्जे ! सुट्ठु ण णिज्झाइदो (ख) रादीए, ता अज्ज पच्चक्खं पेक्खिस्सं। हञ्जे ! किं पविट्टा अहं इह अब्भन्तर-चदुस्सालअं ? (११)।

चेटी। ण केवलं अब्भन्तर-चदुस्सालअं, सव्वजणस्स वि हिअअं पविट्टा (१२)।

वसं। अवि सन्तप्पदि चारुदत्तस्स परिअणो ? (१३)।

चेटी। सन्तप्पिस्सदि (१४)।

वसं। कदा ? (१५)।

चेटी। जदो अज्जआ गमिस्सदि (१६)।

वसं। तदो मए पढमं सन्तप्पिदव्वं। सानुनयम्। हञ्जे ! गेह्ल एदं रअणावलिं। मम बहिणिआए अज्जा-धूदाए गदुअ समप्पेहि, भणिदव्वं च, अहं सिरि चारुदत्तस्स

(११) चेटि ! सुष्ठु न निध्यातो रात्रौ तदद्य प्रत्यक्षं प्रेक्षिष्ये। चेटि ! किं प्रविष्टा अहमिहाभ्यन्तरचतुःशालकम् ?

(१२) न केवलम् अभ्यन्तरचतुःशालकं, सर्वजनस्यापि हृदयं प्रविष्टा।

(१३) अपि सन्तप्यते चारुदत्तस्य परिजनः ?

(१४) सन्तप्स्यति।

(१५) कदा ?

(१६) यदा आर्या गमिष्यति।

---

(ख) निध्यातः निरीक्षितः।

अवणिज्जिदा दासी, तदा तुम्हाणं पि। ता एसा तुह्ज्जेव कण्ठाहरणं होदु रअणावली (१७)।

चेटी। अज्जए! कुप्पिस्सदि चारुदत्तो अज्जाए दाव (१८)

वसं। गच्छ ण कुप्पिस्सदि (१९)।

चेटी। गह्णीअ। जं आणवेदि (२०)।

इति निष्क्रम्य पुनः प्रविशति।

चेटी। अज्जए! भणादि अज्जा धूदा, अज्जउत्तेण तुम्हाणं पसादीकदा, ण जुत्तं मम एदं गेह्णिदुं। अज्जउत्तो ज्जेव मम आहरणविसेसो त्ति जाणादु भोदी (२१)।

ततः प्रविशति दारकं गृहीत्वा रदनिका।

रदनिका। एहि वच्छ! सअडिआए (ग) कीलम्ह (२२)।

---

(१७) तदा मया प्रथमं वक्तव्यम्। चेटि! गृहाण इमां रत्नावलीं, मम भगिन्यै आर्य्याधूतायै गत्वा समर्पय, वक्तव्यञ्च, अहं श्रीचारुदत्तस्य गुणनिर्जिता दासी, तदा युष्माकमपि, तदेषा तवैव कण्ठाभरणं भवतु रत्नावली।

(१८) आर्य्ये! कुपिष्यति चारुदत्त आर्य्यायै तावत्।

(१९) गच्छ न कुपिष्यति।

(२०) यदाज्ञापयति।

(२१) आर्य्ये! भणति आर्य्या धूता, आर्य्यपुत्रेण युष्माकं प्रसादीकृता, न युक्तं ममैतां ग्रहीतुम्। आर्य्यपुत्र एव ममाभरणविशेष इति जानातु भवती।

(२२) एहि वत्स! शकटिकया क्रीड़ावः।

---

(ग) शकटिकया क्षुद्रशकटेन।

दार। सकरुणम्। रदनिए ! किं मम एदाए मट्टिआ-सअडिआए। तं ज्जेव सोवण्णसअडिअं देहि (२३)।

रद। सनिर्वेदं निश्वस्य। जाद ! कुदो अम्हाणं सुवण्णववहारो ?। तादस्स पुणो वि रिद्धीए सुवण्णसअडिआए कीलिस्ससि। ता जाव विणोदेमि णं, अज्जआ वसन्तसेणाए समीवं। उपसर्प्य। उपसृत्य। अज्जए ! पणमामि (२४)।

वसं। रदणिए ! साअदं दे ?। कस्स उण अअं दारओ ? अनलङ्किद-सरीरो वि चन्दमुहो आणन्देदि मम हिअअं (२५)।

रद। एसो क्खु अज्जचारुदत्तस्स पुत्तो रोहसेणो णाम (२६)।

वसं। बाहू प्रसार्य। एहि मे पुत्तअ ! आलिङ्ग। इति अङ्के उपवेश्य। अणुकिदं अणेण पिदुणो रूवं (२७)।

---

(२३) रदनिके ! किं ममैतया मृत्तिकाशकटिकया, तामेव सौवर्ण-शकटिकां देहि।

(२४) जात ! कुतोऽस्माकं सुवर्णव्यवहारः ? तातस्य पुनरपि ऋद्ध्या सुवर्णशकटिकया क्रीडिष्यसि। तद्यावद्विनोदयाम्येनम्, आर्या-वसन्तसेनायाः समीपमुपसर्पिष्यामि। आर्ये ! प्रणमामि।

(२५) रदनिके ! स्वागतं ते, कस्य पुनरयं दारकः ? अनल-ङ्कृतशरीरोऽपि चन्द्रमुख आनन्दयति मम हृदयम्।

(२६) एष खलु आर्य्य चारुदत्तस्य पुत्रो रोहसेनो नाम।

(२७) एहि मे पुत्रक ! आलिङ्ग। अनुकृतम् अनेन पितृ-रूपम्।

रद। ण केवलं रूवं, सीलं पि, तक्केमि। एदिणा अज्ज-चारुदत्तो अत्ताणअं विणोदेदि (२८)।

वसं। अध किं णिमित्तं एसो रोअदि ? (२९)।

रद। एदिणा पड़िवेसिअ-गहवइ दारअ-केरिआए सुव-ससअड़िआए कीलिदं, तेण अ सा णीदा, तदो उण तं मग्गन्तस्स मए इअं मट्टिआ सअड़िआ कदुअ दिणा। तदो भणादि, रदणिए! किं मम एदाए मट्टिआ सअड़िआए, तं ज्जेव सोवस्ससअड़िअं देहि त्ति (३०)।

वसं। हद्धी हद्धी, अअं पि णाम परसम्पत्तीए सन्तप्पदि!। भअवं कअन्त! पोक्खर वत्तपड़िद जलबिन्दु-सरिसेहिं कीलसि तुमं पुरिस-भाअधेएहिं। इति साखा। जाद! मा रोद, सोवस्स सअड़िआए कीलिस्ससि (३१)।

(२८) न केवलं रूपं, शीलमपि, तर्कयामि। एतेनार्य्यचारुदत्त आत्मानं विनोदयति।

(२९) अथ किंनिमित्तम् एष रोदिति ?

(३०) एतेन प्रतिवेशिक गृहपति दारकस्य सुवर्णशकटिकया क्रीड़ितं, तेन च सा नीता, ततः पुनस्तां याचतो मया इयं मृत्तिका-शकटिका कृत्वा दत्ता। ततो भणति, रदनिके! किं मम एतया मृत्तिकाशकटिकया तामेव सौवर्णशकटिकां देहीति।

(३१) हाधिक्, हाधिक्! अयमपि नाम परसम्पत्त्या सन्तप्यते! भगवन् कृतान्त! पुष्करपत्र-पतित-जलविन्दु-सदृशैः क्रीड़सि त्वं पुरुषभागधेयैः। जात! मा रुदिहि, सौवर्णशकटिकया क्रीड़िष्यसि।

दार। रदणिए! का एसा? (३२)।

वसं। पिदुणो दे गुणणिज्जिदा दासी (३३)।

रद। जाद! अज्जआ दे जणणी भोदि (३४)।

दार। रदणिए! अलिअं तुमं भणासि, जइ अम्हाणं अज्जआ जणणी, ता कीस अलङ्किदा? (३५)।

वसं। जाद! मुद्धेण मुहेण अदिकरुणं मन्तेसि। नाट्ये-नाभरणान्यवतार्य्य रुदती। एसा दाणिं दे जणणी संवुत्ता, ता गेह्न एदं अलङ्कारअं, सोवण्णसअडिअं घडावेहि (३६)।

दार। अवेहि, (घ) ण गेह्निस्सं, रोदसि तुमं (३७)।

वसं। अश्रूणि प्रमृज्य। जाद! न रोदिस्सं, गच्छ, कील। अलङ्कारैर्मृच्छकटिकं पूरयित्वा। जाद! कारेहि सोवण्णसअडिअं (३८)

(३२) रदनिके! का एषा?

(३३) पितुस्ते गुणनिर्जिता दासी।

(३४) जात! आर्य्या ते जननी भवति।

(३५) रदनिके! अलीकं त्वं भणसि, यद्यस्माकमार्य्या जननी, तत्किमर्थमलङ्कृता?

(३६) जात! मुग्धेन मुखेनातिकरुणं मन्त्रयसि। एषा इदानीं ते जननी संवृत्ता। तद् गृहाणैतमलङ्कारं, सौवर्णशकटिकां कारय।

(३७) अपेहि, न ग्रहीष्यामि, रोदिषि त्वम्।

(३८) जात! न रोदिष्यामि, गच्छ, क्रीड़। जात! कारय सौवर्णशकटिकाम्।

---

(घ) अपेहि अपसर गच्छ इत्यर्थः।

इति दारकमादाय निष्क्रान्ता रदनिका ।

प्रविश्य प्रवहणाधिरूढश्चेटः । लदणिए ! लदणिए ! णिवेदेहि अज्जआए वसन्तसेणाए, ओहालिअं (ङ) पक्खदुआलए सज्जं पवहणं चिट्ठदि (३९) ।

प्रविश्य रदनिका । अज्जए ! एसो वड्ढमाणओ विण्णवेदि पक्खदुआरए सज्जं पवहणं त्ति (४०) ।

वसं । हञ्जे ! चिट्ठदु मुहुत्तअं, जाव अहं अत्ताणअं पसाधेमि (४१) ।

रदनिका । निष्क्रम्य । वड्ढमाणआ ! चिट्ठ मुहुत्तअ जाव अज्जआ अत्ताणअ पसाधेदि (४२) ।

चेटः । ही ही भो ! मए वि जाणत्थलके विश्शमलिदे, ता जाव गेण्हिअ आअच्छामि । एदे णाश्शालज्जु-कडुआ (च)

---

(३९) रदनिके ! रदनिके ! निवेदय आर्य्यायै वसन्तसेनायै, अपवारितं पक्षद्वारके सज्जं प्रवहणं तिष्ठति ।

(४०) आर्य्ये ! एष वर्द्धमानको विज्ञापयति पक्षद्वारे सज्जं प्रवहणमिति ।

(४१) चेटि ! तिष्ठतु मुहूर्त्तकं, यावत् अहमात्मानं प्रसाधयामि ।

(४२) वर्द्धमानक ! तिष्ठ मुहूर्त्तकं यावदार्य्या आत्मानं प्रसाधयति ।

---

(ङ) अपवारितं गोपितं गोपनस्थानस्थमित्यर्थः ।

(च) नासारज्जु कटुकाः नासारज्ज्वा कटुकाः तीक्ष्णाः वेगवन्त इत्यर्थः ।

बइल्ला, भोदु, पवहणेण ज्जेव गदागदिं करिस्सं (४३)।
इति निष्क्रान्तश्चेटः।

वधू। हञ्जे ! उवणेहि मे पसाहणं, अत्ताणअं पसाधइस्सं (४४)। इति प्रसाधयन्ती स्थिता।

प्रविश्य प्रवहणाधिरूढ़ः स्थावरकश्चेटः (ङ)। आणत्तम्हि लाअशालअशण्ठाणेण, थावलआ ! पवहणं गेह्णिअ, पुप्फकलण्डअं जिण्णुज्जाणं तुलिदं आअच्छेहि त्ति। भोदु, तहिं ज्जेव गच्छामि। वहध, बइल्ला ! वहध। परिक्रम्यावलोक्य च। कधं गामशअलेहिं लुद्धे मग्गे। किं दाणिं एत्थ कलइश्शं। साटोपम्। अले ले, ओशलध ओशलध। आकर्ण्य। किं भणाध ? एशे कश्श केलके पवहणे त्ति ? एशे लाअशालअ शण्ठाण केलके पवहणेत्ति। ता शिग्घं ओशलध। अवलोक्य। कधं, एशे अवले शहिअं विअ मं पेक्खिअ शहश ज्जेव जूदपलाइदे विअ जूदिअले ओहालिअ (ज) अत्ताणअं असदो अवक्कन्ते, ता को उण एशे ? अधवा किं मम एदिणा ? तुलिदं गमिश्शं। अले ले

---

(४३) हो हो भोः ! मयापि यानास्तरणं विस्मृत, तत् यावत् गृहीत्वा आगच्छामि। एते नासिकारज्जुकटुका बलीवर्दाः। भवतु, प्रवहणेनैव गतागतिं करिष्यामि।

(४४) चेटि ! उपनय मे प्रसाधनम्, आत्मानं प्रसाधयिष्यामि।

---

(ङ) स्थावरकः गदाख्यः।

गामेलुआ, ओशलध ओशलध। किं भणाध? मुहुत्तअं चिट्ठ चक्कपलिवट्टिं (क) देहि त्ति? अले ले! लाअशालअ-शण्ठाण-केलके हग्गे शूले, चक्कपलिवट्टिं दइश्शं? अधवा एशे एआई तवश्शी, ता एव्वं कलेमि। एदं पवहणं अज्जचालुदत्तश्श लुक्खवाडिआए पक्खदुआलए थावेमि। इति प्रवहणं संस्थाप्य। एशेम्हि आअदे (४५)। इति निष्क्रान्तः।

चेटी। अज्जए! णेमिसद्दो विअ सुणीअदि, ता आअदो पवहणो (४६)।

---

(४५) आज्ञप्तोऽस्मि राजश्यालकसंस्थानेन, स्थावरक! प्रवहणं गृहीत्वा पुष्पकरण्डकं जीर्णोद्यानं त्वरितमागच्छेति। भवतु तत्रैव गच्छामि। वहत बलीवर्दौ! वहतम्। कथं ग्रामशकटैः रुद्धो मार्गः किमिदानीमत्र करिष्यामि। अरे रे! अपसरतः अपसरत। किं भणथ? एतत् कस्य प्रवहणमिति? एतत् राजश्यालकसंस्थानस्य प्रवहणमिति, तत् शीघ्रमपसरत। कथमेषोऽपरः सभिकमिव मां प्रेक्ष्य सहसैव द्यूतपलायित इव द्यूतकरोऽपवार्यात्मानमन्यतोऽपक्रान्तः। तत्कः पुनरेषः? अथवा किं ममैतेन, त्वरितं गमिष्यामि। अरे, रे, ग्राम्या! अपसरत अपसरत। किं भणथ! मुहूर्तकं तिष्ठ, चक्रपरिवर्त्तनं देहीति? अरे! रे! राजश्यालकसंस्थानस्य अहं शूरः, चक्रपरिवृत्तिं दास्यामि? अथवा, एष एकाकी तपस्वी, तदेवं करोमि। एतत् प्रवहणम् आर्यचारुदत्तस्य वृक्षवाटिकायाः पक्षद्वारके स्थापयामि। एषोऽस्मि आगतः।

(४६) आर्ये! नेमिशब्द इव श्रूयते, तदागतं प्रवहणम्।

वसं। हञ्जे ! गच्छ, तुवरदि मे हिअअं, ता आदेसेहि पक्खदुआरअं (४७)।

चेटी। एदु एदु अज्जआ (४८)।

वसं। परिक्रम्य। हञ्जे ! वीसम तुमं(४९)।

चेटी। जं अज्जआ आणवेदि(५०) इति निष्क्रान्ता।

वसं। दक्षिणाक्षिस्पन्दं सूचयित्वा प्रवहणमधिरुह्य च।

किं णेदं फुरदि दाहिणं लोअणं ! अधवा, चारुदत्तस्स ज्जेव दंसणं अणिमित्तं पमज्जइस्सदि (५१)।

प्रविश्य स्थावरकश्चेटः। ओसालिदा मए सअड़ा, ता जाव गच्छामि। इति नाट्येनाधिरुह्य चालयित्वा, स्वगतम्। भालिके पवहणे। अधवा, चक्कपलिवट्टिआए पलिश्शन्तश्श भालिके पवहणे पड़िभाअेदि। भोदु, गमिश्शं। जाध, गोणा ! जाध(५२)।

नेपथ्ये। अरे रे दोवारिआ ! अप्पमत्ता सएसु सएसु

---

(४७) चेटि ! गच्छ, त्वरयति मे हृदयं, तदादिश पक्षद्वारम्।

(४८) एतु एतु आर्य्या।

(४९) चेटि ! विश्राम्य त्वम्।

(५०) यदार्य्याज्ञापयति।

(५१) किं न्विदं ! स्फुरति दक्षिणं लोचनम्। अथवा चारुदत्तस्यैव दर्शनमनिमित्तं प्रमार्जयिष्यति।

(५२) अपसारिता मया शकटाः, तत् यावद् गच्छामि। भारवत् प्रवहणम् अथवा चक्रपरिवर्त्तनेन परिश्रान्तस्य सभारं प्रवहणं प्रतिभासते। भवतु, गमिष्यामि। यातं, गावौ यातम्।

गुम्मट्ठाणेसु(ञ) होध । एसो अज्ज गोवालदारओ गुत्तिअं (ट) भञ्जिअ, गुत्तिवालिअं वावादिअ, बन्धणं भेदिअ, परिब्भट्टो अवक्कमदि, ता गेह्णध गेह्णध (५३) ।

प्रविश्यापटीक्षेपेण सम्भ्रान्त एकचरणलग्ननिगडोऽवगुण्ठित आर्य्यकः परिक्रामति ।

चेटः । स्वगतम् । महन्ते णअलीए अब्भमे उप्पण्णे, ता तुलिदं तुलिदं गमिश्शं (५४) । इति निष्क्रान्तः ।

आर्य्यकः ।

> हित्वाहं नरपतिबन्धनापदेश-
> व्यापत्तिव्यसनमहार्णवं नराणाम् ।
> पादाग्रस्थितनिगडैकपाशकर्षी
> प्रभ्रष्टो गज इव बन्धनाद्भ्रमामि ॥१॥

(५३) अरे रे दौवारिकाः ! अप्रमत्ताः स्वेषु स्वेषु गुल्मस्थानेषु भवत । एषोऽद्य गोपालदारको गुप्तिं भङ्क्त्वा, गुप्तिपालकं व्यापाद्य बन्धनं भित्त्वा, परिभ्रष्टोऽपक्रामति । तद् गृह्णीत गृह्णीत ।

(५४) महान् नगर्यां सम्भ्रम उत्पन्नः, तत् त्वरितं त्वरितं गमिष्यामि ।

---

(ञ) गुल्मस्थानेषु रक्षिणां स्थानेषु थाना वा पुलिस इति प्रख्यातेषु इत्यर्थः ।

(ट) गुप्तिं दुर्गं बन्धनागारं वा ।

(१) हित्वेति । अहं नराणां नरपतेर्यद्बन्धनं कारावरोधः तदेव अपदेशः छलं तेन या व्यापत्तिः विशिष्टरूपा आपद् प्रहारादिरूपा तया यो व्यसनमहार्णवः दुःखसागरः तं हित्वा उत्तीर्य्य बन्धनात्

भो ! अहं खलु सिद्धादेश-जनित-परित्रासेन राज्ञा पालकेन घोषादानीय विशसने गूढ़ागारे बन्धनेन बद्धः (ठ)। तस्माच्च प्रियसुहृच्छर्विलक-प्रसादेन बन्धनात्परिभ्रष्टोऽस्मि अश्रूणि विसृज्य।

भाग्यानि मे यदि तदा मम कोऽपराधो,
यद्वन्यनाग इव संयमितोऽस्मि तेन।
दैवी च सिद्धिरपि लङ्घयितुं न शक्या,
गम्यो नृपो बलवता सह को विरोधः ? ॥२॥

तत्क्व गच्छामि मन्दभाग्यः ? विलोक्य। इदं कस्यापि साधोरनावृतपक्षद्वारं (ड) गेहम्।

प्रभ्रष्टः गज इव पादाग्रे स्थितः यः निगड़ः शृङ्खलं स एव एकः पाशः शृङ्खलरूपरज्जुरित्यर्थः तस्य कर्षी सन् भ्रमामि उपमालङ्कारः प्रहर्षिणी वृत्तं, "त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति तल्लक्षणात्।

(ठ) विशसने विनाशजनके गूढ़ागारे गुप्तगृहे कारायामित्यर्थः बध्यन्ते अनेनेति बन्धनं निगड़ादि करणे अनट्। तेन

(२) भाग्यानीति। यदि मे मम भाग्यानि राज्यभोगजनकशुभादृष्टानि सन्तीति शेषः तदा मम अपराधः कः न कोपीत्यर्थः। यदित्यव्ययं येन अपराधेन तेन राज्ञा इति शेषः वन्यनाग इव आरण्यगज इव संयमितः बद्धः अस्मि। दैवी दैवाधीना भाग्यायत्ता सिद्धिरपि राज्यप्राप्तिरपि लङ्घयितुं न शक्या केनापीति शेषः। अतः नृपः गम्यः गत्वा सम्बेयः सान्त्वनीय इत्यर्थः बलवता सह विरोधः विवादः कः न कर्त्तव्य इति भावः। वसन्ततिलकं वृत्तम्।

(ड) अनावृतपक्षद्वारं उद्घाटितपार्श्वद्वारम्।

इदं गृहं भिन्नमनायतार्गलं विशीर्णसन्धिश्च महाकपाटः ।
ध्रुवं कुटुम्बी व्यसनाभिभूतां, दशां प्रपन्नो मम तुल्यभाग्यः॥३

तदत्र तावत्प्रविश्य तिष्ठामि ।

नेपथ्ये । जाध गोणा ! जाध(५५) ।

आर्य्यकः । आकर्ण्य । अये ! प्रवहणमित एवाभिवर्त्तते ।

भवेद्गोष्ठीयानं, न च विषमशीलैरधिगतं,
वधूसंयानं वा, तदभिगमनोपस्थितमिदम् ।
वहिर्नेतव्यं वा प्रवरजनयोग्यं विधिवशा-
द्विविक्तत्वाच्छून्यं मम खलु भवेद्दैवविहितम् ॥४॥

---

(५५) यातं गावौ ! यातम् ।

(३) इदमिति । इदं गृहं भिन्नं भग्नं तथा अनायता अदत्ता अर्गला यस्य तत् अनावृतमित्यर्थः अस्य महाकपाटश्च विशीर्णसन्धिः विशीर्णा जीर्णा सन्धिः संयोगस्थानं यस्य सः, अतः अस्य कुटुम्बी गृहपतिः मम तुल्यभाग्यः दुर्भाग्य इत्यर्थः व्यसनाभिभूतां दुःखपूर्णां दशां ध्रुवं निश्चितं प्रपन्नः प्राप्तः ।

(४) भवेदिति । शून्यम् इदं प्रवहणं विषमशीलैः दुश्चरित्रैः अधिगतं अधिष्ठितं गोष्ठीयानं गोष्ठी सभाजः उत्सवस्थानमिति यावत् तत्र गमनार्थं यानं वाहनं तथाः वध्वा अभिगमनाय उपस्थितं वधूसंयानं वा, तथा विधिवशात् कार्यवशात् विधिर्विधाने दैवेचेति कोषः । वहिर्नेतव्यं वाह्यप्रदेशे प्रापणीयं प्रवरजनानां श्रेष्ठजनानां योग्यं वहनयोग्यं वा न भवेत्, विविक्तत्वात् विरलोपनीतत्वात् मम वहनार्थमिति शेषः दैवविहितं दैवेन प्रेरितं खलु निश्चितं भवेत् । शिखरिणी वृत्तम् ।

ततः प्रवहणेन सह प्रविश्य वर्द्धमानकश्चेटः। ह्री माणहे! आणीदे मए जाणथलके। लदणिए! णिवेदेहि अज्जआए वशन्तशेणाए अवत्थिदे शज्जे पवहणे अहिलुहिअ पुप्फकलण्डअं जिण्णुज्जाणं गच्छदु अज्जआ (५६)।

आर्य्यकः। आकर्ण्य। गणिकाप्रवहणमिदं, बहिर्य्यानञ्च, (ढ) भवत्वधिरोहामि इति स्वैरमुपसर्पति।

चेटः। श्रुत्वा। कधं, णेउलशद्दे! ता आअदा क्खु अज्जआ। अज्जए! इमे णश्शकडुआ बइल्ला। पिट्ठदो ज्जेव आलहदु अज्जआ (५७)।

आर्य्यकस्तथा करोति।

चेटः। पादुप्फालचालिदाणं णेउलाणं वीशन्तो शद्दो। भलक्कन्ते (ण) अ पवहणे, तधा तक्केमि शम्पदं अज्जआए

---

(५६) आश्चर्य्यम्! आनीतं मया यानाभरणम्। रदनिके! निवेदय आर्य्यायै, वसन्तसेनायै, अवस्थितं सज्जं प्रवहणम्, अधिरुह्य पुष्करण्डकं जीर्णोद्यानं गच्छतु आर्य्या।

(५७) कथं नूपुरशब्दः! तदागता खल्वार्य्या। इमौ नासिकारज्जुकटुकौ बलीवर्द्दौ, ततपृष्ठत एवारोहतु आर्य्या।

---

(ढ) बहिर्य्यानं बहिः बाह्यप्रदेशे नेतव्यं यानम्। स्वैरं मन्दं मन्दमित्यर्थः।

(ण) पादोत्फालचालितानां पादयोरुत्फालेन गतिविशेषेण चालितानां चञ्चलीकृतानाम्। भाराक्रान्ते आरोह्यधिष्ठानेनेति भावः।

आरूढ़ाए होदव्वं, ता गच्छामि। जाध, गोणा! जाध (५८)। इति परिक्रामति।

प्रविश्य वीरकः। अरे रे अरे! जअ-जअमाण-चन्दणअ-मङ्गल-फुल्लभद्द-प्पमुहा!

किं अच्छध वीसद्धा जो सो गोवालदारओ रुद्धो।

भेत्तूण समं वच्चइ णरवइहिअअं च बन्धणं चावि॥ ५॥

अले! पुरत्थिमे पदोलीदुआरे चिट्‌ठ तुमं, तुमं पि पच्छिमे, तुमं पि दक्खिणे, तुमं पि उत्तरे। जो वि एसोपाआर-खण्डो, (त) एदं अहिरुहिअ चन्दणेण समं गदुअ अव-लोएमि। एहि, चन्दणअ! एहि, इदो दाव (५९)।।

(५८) पादोत्‌क्षालचालितानां नूपुराणां विश्रान्तः शब्दः, भारा-क्रान्तञ्च प्रवहणं, तथा तर्कयामि साम्प्रतमार्य्या आरूढ़या भवितव्यम्, तद् गच्छामि। यातं, गावौ! यातम्।

(५९) अरे रे अरे, जयजयमानचन्दनकमङ्गलपुष्पभद्रप्रमुखाः!।

किं स्थ विश्रब्धाः? यः स गोपालदारको रुद्धः।

भित्त्वा समं व्रजति नरपतिहृदयञ्च बन्धनञ्चापि॥

अरे! पुरस्तात् प्रतोलीद्वारे तिष्ठ त्वं, त्वमपि पश्चिमे, त्वमपि दक्षिणे त्वमपि उत्तरे। योऽपि एष प्राकारखण्डः, एतमभिरुह्य चन्दनेन समं गत्वा अवलोकयामि। एहि चन्दनक! एहि, इतस्तावत्।

---

(५) विश्रब्धाः विश्वस्ताः निःशङ्का इत्यर्थः। नरपतिहृदयं भित्त्वा व्याकुलीकृत्य इत्यर्थः।

(त) प्रतोलीद्वारे रथ्याद्वारे बहिर्द्वारे इत्यर्थः। प्राकारखण्डः प्राचीरांशः।

प्रविश्य संभ्रान्तश्चन्दनकः । अरे, रे, वीरअ-विसल्ल-भीम-ङ्गअदण्डकालअ-दण्डसूर-प्पमुहा ! ।

आअच्छध वीसत्था, तुरिअं जत्तेह लहु करेज्जाह ।
लच्छी जेण ण रण्णो पहवइ गोत्तन्तरं गन्तुं ॥ ६ ॥

अबिअ ।

उज्जाणेसु सहासु अ मग्गे णअरीअ आवणे घोसे ।
तं तं जोहह तुरिआ सङ्का वा जाअए जत्थ ॥ ७ ॥

रे रे वीरअ ! किं किं दरिसेसि, भणाहि दाव वीसद्धं ।
भेत्तूण अ बन्धणअं को सो गोवालदारअं हरइ ॥ ८ ॥

कस्स इमो दिणअरो ? कस्स चउत्थो अ वट्टए चन्दो ?
छट्ठो अ भग्गवगहो ? भूमिसुओ पञ्चमो कस्स ? ॥ ९ ॥

भण कस्स जम्मछट्ठो जीवो, ? णवमो तहेअ सूरसुओ ?
जीअन्ते चन्दणए, को सो गोवालदारअं हरइ (१०) ॥१०॥

(६०) अरे रे वीरकविशल्यभीमाङ्गद-दण्डकाल-दण्डशूरप्रमुखाः !
आगच्छत विश्वस्तास्त्वरितं यतध्वं लघु कुरुत ।
लक्ष्मीर्येन न राज्ञः प्रभवति गोत्रान्तरं गन्तुम् ॥

(६) गोत्रान्तरं कुलान्तरं अन्यकुलमित्यर्थः गोत्रं नामन्यपत्ये कुले इति शेषः ।

(७) आपणे हट्टे क्रयविक्रयस्थाने इत्यर्थः । घोषे गोपपल्ल्यां शङ्का संशयः ।

(८) दर्शयसि स्वार्थे णिः । पश्यसीत्यर्थः ।

(९) अष्टमः जन्मराशेः अष्टमराशिस्थित इत्यर्थः एवं सर्वत्र ।

(१०) सूरसुतः शनैश्चरः । चन्दनके मयि जीवति विद्यमाने सतीत्यर्थः । यः गोपालदारकं हरति तस्य रव्यादयः अष्टमादिराशिस्था

अपिच, उद्यानेषु सभासु च मार्गे नगरकोलाहले घोरे।
तं नयन्त्वन्यत त्वरितं, यतः भयं न जायते यत्र॥
रे रे चौरक! किं किं दर्शयसि, अपसि तावदित्थम्।
भित्त्वा च बन्धनकं कः स गोपालदारकं हरति॥
कस्याष्टमो दिनकरः, कस्य चतुर्थश्च वर्त्तते चन्द्रः।
षष्ठश्च भार्गवषष्ठो, भूमिसुतः पञ्चमः कस्य॥
भण, कस्य जन्मषष्ठो जीवो, नवमस्तथैव सूरसुतः।
जीवति चन्दनके कः स गोपालदारकं हरति॥

---

इत्यर्थः तादृशेषु च रथ्यादिषु मानवस्य घोरतरापदामवश्यम्भावस्य शास्त्र-सिद्धत्वादिति भावः। तथाचोक्तं ज्योतिषे,

> सुतरङ्भयमारचन्द्रजः सौख्यसम्पं
> धनहरणमथार्किर्भार्गवश्चार्थलाभम्।
> मरणमथ पतङ्गः स्थाननाशं सुरेज्यः
> सृजति निधनसंस्थो नेत्ररोगञ्च चन्द्रः॥

> इष्ट्वां शास्त्रविरोधिकामपि धियं मूढां करोत्यङ्गिरा
> घोरां दुःखपरम्परां दिनकरः कुष्ठामयं चन्द्रमाः।
> सौम्यो रोगविनाशमिच्छति नृणां रोगक्षयं भार्गवो
> भौमः शत्रुभयं चतुर्थभवने सौरिश्च वित्तक्षयम्॥

> स्थिताः षष्ठे राशौ दिनकरमहीजार्कतनया
> बुधश्चन्द्रश्चैवं प्रचुरधनधान्यानि ददति।
> समृद्धिं शत्रूणां मनसि च विषादं सुरगुरुः
> भृगुर्नोगं कुर्य्याद्युवति कृत वैरञ्च परमम्॥

> दौर्भाग्यं शशलाञ्छनः क्षितिसुतश्चोद्विग्नतां चेतसो
> दोषोद्रेकमसत्तमां रविसुतः क्लिष्टंवियोगं रविः।
> दौर्भाग्यं विदधाति चन्द्रतनयः प्राप्तिं परां भार्गवः।
> कुर्य्यात् पञ्चमराशिगोचरगतो जीवो नृणां निर्वृतिम्॥

वीरकः । भड(च) चन्दणआ !

अवहरइ कोबि तुरिअं चन्दणअ ! सवामि तुज्ज हिअएण ।
जह अद्धुइद-दिनअरे गोवालअ-दारओ खुड़िदो (६१) ॥११॥

चेटः । जाध, गोणा ! जाध (६२) ।

चन्द । दृष्ट्वा । भरे रे ! पेक्ख, पेक्ख,

ओहारिओ पवहणो बच्चइ मज्झेण राअमग्गस्स ।
एदं दाव विआरह ! कस्स, कहिं पवसिओ पवहणोत्ति (६३)॥१२

(६१) हे भट चन्दनक !
अपहरति कोऽपि त्वरितं, चन्दनक ! शपे तव हृदयेन ।
यथा अर्द्धोदितदिनकरे गोपालक-दारकः खुटितः ॥
(६२) यातं, गावौ, यातम् ।
(६३) अरे, रे ! पश्य, पश्य ।
अपवारितं प्रवहणं व्रजति मध्येन राजमार्गस्य ।
एतत्तावद्विचारय, कस्य कुत्र प्रेषितं प्रवहणमिति ॥

धर्मस्थाने दिनकरसुतो नाशमर्थस्य कुर्य्याद्
रोगं सौम्यो धरणितनयो भाग्यनिस्वार्थलाभम् ।
त्रासं सोमो जनयति नृणां शोकविद्वेषमर्कः
स्थानं मानं पशुसुतयुतश्चापि जीवः प्रकामम् ॥

अष्टमसूर्ये मरणं चतुर्थचन्द्रे कुक्षिपीड़ाः षष्ठशुक्रे मरणं युवतिजनैरसु पञ्चमकुजे उद्वेगः षष्ठजीवे मतुह्निर्मनःपीडा च तथा नवमशनैश्चरे अर्थनाश इति बोद्धव्यम् ।

(च) भट ! वीर !

(११) तव हृदयेन शपे शपथं करोमि सत्यं वदामीति भावः खुटितः पलायितः ।

(१२) अपवारितं आच्छादितम् ।

वीरकः। अवलोक्य। अरे, पवहणवाहआ ! मा दाव एदं पवहणं वाहेहि कस्सकेरकं एदं पवहणं? को वा एथ आरूढो? कहिं वा वजइ? (६४)।

चेटः। एशे क्खु पवहणे अज्ज चालुदत्ताह केलके, इध अज्जआ वशन्तशेणा आलूढा, पुप्फकलण्डअं जिण्णुज्जाणं कीलिदुं चालुदत्तश्श णीअदि (६५)।

वीरकः। चन्दनकमुपसृत्य। एसो पवहणवाहओ भणादि, अज्जचारुदत्तस्स पवहणं, वसन्तसेणा आरूढा, पुप्फकरण्डअं जिण्णुज्जाणं णीअदि त्ति (६६)।

चन्द। ता गच्छदु (६७)।

वीरकः। अणवलोइदो ज्जेव? (६८)।

चन्द। अध इं (६९)।

वीरकः। कस्स पच्चएण? (७०)।

---

(६४) अरे, प्रवहणवाहक! मा तावदेतत् प्रवहणं वाहय, कस्यैतत् प्रवहणं? को वा इहारूढः? कुत्र वा व्रजति?

(६५) एतत् खलु प्रवहणम् आर्य्यचारुदत्तस्य, इहार्य्या वसन्तसेना आरूढा, पुष्पकरण्डकं जीर्णोद्यानं क्रीडितुं चारुदत्तस्य नीयते।

(६६) एष प्रवहणवाहको भणति, आर्य्यचारुदत्तस्य प्रवहणं, वसन्तसेनारूढा, पुष्पकरण्डकं जीर्णोद्यानं नीयते इति।

(६७) तद्गच्छतु।

(६८) अनवलोकित एव?

(६९) अथ किम्?

(७०) कस्य प्रत्ययेन?

चन्द । अज्जचारुदत्तस्स (७१) ।

वीरकः । को अज्जचारुदत्तो ? का वा वसन्तसेणा ? जेण अणवलोइदं वजइ ? (७२) ।

चन्द । अरे ! अज्जचारुदत्तं ण जाणासि ? ण वा वसन्तसेणिअं ? जइ अज्जचारुदत्तं वसन्तसेणिअं वा ण जाणासि, ता गअणे जोह्णासहिदं चन्दं पि तुमं ण जाणासि ।

को तं गुणारविन्दं सीलमिअङ्कं जणो ण जाणादि ।
आवण्ण दुक्ख-मोक्खं, चउ साअर सारअं रअणं ॥ १३ ॥
दो ज्जेव पूअणीआ इह णअरीए तिलअभूदा अ ।
अज्जा वसन्तसेणा, धम्मणिही चारुदत्तो अ (७३) ॥ १४ ॥

---

(७१) आर्य्यचारुदत्तस्य ।

(७२) क आर्य्यचारुदत्तः ? का वा वसन्तसेना ? येनानवलोकितं व्रजति ?

(७३) अरे आर्य्यचारुदत्तं न जानासि ? न वा वसन्तसेनां ? यदि आर्य्यचारुदत्तं वसन्तसेनां वा न जानासि, तदा गगने ज्योत्स्नासहितं चन्द्रमपि त्वं न जानासि ।

कस्तं गुणारविन्दं शीलमृगाङ्कं जनो न जानाति ।
आपन्नदुःखमोक्षं चतुःसागरसारं रत्नम् ॥

---

(१३) गुणा अरविन्दानीव यस्य तं अरविन्दसदृशमनोरम गुणशालिनमित्यर्थः शीले सुचरित्रे मृगाङ्क इव तं निर्मलचरित्रमिति भावः आपन्नानां दुःखस्य मोक्षः मुक्तिर्यस्मात् तं चतुःसागररत्नं चतुर्णां सागराणां रत्नं चतुरः सागरान् विचित्य लब्धं महामूल्यं वस्तु इत्यर्थः । कस्मादिदं तु प्राकृतेषु श्लोकेषु आर्य्याछन्दं बोद्धव्यम् ।

वीरकः । अरे, चन्दणआ ! ।

जाणामि चारुदत्तं, वसन्तसेणं च सुट्ठु जाणामि ।
पत्ते अ राअकज्जे, पिदरं पि अहं ण जाणामि (७४) ॥१५॥

आर्य्यकः । स्वगतम् । अयं मे पूर्ववैरी, अयं मे पूर्वबन्धुः (८) ।

यतः ।

एककार्य्यनियोगेऽपि नानयोस्तुल्यशीलता ।
विवाहे च चितायाञ्च यथा हुतभुजोर्द्वयोः ॥ १६ ॥

द्वावेव पूजनीयौ इह नगर्य्यां तिलकभूतौ च ।
आर्य्या वसन्तसेना धर्मनिधिश्चारुदत्तश्च ॥

(७४) अरे चन्दनक !
जानामि चारुदत्तं, वसन्तसेनाञ्च सुष्ठु जानामि ।
प्राप्ते च राजकार्य्ये, पितरमपि अहं न जानामि ॥

(१५) प्राप्ते राजकार्ये राजकार्यनियुक्तानां कस्मिन्नपि न प्रत्ययः कार्य्य इति भावः ।

(८) अयं वीरकः मम पूर्वशत्रुः अयञ्च चन्दनकः मम पूर्वमित्रम् ।

(१६) एकेति । विवाहे पाणिग्रहणकर्मणि । चितायां प्रेतदहनचत्वरे स्थितयोः द्वयोर्हुतभुजोर्यथा अनलयोर्यथा अग्न्योरिवेत्यर्थः अनयोः वीरकचन्दनकयोः एकस्मिन् कार्ये नियोगेऽपि आदेशेऽपि तुल्यशीलता समाना प्रकृतिर्नेत्यर्थः । अनुष्टुप् वृत्तम् ।

चन्द। तुमं तन्तिलो (ध) सेणावई रण्णो पच्चइदो, एदे धारिदा मए बइल्ला, अवलोएहि (७५)।

वीरकः। तुमं पि रण्णो पच्चइदो बलवई,(न)ता तुमं ज्जे व अवलोएहि (७६)।

चन्द। मए अवलोइदं, तुए अवलोइदं भोदि (७७)।

वीरकः। जं तुए अवलोइदं, तं रण्णा पालएण अवलोइदं (७८)।

चन्द। अरे! उण्णामेहि धुरं (७९)।

चेटस्तथा करोति।

आर्य्यकः। स्वगतम्। अपि रक्षिणो मामवलोकयन्ति? अशस्त्रश्चास्मि मन्दभाग्यः अथवा।

भीमस्यानुकरिष्यामि, बाहुः शस्त्रं भविष्यति।
वरं व्यायच्छतो मृत्युर्न गृहीतस्य बन्धने॥ १७॥

---

(७५) त्वं तन्त्रिलः सेनापतिः राज्ञः प्रत्ययितः, एतौ धारितौ मया बलीवर्दौ, अवलोकय।

(७६) त्वमपि राज्ञः प्रत्ययितोबलपतिः तस्मात् त्वमपि अवलोकय।

(७७) मयावलोकितं, त्वयावलोकितं भवति।

(७८) यत् त्वयावलोकितं, तत् राज्ञा पालकेनावलोकितम्।

(७९) अरे! उन्नामय धुरम्।

---

(ध) तन्त्रिलः राज्यचिन्तासु कुशलः तन्त्रः स्वराष्ट्रचिन्तायामावापः परचिन्तने इत्यमरः।

(न) प्रत्ययितः विश्वस्तः, बलपतिः सेनापतिः।

(१७) भीमस्येति। भीमस्येति कर्मणि षष्ठी, भीममनुकरिष्यामि,

अथवा साहसस्य तावदनवसरः।

चन्द। नाट्येन प्रवहणमारुह्यावलोकयति।

आर्यकः। शरणागतोऽस्मि।

चन्द। संस्कृतमाश्रित्य। अभयं शरणागतस्य।

आर्यक।

त्यजति किल तं जयश्रीर्जहति च मित्राणि बन्धुवर्गश्च।
भवति च सदोपहास्यो, यः खलु शरणागतं त्यजति ॥१८॥

चन्द। कधं अज्जओ गोवालदारओ! सेणवित्तासिदो विअ पत्तरहो (प) साउणिअस्स हत्थे णिवड़िदो। विचिन्त्य। एसो अणवराधो सरणाअदो अज्जचारुदत्तस्स पवहणं आरूढ़ो, पाणप्पदस्स मे अज्जसब्बिलअस्स मित्तं, अस्सदो राअणिओओ, ता किं दाणिं एत्थ जुत्तं अणुचिट्ठिदुं? अधवा, जं भोदु, तं भोदु, पढ़मं ज्जेव अभअं दिण्णं (८०)।

---

(८०) कथम् आर्यका गोपालदारकः, श्येनवित्रासित इव पत्ररथः शाकुनिकस्य हस्ते निपतितः। एषोऽनपराधः शरणागतः आर्यचारु-

---

भीमो यथा विनाशस्त्वं बाहुनैव युद्धं कृतवान् अहमपि तथा करिष्या-मीत्यर्थः, बाहुः ममेति शेषः शस्त्रं प्रहरणं भविष्यति व्यायच्छतः युध्य-मानस्य मृत्युः वरं बन्धने गृहीतस्य निक्षिप्तस्य न। अनुष्टुप् वृत्तम्।

(१८) त्यजतीति। यः शरणागतं खलु निश्चितं त्यजति जयश्रीः तं त्यजति, मित्राणि बन्धुवर्गश्च जहति तथा सदा उपहास्यश्च भवति। आर्यावृत्तम्।

(प) श्येनेन हिंस्रकपक्षिविशेषेण वित्रासितः, पत्ररथः पक्षी, शाकुनिकस्य व्याधस्य।

भीदाभअ-प्पदाणं दन्तस्स परोवआररसिअस्स ।
जइ होइ होउ णासो, तहवि अ लोए गुणोज्जेव॥१९॥(८१)

समयमवतीर्य्य । दिट्ठो अज्जो । इत्यर्द्धोक्ते । ण, अज्जआ वसन्तसेणा, तदो एसा भणादि, जुत्तं णेदं, सरिसं णेदं, जं अहं अज्ज चारुदत्तं अहिसारिदुं गच्छन्ती राअमग्गे परिभूदा (८२) ।

वीरकः । चन्दणआ ! एत्थ मह संसओ समुप्पण्णो(८३) ।

चन्द । कधं दे संसओ ? (८४)

वीरकः ।

सम्भम-घग्घर-कण्ठो तुमं पि जादोसि, जं तुए भणिदं ।
दिट्ठो मए क्खु अज्जो ! पुणो वि अज्जा वसन्तसेणेत्ति ॥२०॥

---

दत्तस्य प्रवहणमारूढ़ः प्राणप्रदस्य मे आर्य्यशर्विलकस्य मित्रम्, अन्यतो राजनियोगः । तत्किमिदानीमत्र युक्तमनुष्ठातुम् ? अथवा, यद्भवतु, तद्भवतु प्रथममेवाभयं दत्तम् ।

(८१) भीताभयप्रदानं ददतः परोपकार-रसिकस्य ।
यदि भवति भवतु नाशस्तथापि च लोके गुण एव ॥

(८२) दृष्ट आर्य्यः । न, आर्य्या वसन्तसेना । तदेषा भणति, युक्तं नेदं, सदृशं नेदं, यदहमार्य्यचारुदत्तमभिसर्त्तुं गच्छन्ती राजमार्गे परिभूता ।

(८३) चन्दनक ! अत्र मे संशयः समुत्पन्नः ।

(८४) कथं ते संशयः ?

---

(१९) लोके संसारे साधारणजनमध्ये गुणएव अनुराग एवेत्यर्थः । आर्य्यावृत्तम् ।

(२०) तदा वसन्तसेनायां दृष्टायामित्यर्थः ।

एत्थ मे अप्पच्चयो (८५)।

चन्द। अरे! को अप्पच्चओ तुहं? वअं दक्खिणत्ता अव्वत्तभासिणो, खस, (क) खसिखण्डो, खड्डट्टो, बिलअ, कणाट, कणप्पावरणअ द्रविड, चोल, चीण, वब्बर, खेर, खान, मुख, मधुघातप्रभृतीनां म्लेच्छजातीनाम् अनेकदेशभाषाभिज्ञा यथेष्टं मन्तयामो, दिट्ठो दिट्ठा वा, अज्जो अज्जआ वा, किं शब्दविचारः? स्त्रीपुन्नपुंसकव्याख्यानमप्रस्तुतम् (८६)

वीरकः। णं अहं पि पत्तोएमि, राअआणा एसा, अहं रण्णो पच्चइदो (८७)।

चन्द। ता किं अहं अपच्चइदो संवुत्तो? (८८)।

वीरकः। णं सामि णिओओ (८९)।

---

(८५) अत्र मे चर्चर-कलहस्तर्मयि जातोऽसि यत्त्वया भणितम्।
दृष्टो मया खलु आर्यः पुनरप्यार्यो वचनमेनेति ॥

अत्र मे अप्रत्ययः।

(८६) अरे कोऽप्रत्ययस्तव? वयं दाक्षिणात्या अव्यक्तभाषिणः, खसेत्यादीनि कुत्रदेशोपरिहितानि म्लेच्छजातिनामानीति बोध्यम्। दृष्टो दृष्टा वा, आर्यः आर्या वा।

(८७) ननु अहमपि प्रत्यययामि, राजाज्ञा एषा, अहं राज्ञः प्रत्ययितः।

(८८) तत् किमहमप्रत्ययितः संवृत्तः?

(८९) ननु! स्वामिनियोगः।

---

(क) खसेत्यादि म्लेच्छीभूताः क्षत्रजातयः।

चन्द। अरे! का मह चन्दणअस्स चन्दविसुद्धस्स जादी? (२)।

वीरकः। को भणउ? (३)।

चन्द। भणउ, भणउ (४)।

वीरकः। नाट्येन कश्मां ददाति।

चन्द। अरे! किं णेदं? (५)।

वीरकः। अरे! सुणाहि सुणाहि (६)।

जादी तुज्झ विसुद्धा, मादा भेरी, पिदा वि दे पडहो।
दुम्मुह! करडअ-भादा, तुमं पि सेणावई जादो (७)॥२३॥

चन्द। सक्रोधम्। अहं चन्दणओ चम्मारओ, ता पलोएहि पवहणं (८)।

वीरकः। अरे, पवहणवाहआ! पडिवत्तावेहि पवहणं, पलोइस्सं (९)

---

(२) अरे! का मम चन्दनकस्य चन्द्रविशुद्धस्य जातिः?
(३) को भणतु?
(४) भणतु, भणतु।
(५) अरे! किं न्विदम्?
(६) अरे! शृणु शृणु।
(७) जातिस्तव विशुद्धा, माता, भेरी, पितापि ते पटहः।
दुर्मुख! करटकभ्राता त्वमपि सेनापतिर्जातः॥
(८) अहं चन्दनकश्चर्मकारः, तत् प्रलोकय प्रवहणम्।
(९) अरे प्रवहणवाहक! परिवर्तय प्रवहणं प्रलोकयिष्यामि।

---

(२३) भेरी वाद्यविशेषः पटहः ढक्का, करटकोऽपि वाद्यभेदः एतेन [illegible]जातिः सूचिता।

चेटस्तथा करोति।

वीरकः। प्रवहणमारोढुमिच्छति, चन्दनकः सहसा केशेषु गृहीत्वा पातयति, पादेन ताडयति च।

वीरकः। सक्रोधमुत्थाय। अरे! अहं तुए वीसत्थो राआणत्तिं करेन्तो सहसा केसेसु गेण्हिअ पादेन ताडिदो, ता सुणु रे, अहिअरणमज्झे जइ दे चउरङ्गं ण कप्पावेमि(भ) तदो ण होमि वीरओ (१०)।

चन्द। अरे! राअउलं, अहिअरणं वा, वज्ञ, किं तुए सुणअ-सरिसेण (११) (म)।

वीरकः। तथेति निष्क्रान्तः।

चन्द। दिशोऽवलोक्य। गच्छ, रे पवहणवाहआ! गच्छ, जइ को वि पुच्छेदि तदो भणेसि चन्दणअ-वीरएहिं अवलोइदं पवहणं वच्चइ। अज्जे वसन्तसेणे! इमं च अहिण्णाणं (य) दे देमि (१२)।

---

(१०) अरे! अहं त्वया विश्वस्तो, राजाज्ञप्तिं कुर्वन्, सहसा केशेषु गृहीत्वा पादेन ताडितः। तत् शृणु रे! अधिकरणमध्ये यदि ते चतुरङ्गं न कल्पयामि, तदा न भवामि वीरकः।

(११) अरे! राजकुलम्, अधिकरणं वा व्रज, त्वया शुनकसदृशेन।

(१२) गच्छ, रे प्रवहणवाहक! गच्छ। यदि कोऽपि पृच्छति

---

(भ) अधिकरणमध्ये विचारालये चतुरङ्गं कल्पयामि अयोग्यतः शास्तिं विदधामीति भावः।

(म) शुनकसदृशेन कुक्कुरसमेन।

(य) अभिज्ञानं निदर्शनं परिचयचिह्नमित्यर्थः।

चन्द । अभअं तुह देउ हरो विण्हू बम्हा रवी अ चन्दो अ ।
हत्तूण सत्तुवक्खं सुम्भ-णिसुम्भे जधा देवी (१४) ॥२७॥

चेटः । प्रवहणेन निष्क्रान्तः ।

चन्द । नेपथ्याभिमुखमवलोक्य । अरे ! णिक्कमन्तस्स (१) मे पिअवअस्सो सव्विलओ पिट्ठदो, ज्जेव अणुलग्गो गदो । भोदु, पधानदण्डधारओ वीरओ राअ-पच्चअ-आरो विरोधिदो, ता जाव अहंपि पुत्त-भादु-परिवुदो एदं ज्जेव अणुगच्छामि (१५) । इति निष्क्रान्ताः सर्वे ।

प्रवहणविपर्य्ययो नाम षष्ठोऽङ्कः ।

(१४) अभयं तव ददातु हरो विष्णुर्ब्रह्मा रविश्च चन्द्रश्च ।
हत्वा शत्रुपक्षं शुम्भनिशुम्भौ यथा देवी ॥

(१५) अरे निष्क्रमतो मम प्रियवयस्यः शर्विलकः पृष्ठत एवानुलग्नो गतः । भवतु, प्रधानदण्डधारको वीरको राजप्रत्ययकारको विरोधितः, तद् यावदहमपि पुत्रभ्रातृपरिवृत एतमेवानुगच्छामि ।

(१) निष्क्रमतः निर्गच्छतः आर्य्यकस्येति शेषः ।

# अथ सप्तमोऽङ्कः।

---

ततः प्रविशति चारुदत्तो विदूषकश्च।

विदू। भो! पेक्ख पेक्ख पुप्फकरण्डअ-जिण्णुज्जाणस्स सस्सिरीअदां (१)।

चारु। वयस्य! एवमेतत्, तथाहि,

वणिज इव भान्ति तरवः, पण्यानीव स्थितानि कुसुमानि।
शुल्कमिव साधयन्तो मधुकरपुरुषाः प्रविचरन्ति ॥ १ ॥

विदू। भो! इमं असक्कार रमणीअं (क) सिलाअलं उवविसदु भवं (२)।

चारु। उपविश्य। वयस्य! चिरयति वर्द्धमानकः।

विदू। भणिदो मए वड्ढमाणअ, वसन्तसेणिअं गेण्हिअ लहुं लहुं आअच्छ त्ति (३)।

(१) भोः पश्य, पश्य, पुष्पकरण्डक-जीर्णोद्यानस्य सश्रीकताम्।

(२) भो इदमसंस्काररमणीयं शिलातलम् उपविशतु भवान्।

(३) भणितो मया वर्द्धमानकः, वसन्तसेनां गृहीत्वा लघु लघु आगच्छेति।

---

(१) वणिज इति। तरवः वणिज इव भान्ति शोभन्ते, कुसुमानि पण्यानि विक्रेतव्यानीव स्थितानि, तथा मधुकरा एव पुरुषाः शुल्कं राजकरं साधयन्त इव आददाना इव प्रविचरन्ति इतस्ततः विचरन्ति, उत्प्रेक्षालङ्कारः। आर्य्यावृत्तम्।

आह । ननु किं चिरयति ?

किं यात्यस्य पुरः शनैः प्रवहणं ? तस्यान्तरं मार्गते ?
भग्नेऽक्षे परिवर्त्तनं प्रकुरुते ? छिन्नोऽथ वा प्रग्रहः ? ।
वर्त्मान्तोज्झित दारु-वारित-गतिर्मार्गान्तरं याचते ?
स्वैरं प्रेरितगोयुगः, किमथ वा स्वच्छन्दमागच्छति ? ॥२॥

प्रविश्य गुप्तार्य्यकप्रवहणस्थः चेटः । जाध, गोणा ! जाध (४) ।

आर्यकः । स्वगतम् ।

नरपतिपुरुषाणां दर्शनाद्गीतभीतः
सनिगड़चरणत्वात् सावशेषापसारः ।
अविदितमधिरूढो यामि साधोस्तु याने
परभृत इव नीड़े रक्षितो वायसीभिः ॥ ३ ॥

(४) यात गावौ ! यातम् ।

(२) किमिति । अस्य वर्द्धमानस्य पुरः अग्रे प्रवहणं आयातमिति शेषः शनैः मन्दं मन्दं किं याति अतस्तस्य अन्तरं अवकाशं मार्गते प्रतीक्षते इत्यर्थः अक्षे यानावयवविशेषे भग्ने सति परिवर्त्तनं तस्य विनिमयं प्रकुरुते ? अथवा प्रग्रहः रश्मिः छिन्नः ? वर्त्मनः मार्गस्य अन्ते मध्यभागे उज्झितेन परित्यक्तेन केनचिदिति शेषः दारुणा वारिता रुद्धा गतिर्यस्य तथाभूतः सन् मार्गान्तरं अन्यं पन्थानं याचते अन्वेष्यते ? इत्यर्थः अथवा स्वैरं मन्दं मन्दं प्रेरितं चालितं गोयुगं येन तादृशः सन् स्वच्छन्दं स्वेच्छया किं आगच्छति ? वर्त्मान्तोज्झित इत्यत्र कर्मान्तोज्झित इति कर्मान्तोत्थित इति च पाठान्तरं कर्मान्तो राजादीनां नियोगविशेष इति पृथ्वीधरः । पाठं त्वविशुद्धीकृतं [illegible] ।

अहो ! नगरात् सुदूरमपक्रान्तोऽस्मि, तत् किमस्मात् प्रवहणादवतीर्य्य वृक्षवाटिकागहनं प्रविशामि ? उताहो, प्रवहणस्वामिनं पश्यामि ? अथ वा, कृतं वृक्षवाटिकागहनेन, अभ्युपपन्नवत्सलः (ख) खलु तत्रभवानार्य्य-चारुदत्तः श्रूयते, तत्प्रत्यक्षीकृत्य गच्छामि ।

स तावदस्माद्व्यसनार्णवोत्थितं
निरीक्ष्य साधुः समुपैति निर्वृतिम् ।
शरीरमेतद्गतमीदृशीं दशां
धृतं मया तस्य महात्मनो गुणैः ॥ ४ ॥

अतिभीत इत्यर्थः तथा अनिगडचरणत्वात् निगडबद्धपादत्वात् सावशेषः किञ्चिदवशिष्टः अपसारः पलायनं यस्य तादृशः यावत् निगडं न मोटयामि तावत् मम पलायनमसम्पूर्णमिति भावः । अहं वायसीभिः काकीभिः नीडे कुलाये कुलायो नीडमस्त्रियामित्यमरः रक्षितः परभृतः कोकिल इव अविदितं अज्ञातं यथा तथा साधोः चारुदत्तस्य याने अधिरूढः सन् यामि गच्छामि । उपमालङ्कारः मालिनीवृत्तं तदुक्तं न नमययुतेयं मालिनी भोगिलोकैरिति ।

(ख) अभ्युपपन्नवत्सलः अभ्युपपन्नेषु विपन्नेषु वत्सलः स्नेहवा-नित्यर्थः ।

(४) स इति । स तावत् साधुः चारुदत्तः अस्मात् यतः स अभ्युप-पन्नवत्सलः अत इत्यर्थः व्यसनार्णवोत्थितं विपत्सागरादुत्तीर्णं मामिति शेषः निर्वृतिं चित्ततोषं समुपैति प्राप्नोतीत्यर्थः । ईदृशीं दशां अति-दुरवस्थामित्यर्थः गतं प्राप्तं एतत् शरीरं तस्य महात्मनः गुणैः धृतं रक्षितं मयेति शेषः । स महात्मा एव मां रक्षिष्यतीति भावः । वंशस्थविलं वृत्तम् ।

चेटः। इमं तं उज्जाणं, जाव उवसप्पामि। उपसृत्य। अज्जमित्तेअ ! (५)।

विदू। भो ! पिअं दे णिवेदेमि, वड्ढमाणओ मन्तेदि, आगदाए वसन्तसेणाए होदव्वं (६)।

चारु। प्रियं नः प्रियम्।

विदू। दासीए उत्ता ! किं चिरइदो सि ? (७)।

चेटः। अज्ज मित्तेअ ! मा कुप्प, जाणत्थलके विस्सुमलिदे त्ति कदुअ गदागदिं कलेन्ते चिलइदेम्हि (८)।

चारु। वर्द्धमानक ! परिवर्त्तय प्रवहणम्। सखे मैत्रेय ! अवतारय वसन्तसेनाम्।

विदू। किं णिअड़ेण बद्धा से गोड़ा ? जेण सअं ण ओद्‌रेदि ?। उत्थाय प्रवहणमवलोक्य। भो ! ण वसन्तसेणा, (ग) वसन्तसेणो क्खु एसो (९)।

(५) इदं तदुद्यानं यावदुपसर्पामि। आर्य्य मैत्रेय !

(६) प्रियं ते निवेदयामि, वर्द्धमानको मन्त्रयति, आगतया वसन्तसेनया भवितव्यम्।

(७) दास्याःपुत्र ! किं चिरायितोऽसि ?

(८) आर्य्य मैत्रेय ! मा कुप्य, यानास्तरणं विस्मृतमिति ज्ञात्वा, गतागतिं कुर्वन् चिरायितोऽस्मि।

(९) किं निगड़ेन बद्धावस्याः पादौ ? येन स्वयं नावतरति ? भो ! न वसन्तसेना, वसन्तसेनः खल्वेषः।

---

(ग) वसन्तसेनः वसन्तः सेना यस्येति सः कामदेव इव रूपवान् इति ध्वन्यते।

चारु। वयस्य ! अलं परिहासेन, न कालमपेक्षते स्नेहः। अथ वा स्वयमेवावतारयामि। इत्युत्तिष्ठति।

आर्यकः। दृष्ट्वा। अये ! अयमेव प्रवहणस्वामी। न केवलं श्रुतिरमणीयो, दृष्टिरमणीयोऽपि, हन्त, रक्षितोऽस्मि।

चारु। प्रवहणमधिरुह्य दृष्ट्वा च। अये ! तत्कोऽयम् ?

करिकर समबाहुः सिंहपीनोन्नतांसः,
पृथुतर समवक्षास्ताम्रलोलायताक्षः।
कथमिदमसमानं प्राप्त एवंविधो यो
वहति निगडमेकं पादलग्नं महात्मा ॥ ५ ॥

ततः को भवान् ?

आर्यकः। शरणागतो गोपालप्रकृतिरार्यकोऽस्मि (ख)।

चारु। किं घोषादानीय योऽसौ राज्ञा पालकेन बद्धः ?।

आर्यकः। अथ किम्।

---

(५) करीति। यः महात्मा करिकरस्य हस्तिशुण्डस्य समौ बाहू यस्य सः, सिंहस्येव पीनौ स्थूलौ उन्नतौ अंसौ स्कन्धौ यस्य तादृशः, पृथुतरम् अतिविशालं समं समानं योग्यमित्यर्थः वक्षः यस्य तथाभूतः, तथा ताम्रे रक्ते लोले चपले आयते दीर्घे अक्षिणी यस्य तथोक्तः, स एवंविधः महापुरुषलक्षणाक्रान्तः इत्यर्थः कथम् असमानम् अस-दृशम् अयुक्तं पादलग्नम् इदम् एकं निगडं वहति। अत्र निगडयुग्म-मिति पाठो न युक्तः एकचरणलग्ननिगड इत्यनेन पादाग्रस्थितनिगडैक-पाशकर्षी इत्यनेन च पूर्वोक्तेन विरोधात् अत्र निगडमेकमिति पाठो युज्यते इति ध्येयम्। मालिनीवृत्तम्।

(ख) गोपालः प्रकृतिः मूलकारणं जनक इति यावत् यस्य सः गोपवंशसम्भूत इत्यर्थः प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे इत्यमरः।

चारु। विधिनैवोपनीतस्त्वं चक्षुर्विषयमागतः।

अपि प्राणानहं जह्यां, न तु त्वां शरणागतम्॥६॥

आर्यको हर्षं नाटयति।

चारु। वर्द्धमानक! चरणान्निगड़मपनय।

चेटः। जं अज्जो आणवेदि। तथा कृत्वा। अज्ज! अव-णीदाइं णिअलाइं (१०)।

आर्यकः। स्नेहमयान्यन्यानि (ङ) दृढ़तराणि दत्तानि।

विट्। संलच्छेहि णिअडाइं, एसो वि मुक्को, सम्पदं अम्हे वच्चिस्सामो (११)।

चारु। धिक् शान्तम्।

आर्यकः। सखे चारुदत्त, अहमपि प्रणयेनेदं प्रवहण-मारूढ़ः (च) तत् क्षन्तव्यम।

चारु। अलङ्कृतोऽस्मि स्वयङ्ग्राहप्रणयेन भवता।

आर्यकः। अभ्यनुज्ञातो भवता गन्तुमिच्छामि।

---

(१०) यदार्य्य आज्ञापयति। आर्य्य! अपनीतानि निगड़ानि।

(११) संलक्षस्व निगड़ानि, एषोऽपि मुक्तः, साम्प्रतं वयं व्रजि-ष्यामः।

---

(६) विधिनेति। त्वं विधिना दैवेन एव उपनीतः उपस्थापितः सन् चक्षुर्विषयं ममेति शेषः। आगतः दृष्टोऽसीत्यर्थः। जह्यां त्यजेयम्, अतुट् पहत्तम्।

(ङ) स्नेहमयानि अन्यानि आलिङ्गनादीनि।

(च) प्रणयेन इदं प्रवहणमिति प्रणयेन साधुजातित्वेन आत्मवत् ज्ञानेन इति भावः।

चारु। गम्यताम्।

आर्यकः। भवत्ववतरामि।

चारु। सखे! नावतरितव्यम्। प्रत्यग्रापनीतसंयमनस्य भवतोऽलघुसंचारा गतिः। सुलभपुरुषसञ्चारेऽस्मिन् (क) प्रदेशे प्रवहणं विश्वासमुत्पादयति, तत्प्रवहणेनैव गम्यताम्।

आर्यकः। यथाह भवान्।

चारु। क्षेमेण व्रज बान्धवान्,

आर्यकः। ननु मया लब्धो भवान् बान्धवः,

चारु। स्मर्त्तव्योऽस्मि कथान्तरेषु भवता,

आर्यकः। स्वात्मापि विस्मर्य्यते।

चारु। त्वां रक्षन्तु पथि प्रयान्तममराः,

आर्यकः। संरक्षितोऽहं त्वया,

चारु। स्वैर्भाग्यैः परिरक्षितोऽसि,

आर्यकः। ननु हे! तत्रापि हेतुर्भवान्॥ ७॥

चारु। यतोद्यते पालके महती रक्षा वर्त्तते, तत् शीघ्रमपक्रामतु भवान्।

आर्यकः। एवं पुनर्दर्शनाय। इति निष्क्रान्तः।

(क) प्रत्ययं गतम् अपनीतं संयमनं बन्धनं यस्य निगडादिबन्धनस्य इत्यर्थः अलघुः महान् संचारः संरोधः यस्याः सा बहुदिनकारावासात् निगडबन्धनाच्च द्रुतगमने अक्षमत्वादिति भावः, सुलभपुरुषसञ्चारे सततपुरुषगमनागमने अस्मिन् प्रदेशे यदि गतेः पुनःपुनः प्रतिरोधः स्यात् तदा गच्छतां जनानां संशयो भवेदिति भावः।

चारु । कृत्वैवं मनुजपतेर्महद्व्यलीकं

स्थातुं हि क्षणमपि न प्रशस्तमस्मिन् ।

मैत्रेय ! क्षिप निगड़ं पुराणकूपे,

पश्येयुः क्षितिपतयो हि चारदृष्ट्या ॥ ८ ॥

वामाक्षिस्पन्दनं सूचयित्वा । सखे मैत्रेय ! वसन्तसेना दर्शनोत्सुकोऽयं जनः । पश्य,

अपश्यतोऽद्य तां कान्तां वामं स्फुरति लोचनम् ।

अकारण-परित्रस्तं हृदयं व्यथते मम ॥ ९ ॥

तदेहि, गच्छावः । परिक्रम्य । कथमभिमुखमनाभ्युदयिकं श्रमणकदर्शनम् (ज) । विचार्य । प्रविशत्वयमनेन पथा, वयमप्यनेनैव पथा गच्छामः । इति निष्क्रान्ताः सर्वे ।

आर्य्यकापहरणं नाम सप्तमोऽङ्कः ।

(८) कृत्वेति । हे मैत्रेय ! एवं प्रकारेण मनुजपतेः राज्ञः पालकस्य महत् व्यलीकम् अप्रियम् आर्य्यकमोचनरूपं कृत्वा व्यलीकन्त्वप्रियेऽकृते इत्यमरः अस्मिन् प्रदेशे क्षणमपि स्थातुं न प्रशस्तं युक्तमित्यर्थः, अतः पुराणकूपे निगड़ं क्षिप हि यतः क्षितिपतयः चारदृष्ट्या चाररूपचक्षुषा पश्येयुः । चारैः पश्यन्ति राजान इति नीतिशास्त्रात् । अत्र प्रहर्षिणी वृत्तम् ।

(९) अपश्यत इति । सर्वं सुगमम् ।

(ज) अनाभ्युदयिकम् अशुभजनकम् श्रमणकस्य बौद्ध सन्न्यासिनः दर्शनं श्रमणो यतिभेदे ना निन्द्यजीविनि तु त्रिषु इति मेदिनी । तद्दर्शनस्य दुर्निमित्तसूचकतया शास्त्रसिद्धत्वादिति भावः ।

# अष्टमोऽङ्कः।

ततः प्रविशत्यार्द्रचीवरहस्तो भिक्षुः।

भिक्षुः। अज्जा! कलेध धम्मसञ्चअं।

सञ्जमध णिअपोटं णिच्च जग्गेध झाण-पडहेण।
विसमा इन्दिअ-चोला हलन्ति चिल-सञ्चिदं धम्मं ॥१॥

अविअ। अणिच्चदाए पेक्खिअ शलणं दाव धम्माणं शलणम्हि (क)।

पञ्चजण जेण मालिदा, इत्थिअ मालिअ, गाम लक्खिदे।
अबल अ चण्डाल मालिदे, अवशं शे णल शग्ग गाहदि ॥२॥

(१) संयच्छतेति। निजोदरं निजं जठरं संयच्छत सङ्कोचयत केवलं जठराग्नाय समयं मा क्षिपत इति भावः। ध्यानपटहेन समाधिरूपढक्कया नित्यं जाग्रत सततं समाधिं कुरुत इत्यर्थः। विषमा दुरन्ता इन्द्रियचौराः इन्द्रियाणि चक्षुरादीन्येव चौराः चिरसञ्चितं धर्मं हरन्ति अतः इन्द्रियनिग्रहे यत्नं कुरुत इति भावः। आर्य्यागीतम्।

(क) अनित्यतयेति। अनित्यतया प्रेक्ष्य दृष्ट्वा विविच्येत्यर्थः संसारमिति शेषः धर्माणां शरणम् आश्रयः अस्मि धर्ममेव शरणं गतोऽस्मीत्यर्थः।

२ पञ्चजना इति। येन पञ्चजनाः इन्द्रियाणि तेषामपि जन्यत्वात् जना इति व्यपदिश्यते मारिताः विनाशिताः वशीकृता इति भावः, स्त्रियम् अविद्याम् अज्ञानमिति यावत् मारयित्वा विनाश्य ग्रामः आत्मा रक्षितः अविद्यादोषादिति भावः, तस्मात् अबलः सुतरां बलहीनः

**शिल मुण्डिदे, तुण्ड मुण्डिदे, चित्तं ण मुण्डिदे, कीश मुण्डिदे ?**
**जाह उण चित्त मुण्डिदे, शाहु शुट्ठु शिलं ताह मुण्डिदे(१) ॥३**

---

(१) आर्याः ! शृणुत धर्मसञ्चयम् ।
संयच्छत निजोदरं नित्यं जाग्रत ध्यानपटहेन ।
विषमा इन्द्रियचौरा हरन्ति चिरसञ्चितं धर्मम् ॥
अपि च । अनित्यतया प्रेक्ष्य केवलं तावद्धर्माणां शरणमस्मि ।
पञ्चजना येन मारिताः स्त्रियं मारयित्वा ग्रामो रक्षितः ।
अबलश्च चाण्डालो मारितोऽवश्यं स नरः स्वर्गं गाहते ॥
शिरो मुण्डितं तुण्डं मुण्डितं चित्तं न मुण्डितं किं मुण्डितम् ?
यस्य पुनश्च चित्तं मुण्डितं साधु सुष्ठु शिरस्तस्य मुण्डितम् ॥

इन्द्रियाविद्यादिनाशादिति भावः, चाण्डालः शरीरस्थपाप पुरुषश्च मारितः निहतः स जनः अवश्यं स्वर्गं गाहते गच्छति । अत्र जना विद्या ग्रामचाण्डालशब्दा लाक्षणिकार्थबोधका इति बोद्धव्यम् । अत्र वैतालीयं वृत्तम् । "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥" इति तल्लक्षणात् ।

(२) शिर इति । यस्य जनस्य शिरः मस्तकं मुण्डितं केशशून्यं कृतं तथा तुण्डं मुखं मुण्डितं श्मश्रुशून्यं कृतं नापितेनेति शेषः किन्तु चित्तं न मुण्डितं न परिष्कृतमित्यर्थः, तस्य किं मुण्डितं ? न किमपीत्यर्थः, यस्य पुनः चित्तं साधु यथा तथा मुण्डितं परिष्कृतं, तस्य शिरः सुष्ठु शोभनं यथा तथा मुण्डितं शुद्धचित्तस्य दण्डिनः केशश्मश्रुमुण्डनं सार्थकमिति भावः, उक्तञ्च मनुना, "कॢप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान् । विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन्" इति । वैतालीयं छन्दः ।

# अष्टमोऽङ्कः ।

ततः प्रविशत्यार्द्रचीवरहस्तो भिक्षुः ।

भिक्षुः । अज्ञा ! कलेध धम्मशंचअं ।

शंजमध णिअपोटं णिच्चं जग्गेध झाण-पडहेण ।
विशमा इन्दिअ-चोला हलन्ति चिल-शंचिदं धम्मं ॥१॥

अविअ । अणिच्चदाए पेक्खिअ शलण दाव धम्माणं शलणम्हि (क) ।

पञ्चजण जेण मालिदा, इत्थिअ मालिअ, गाम लक्खिदे ।
अबल अ चण्डाल मालिदे, अवशं शे णल शग्ग गाहदि ॥२॥

(१) संयच्छतेति । निजोदरं निजं जठरं संयच्छत सङ्कोचयत केवलं जठरार्थाय सञ्चयं मा क्षिपत इति भावः । ध्यानपटहेन समाधिरूपढक्कया नित्यं जाग्रत सततं समाधिं कुरुत इत्यर्थः विषमा दुरन्ता इन्द्रियचौराः इन्द्रियाणि चक्षुरादीन्येव चौराः चिरसञ्चितं धर्मं हरन्ति अतः इन्द्रियनिग्रहे यत्नं कुरुत इति भावः । आर्य्यावृत्तम् ।

(क) अनित्यतयेति । अनित्यतया प्रेक्ष्य दृष्ट्वा विविच्येत्यर्थः संसारमिति शेषः धर्माणां शरणम् आश्रयः अस्मि धर्ममेव शरणं गतोऽस्मीत्यर्थः ।

२ पञ्चजना इति । येन पञ्चजनाः इन्द्रियाणि तेषामपि जन्यत्वात् जना इति व्यपदिश्यन्ते मारिताः विनाशिताः वशीकृता इति भावः, स्त्रियम् अविद्याम् अज्ञानमिति यावत् मारयित्वा विनाश्य ग्रामः आत्मा रक्षितः अविद्यादोषादिति भावः, तस्मात् अवशः सुतरां बलहीनः

शिल मुण्डिदे, तुण्ड मुण्डिदे, चित्तं ण मुण्डिदे, कीश मुण्डिदे ?
जाह उणश्चित्त मुण्डिदे, शाहु शुट्ठु शिलं ताहमुण्डिदे(१) ॥२

---

(१) भ्रातः ! कुरुत धर्मसञ्चयम्।
संयच्छत निजोदरं नित्यं जाग्रत ध्यानपटहेन।
विषमा इन्द्रियचौरा हरन्ति चिरसञ्चितं धर्मम् ॥
अपिच। अनित्यतया प्रेक्ष्य केवलं तावद्धर्माणां शरणमसि।
पञ्चजना येन मारिताः स्त्रियं मारयित्वा ग्रामो रक्षितः।
अबलश्च चाण्डालो मारितोऽवश्यं स नरः स्वर्गं गाहते ॥
शिरो मुण्डितं तुण्डं मुण्डितं चित्तं न मुण्डितं किं मुण्डितम् ?
यस्य पुनश्च चित्तं मुण्डितं साधु सुष्ठु शिरस्तस्य मुण्डितम् ॥

---

इन्द्रियाविद्यादिनाशादिति भावः, चाण्डालः शरीरस्थपाप पुरुषश्च मारितः निहतः स जनः अवश्यं स्वर्गं गाहते गच्छति। अत्र जना विद्या ग्रामचाण्डालशब्दा लाक्षणिकार्थबोधका इति बोद्धव्यम्। अत्र वैतालीयं वृत्तम्। "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥" इति तल्लक्षणात्।

(२) शिर इति। यस्य जनस्य शिरः मस्तकं मुण्डितं केशशून्यं कृतं तथा तुण्डं मुखं मुण्डितं श्मश्रुशून्यं कृतं नापितेनेति शेषः किन्तु चित्तं न मुण्डितं न परिष्कृतमित्यर्थः, तस्य किं मुण्डितं ? न किमपीत्यर्थः, यस्य पुनः चित्तं साधु यथा तथा मुण्डितं परिष्कृतं, तस्य शिरः सुष्ठु शोभनं यथा तथा मुण्डितं अशुद्धचित्तस्य दण्डिनः केशमुण्डनं व्यर्थमिति भावः, उक्तञ्च मनुना, "कॢप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान्। विचरेन्नियतो नित्यं सर्वभूतान्यपीडयन्" इति। वैतालीयं छन्दः।

गिह्णिद-कआओदए एशे चीवले, जाव एदं लद्रिअ-शालकाह-केलके उज्जाणे पविशिअ पोक्खलिणीए पक्खालिअ लहुं लहुं अवक्कमिश्शं (२)

परिक्रम्य तथा करोति। नेपथ्ये। चिट्ठ, ले दुट्टशमणका! चिट्ठ (३)।

भिक्षुः। दृष्ट्वा सभयम्। ही अविद ही माणहे! एशे शे लाअशालशण्ठाणे शमागदे, एक्केण भिक्खुणा अवलाहे किदे, अण्णं पि जहिं जहिं भिक्खुं पेक्खदि, तहिं तहिं गोणं व्व णाशं विन्धिअ ओवाहेदि, ता कहिं अशलणे शलणं गमिश्शं? अध वा भट्टालके ज्जेव बुद्धे मे शलणे (४) (ख)।

प्रविश्य खड्गेन विटेन सह शकारः। चिट्ठ, ले दुट्ट शम-

(२) गृहीतकषायोदकमेतच्चीवरं, यावदेतद्राष्ट्रियश्यालकस्य उद्याने प्रविश्य पुष्करिण्यां प्रक्षाल्य लघु लघु अपक्रमिष्यामि।

(३) तिष्ठ, रे दुष्टश्रमणक! तिष्ठ।

(४) भो आश्चर्यम्! एष स राजश्यालसंस्थानक आगतः। एकेन भिक्षुणा अपराधे कृते, अन्यमपि यत्र यत्र भिक्षुं पश्यति, तत्र तत्र गामिव नासिकां विद्धा अपवाहयति, तस्मात् कुत्र अशरणः शरणं गमिष्यामि। अथवा भट्टारक एव बुद्धो मे शरणम्।

(ख) अपवाहयति ताडयति, भट्टारकः प्रभुः देवो वा। शरणं रक्षिता शरणं गृहरक्षित्रोरित्यमरः।

णआ ! चिट्ठ । आवाणअ-मज्झ-पविट्ठस्स विअ (ग) लत्त-मूलअस्स शीशं दे मोड़इस्सं (५) । इति ताड़यति ।

विटः । काणेलीमातः ! न युक्तं निर्वेदधृतकषायं भिक्षुं ताड़यितुम्, तत्किमनेन । इदन्तावत् सुखोपगम्यमुद्यानं पश्यतु भवान् ।

अशरण-शरण प्रमोदभूतै-
र्वनतरुभिः क्रियमाण-चारुकर्म्म ।
हृदयमिव दुरात्मनामगुप्तं
नवमिव राज्यमनिर्जितोपभोग्यम् ॥४॥

---

(५) तिष्ठ, रे दुष्ट श्रमणक ! तिष्ठ । आपानकमध्य प्रविष्टस्येव रक्तमूलकस्य शीर्षं ते भङ्क्ष्यामि ।

---

(ग) आपानकमध्यप्रविष्टस्येव आपानकं पानगोष्ठी तन्मध्यस्थितस्य इत्यर्थः निर्वेदधृतकषायं निर्वेदेन वैराग्येण धृतं कषायं कषायेण रक्तं वस्त्रं येन तम् ।

(४) अशरणेति । अशरणानां गृहशून्यानां शरणानि आश्रयाः गृहशून्या हि तरुतलमाश्रयन्तीति भावः प्रमोदभूता आनन्दस्वरूपाः आश्रयदानेनेति भावः तैः वनतरुभिः क्रियमाणं चारु मनोहरं कर्म यत्र तत् दुरात्मनां हृदयमिव अगुप्तं अरक्षितं यथेच्छविहारयोग्यमित्यर्थः तथा नवं नवोपार्जितं राज्यमिव अनिर्जितं अशासितं नवोपार्जित-राज्ये सम्यक्शासननियमस्यास्थितत्वात् विशृङ्खलतया इति भावः अथच उपभोग्यम् । इदन्तु उद्यानं ताहशरक्षिविरहेण विशृङ्खलतया च साधारणमिवेति भावः ।

भिक्षुः। आअदं, पशीददु उवाशके (६) (घ)।

शकारः। भावे! पेक्ख पेक्ख, आक्कोशदि(ङ) मं (७)।

विटः। किं ब्रवीति?

शकारः। उवाशके त्ति मं भणादि। किं हग्गे णाविदे? (८)।

विटः। बुद्धोपासक इति भवन्तं स्तौति।

शकारः। शुणु, शमणका! शुणु (९)।

भिक्षुः। तुमं धण्णे, तुमं पुण्णे (१०)।

शकारः। भावे! धण्णे पुण्णे त्ति मं भणादि। किं हग्गे शलावके, कोष्ठके कोम्भकले वा? (११)।

विटः। काणेलीमातः! ननु धन्यस्त्वं, पुण्यस्त्वमिति भवन्तं स्तौति।

शकारः। भावे! ता कीश एशे इध आगदे? (१२)।

---

(६) आगतम्, प्रसीदतु उपासकः।

(७) विद्वन्! पश्य, पश्य, आक्रोशति माम्।

(८) उपासक इति मां भणति, किमहं नापितः?

(९) शृणु श्रमणक! शृणु।

(१०) त्वं धन्यस्त्वं पुण्यः।

(११) धन्यः पुण्य इति मां भणति, किमहं श्रावकः, कोष्ठकः कुम्भकारो वा?

(१२) विद्वन्! तस्मात् कथमेष इहागतः?

---

(घ) उपासकः सेवकः प्रसीदतु कोपं मा करोतु इत्यर्थः।

(ङ) आक्रोशति कटुवाक्येन तिरस्करोतीत्यर्थः।

भिक्षुः। इट चीवलं पक्खालिदुं (१३)।

शकारः। अले दुट्ट श्रमणक! एशे मम बहिणीवदिणा शव्वुज्जाणाण पवले पुप्फकलण्डुज्जाणे दिण्णे, जहिं दाव शुणहका शिआला पाणिअं पिअन्ति, हग्गे वि पवलपुलिशे मणुश्शके ण ह्लाआमि। तहिं तुमं पुक्खलणीए पुलाण-कुलुत्थ जूशशवलाइं दुश्शगन्धिआइं चीवलाइं पक्खालेशि। ता तुमं एक्कपहालिअं (च) कलेमि(१४)।

विटः। काणेलीमातः! तथा तर्कयामि यथा अनेनाचिरप्रव्रजितेन (छ) भवितव्यम्।

शकारः। कधं, भावे जाणादि? (१५)।

विटः। किमत्र ज्ञेयम्, पश्य,

---

(१३) इदं चीवरकं प्रक्षालयितुम्।

(१४) अरे, दुष्ट श्रवणक! एतन्मम भगिनीपतिना सर्वोद्यानानां प्रवरं पुष्पकरण्डोद्यानं दत्तं, यत्र तावत् शुनकाः शृगालाः पानीयं पिबन्ति, अहमपि प्रवरपुरुषो मनुष्यको न स्नामि। तत्र त्वं पुष्करिण्यां पुराणकुलत्थयूषशबलानि दुःसगन्धीनि चीवराणि प्रक्षालयसि। तत् त्वामेकप्रहारिकं करोमि।

(१५) कथं विद्वान् जानाति?

---

(च) कुलत्थः कलायभेदः तस्य यूषवत् शबलानि विचित्राणि। एकप्रहारिकं एकप्रहारेण हतम्।

(छ) अचिरप्रव्रजितेन अचिरं अल्पदिनं प्रव्रजितः प्रव्रज्याश्रमं गतः तेन।

अद्यार्य्यस्य तथैव केशविरहाद्गौरी ललाटच्छविः,
कालस्याल्पतया च चीवरकृतः स्कन्धे न जातः किणः ।
नाभ्यस्ता च कषायवस्त्ररचना दूरं निगूढान्तरो
वस्त्रान्तश्च पटोच्छ्रयात्प्रशिथिलं स्कन्धे न सन्तिष्ठते ॥ ५ ॥

भिक्षुः । उवासके ! एव्वं अचिल-पव्वजिदे हग्गे (१६) ।

शकारः । ता कीश तुमं जातमेत्तकज्जे व पव्वजिदे ? (१७)

इति ताडयति ।

भिक्षुः । णमो बुद्धश्श (१८) ।

विटः । किमनेन ताड़ितेन तपस्विना ? मुच्यतां, गच्छतु ।

(१६) उपासक ! एवमचिरप्रव्रजितोऽहम् ।
(१७) तत् किमर्थं त्वं जातमात्र एव न प्रव्रजितः ?
(१८) नमो बुद्धस्य ।

---

(५) अद्येति । अद्य इदानीमपीत्यर्थः आर्य्यस्य मान्यस्य अस्य श्रमणस्य ललाटच्छविः ललाटकान्तिः केशविरहात् अचिरकेशमुण्डना-दित्यर्थः तथैव गार्हस्थ्यावस्थायामिव गौरी गौरवर्णा उज्ज्वला इत्यर्थः कालस्य अल्पतया अचिरप्रव्रजितत्वेनेत्यर्थः स्कन्धे चीवरकृतः चीवरेण सततस्कन्धावसक्तेन वस्त्रविशेषेण भिक्षाभृक्षिनेति भाषा । जनितः किणः वणदूषिकाविशेषः न जातः कषायवस्त्ररचनाच कषायवस्त्रव्यवहारश्च न अभ्यस्ता वाभ्यासं गता, तथा दूरं अत्यर्थं निगूढं आच्छादितं अन्तरं शरीरमध्यभागो येन तादृशः वस्त्रान्तश्च वसनावयवश्च पटोच्छ्रयात् वसनदैर्घ्यात् प्रशिथिलं यथा तथा स्कन्धे न सन्तिष्ठते न सम्यक् स्थितिं प्राप्नोतीत्यर्थः अनभ्यासादिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

शकारः। अले! चिट्ठ दाव, जाव सम्पधालेमि(१९)(ज)

विटः। केन सार्द्धम्?

शकारः। अत्तणो हड़क्केण (२०)।

विटः। हन्त, न गतः।

शकारः। पुत्तका हड़क्का! भट्टके पुत्तके! एशे शमणके अवि णाम किं गच्छदु, किं चिट्ठदु? स्वगतम्। णावि गच्छदु, णावि चिट्ठदु। भावे! शम्पधालिदं मए हड़क्केण शह, एशे मह हड़क्के भणादि(२१)।

विटः। किं ब्रवीति?

शकारः। मावि गच्छदु, मावि चिट्ठदु, मावि ऊशशदु, मावि णीशशदु, इधज्जेव भत्ति पड़िअ मलेदु(२२)।

भिक्षुः। णमो बुद्धश्श, शलणागदम्हि(२३)।

विटः। गच्छतु।

---

(१९) अरे! तिष्ठ तावत्, यावत् सम्प्रधारयामि।

(२०) आत्मनोहृदयेन।

(२१) पुत्रक हृदय! भट्टारक पुत्रक! एष श्रमणकः अपि नाम किं गच्छतु, किं तिष्ठतु? नापि उच्छ्वसितु, नापि तिष्ठतु। विहनू [illegible] सम्प्रधारितं मया हृदयेन सह, एतन्मम हृदयं भणति।

(२२) मापि गच्छतु, मापि तिष्ठतु, मापि गच्छतु, मापि निश्वसितु, इहैव झटिति पतित्वा म्रियताम्।

(२३) नमो बुद्धस्य, शरणागतोऽस्मि।

---

(ज) सम्प्रधारयामि अवधारयामि विवेचयामीत्यर्थः।

शकारः। णं समएण (२४) (झ)।

विटः। कीदृशः समयः?

शकारः। तधा कद्दमं फेलदु, जधा पाणिअं पङ्काइलं ण होदि। अधवा, पाणिअं पुञ्जीकदुअ कद्दमं फेलदु(२५)।

विटः। अहो! मूर्खता।

विपर्य्यस्त मनश्चेष्टैः शिलाशकल·वर्ष्मभिः।
मांसवृक्षैरियं मूर्खैर्भाराक्रान्ता वसुन्धरा ॥ ६ ॥

भिक्षुः। नट्येनाक्रोशति।

शकारः। किं भणादि? (२६)।

विटः। स्तौति भवन्तम्।

शकारः। शुणु शुणु, पुणो वि शुणु (२७)।

तथा कृत्वा निष्क्रान्तो भिक्षुः।

---

(२४) ननु समयेन।

(२५) तथा कर्द्दमं क्षिपतु, यथा पानीयं पङ्काविलं न भवति। अथवा, पानीयं पुञ्जीकृत्य कर्द्दमं क्षिपतु।

(२६) किं भणति?

(२७) स्तुणु स्तुणु, पुनरपि स्तुणु।

---

(झ) समयेन नियमेन।

(६) विपर्य्यस्तेति। विपर्य्यस्ता विपरीता मनसः चेष्टा व्यापारः येषां तैः, शिलाशकलानि प्रस्तरखण्डा एव वर्ष्माणि शरीराणि येषां तैः शरीरं वर्ष्मविग्रह इत्यमरः। तथा मांसवृक्षैः मांसस्य वृक्षाः मांस-प्रवर्धन तरवः तैः मांसपूर्णैः अतिस्थूलकायैरिति भावः मूर्खैः वसुन्धरा भाराक्रान्ता पृथ्वी इत्यर्थः।

विटः। काणेलीमातः ! पश्योद्यानस्य शोभाम्।

अमी हि वृक्षाः फलपुष्पशोभिताः,

कठोर-निष्पन्द-लतोपवेष्टिताः,

नृपाज्ञया रक्षिजनेन पालिता

नराः सदारा इव यान्ति निर्वृतिम्॥ ७॥

शकारः। सुट्ठु भावे भणादि (२८)।

बहुकुसुम-विचित्तिदा अ भूमी,

कुशुम-भलेण विणामिदा अ लुक्खा।

दुम शिहल-लदा अ लम्बमाणा,

पणशफला विअ वाणला ललन्ति (२९)॥ ८॥

विटः। काणेलीमातः ! इदं शिलातलमध्यास्यताम्।

---

(२८) सुष्ठु भावो भणति।

(२९) बहुकुसुम-विचित्रिता च भूमिः,

कुसुमभरेण विनामिताश्च वृक्षाः।

द्रुमशिखरलता च लम्बमाना,

पनसफलानीव वानरा ललन्ति॥

---

(७) अमी इति। फलपुष्पशोभिताः तथा कठोराभिः पूर्णाभिः निष्पन्दाभिः निश्चलाभिः लताभिः उपवेष्टिताः आलिङ्गिता इत्यर्थः अमी वृक्षाः नृपाज्ञया रक्षिजनेन पालिताः रक्षिताः दुर्जनादिति भावः सदाराः सस्त्रीकाः नरा इव निर्वृतिं यान्ति लभन्ते। वंशस्थ-विलं वृत्तं उपमालङ्कारश्च।

(८) बह्वु इति। द्रुमशिखरलताः वृक्षाग्रस्थाः पनसफलानीव बहुलीफलविशेषा इव ललन्ति शोभन्ते वर्त्तन्ते इत्यर्थः।

शकारः। एशे म्हि शाश्चिदे। इति विटेन सह उपविशति।
भावे! अज्ज वि तं वशन्तशेणिअं शुमलामि, दुज्जणवअणं
विअ हडक्कादो ण ओशलदि (२०)।

विटः। स्वगतम्। तथा (अ) निरस्तोऽपि स्मरति ताम्।
अथवा। स्त्रीभिर्विमानितानां कापुरुषाणां विवर्द्धते मदनः।
सत्पुरुषस्य स एव तु भवति मृदुर्नैव वा भवति ॥९॥

शकारः। भावे! का वि वेला थावलक-चेडश्श भणि-
दश्श पवहणं गेह्निअ लहुं लहुं आअच्छे त्ति। अज्ज
वि ण आअच्छदि त्ति, चिलम्हि बुभुक्खिदे, मज्झह्ने ण
शक्कीअदि पादेहिं गन्तुं, ता पेक्ख पेक्ख।
णह-मज्झ-गदे शूले दुप्पेक्खे कुविद-वाणल-शलिच्छे।
भूमी दढ-शन्तत्ता, हदपुत्तशदे व्व गन्धाली (२१) ॥ १० ॥

(२०) एषोऽस्मि स्थितः। भाव! अद्यापि तां वसन्तसेनां स्मरामि, दुर्जनवचनमिव हृदयान्नापसरति।

(२१) भाव! कापि वेला स्थावरकचेटकस्य भणितस्य प्रवहणं गृहीत्वा लघु लघु आगच्छेति। अद्यापि नागच्छतीति चिरमस्मि। बुभुक्षितः, मध्याह्ने न शक्यते पादाभ्यां गन्तुम्। तत् पश्य पश्य।
नभोमध्यगतः सूरो दुष्प्रेक्ष्यः कुपितवानरसदृशः।
भूमिर्दृढसन्तप्ता, हतपुत्रशतेव गान्धारी ॥

---

(अ) तथा तेन शकारेण।

(९) स्त्रीभिरिति। विवर्द्धते विशेषेण वृद्धिं गच्छति। मृदुः
सुखः चतुरित्यर्थः।

(१०) नभ इति। कुपितवानरेण सदृशः समानः दुष्प्रेक्ष्यः

विटः। एवमेतत्।

छायासु प्रतिसुप्तमध्यकवलं निद्रायते गोकुलं,

तृष्णार्त्तैश्च निपीयते वनमृगैरुष्णं पयः सारसम्।

सन्तापादतिशङ्कितैर्न नगरीमार्गो नरैः सेव्यते,

तप्तां भूमिमपास्य च प्रवहणं मन्ये क्वचित् संस्थितम् ॥११॥

शकारः। भावे!

शिलशि मम णिलीणे भाव! शुज्जश्श पादे,

शउणि-खग-विहङ्गा लुक्खशाहाशु लीणा।

णल पुलिश-मनुश्शा उह्णदीहं शशन्ता

घल शलण-णिशण्णा आदवं णिव्वहन्ति ॥ १२ ॥

दुर्द्दर्शनः मध्यगतः गगनमध्यमारूढ़ः सूरः सूर्य्यः नमः नम इति अव्ययं नमस्य इत्यर्थः तादृशं सूरं प्रणमामीति भावः। तथा भूमिः हतं पुत्राणां शतं यस्याः तादृशी गान्धारीव दृढ़ं सन्तप्ता।

(११) छायास्विति। गोकुलं गवां समूहः छायासु प्रतिसुप्तं चर्वितं मध्यकवलं यस्मेति क्रियाविशेषणं निद्रायते वनमृगैः तृष्णार्त्तैः पिपासाकुलैश्च उष्णं आतपतापादिति भावः सारसं सरोवरीयं पयः जलं निपीयते तथा नरैः सन्तापात् अतिशङ्कितैः अतिभीतैः सद्भिः नगरीमार्गः नगर्य्याः मार्गः पन्थाः न सेव्यते पथा न गम्यते इत्यर्थः। अतः मन्ये सम्भावयामीत्यर्थः यथा प्रवहणं तप्तां भूमिम् अपास्य त्यक्त्वा क्वचित् छायाप्रधाने प्रदेशे इति भावः संस्थितम्। शार्दूलविक्रीड़ितम्।

(१२) शिरसीति। हे भाव महाशय! सूर्य्यस्य पादः मम शिरसि निलीनः पतितः, वृक्षमेव शरणं आश्रयः तत्र निषस्राः सन्तः विहङ्गाः अतिशयाश्रयन्ति। नरपुरुषमनुष्या इति एकार्थकशब्दप्रयोगः शकार-वचनात्र दोषावह इति एवं सर्वत्र। मालिनीच्छन्दः।

भावे! अज्ज वि शे चेडे णागच्छदि। अत्तणो विणोदणणिमित्तं किं पि गाइश्शं। इति गायति। भावे! भावे! शुदं तुए? जं मए गाइदम् (३२)।

विटः। किमुच्यते, गन्धर्व्वो भवान्।

शकारः। कधं, गन्धव्वे ण भविश्शं?

हिङ्गुज्जले, जीलकभद्दमुत्थे, वचाहगण्ठी, शगुडा अ शुण्ठी।
एशे मए शेविद गन्धजुत्ती, कधं ण हम्मे मधुल-श्शलेत्ति? ॥१२

भावे! पुणो वि दाव गाइश्शं तथा करोति। भावे भावे! शुदं तुए? जं मए गाइदं (३३)।

विटः। किमुच्यते, गन्धर्व्वो भवान्।

---

(३२) शिरसि मम निलीनो भाव! सूर्य्यस्य पादः,
शकुनि खग विहङ्गा वृक्षशाखासु लीनाः।
नर-पुरुष-मनुष्या दीर्घसुष्णं श्वसन्तो
गृहशरण-निषण्णा आतपं निर्वहन्ति॥
भाव! अद्यापि स चेटो नागच्छति। आत्मनो विनोदननिमित्तं किमपि गास्यामि। भाव! श्रुतं त्वया? यन्मया गीतम्।

(३३) कथं गन्धर्वो न भविष्यामि?
हिङ्गूज्ज्वला जीरकभद्रमुस्ता, वचाया ग्रन्थिः, सगुडा च शुण्ठी।
एषा मया सेविता गन्धयुक्तिः कथं नाहं मधुरस्वर इति?
भाव! पुनरपि तावत् गास्यामि। भाव भाव! श्रुतं त्वया यन्मया गीतम्?

---

(१२) हिङ्गु इति। हिङ्गूज्ज्वला हिङ्गुबहुला, गन्धयुक्तिः सुगन्धिरित्यर्थः।

शकारः। कधं गन्धव्वे ण भवामि ? (२४)।

हिङ्गुज्जले दिण्णमरीच-चुण्णे वग्घालिदे तेल्लघिएण मिश्शे।
भुत्ते मए, पालहुदीअ मंशे, कधं ण हग्गे मधुल-श्शलेत्ति? १४

भावे ! अज्जवि चेडे णाअच्छदि (२५)।

विटः। स्वस्थो भवतु भवान्, सम्प्रत्येवागमिष्यति।

ततः प्रविशति प्रवहणाधिरूढा वसन्तसेना चेटश्च।

चेटः। भीदे क्खु हग्गे, मज्झह्निके शुय्ये, मा दाणिं कुविदे लाअश्शाल-शण्ठाणे हुविश्शदि। ता तुलिदं वहामि। जाध, गोणा। जाध (२६)।

वसन्तसेना। हद्धी हद्धी ! ण हु वड्ढमाणअस्स अअं सर-संजोओ, किण्णेदं ! किं णु अज्जचारुदत्तेण वाहण-परिस्समं परिहरन्तेण, अण्णो मणुस्सो अण्णं पवहणं पेसिदं भविस्सदि ? फुरदि दाहिणं लोअणं वेवदि मे हिअअं, सुण्णाओ दिसाओ, सव्वं ज्जेव विसण्ठुलं(ट) पेक्खामि(२७)।

---

(२४) कथं गन्धर्वो न भवामि।

हिङ्गूज्ज्वलं, दत्तमरीचचूर्णं व्याघारितं तैलघृतेन मिश्रम्।
भुक्तं मया परभृतीयमांसं, कथं नाहं मधुरस्वर इति ? ॥

(२५) भाव ! अद्यापि चेटो नागच्छति।

(२६) भीतः खल्वहं, माध्याह्निकः सूर्यः, मा इदानीं कुपितो राजश्यालसंस्थानको भविष्यति। तत् त्वरितं वहामि। यातं, गावौ यातम्।

(२७) हा ! धिक्, हा ! धिक्, न खलु वर्द्धमानस्यायं स्वर-

---

(ट) वेपते कम्पते विसंष्ठुलं विपरीतम्।

शकारः। वेश्मिघोषमाकर्ण्य। भावे भावे! आगदे पव-हणे (३८)।

विटः। कथं जानासि?

शकारः। किं ण पेक्खदि भावे? वुड्ढशूअले विअ घुलघुलाअमाणे लक्खीअदि (३९)।

विटः। दृष्ट्वा। साधु लक्षितम्, अयमागतः।

शकारः। पुत्तका थावलका चेडा! आगदे शि? (४०)

चेटः। अध इं (४१)।

शकारः। पवहणे वि आगदे? (४२)।

चेटः। अध इं (४३)।

शकारः। गोणा वि आगदे? (४४)।

संवाहकः, किं भिदं! किं न खलु आर्यचारुदत्तेन वाहनपरिश्रमं परिहरता अन्यो मनुष्यः अन्यत् प्रवहणं प्रेषितं भविष्यति? स्फुरति दक्षिणं लोचनं, वेपते मे हृदयं, शून्या दिशः, सर्वमेव विसंष्ठुलं पश्यामि।

(३८) भाव भाव! आगतं प्रवहणम्।

(३९) किं न पश्यति भावः? वृद्धशूकर इव घुरघुरायमाणं लक्ष्यते।

(४०) पुत्रक स्थावरक चेट! आगतोऽसि?

(४१) अथ किम्।

(४२) प्रवहणमपि आगतम्?

(४३) अथ किम्?

(४४) गावावपि आगतौ?

चेटः। अधइं (४५)

शकारः। तुमं पि आगदे? (४६)

चेटः। सहासम्। भट्टके! अहं पि आगदे (४७)

शकारः। ता पवेशेहि पवहणं (४८)

चेटः। कदलेण मग्गेण? (४९)।

शकारः। एदेण ज्जेव पाआल-खण्डेण(५०)।

चेटः। भट्टके! गोणा मलेन्ति, पवहणे वि भज्जेदि, हग्गे वि चेडे मलामि (५१)।

शकारः। अले! लाअशालके हग्गे, गोणा मले, अवलं कोणिश्शं, पवहणे भग्गे. अवलं घड़ाइश्शं, तुमं मले, अस्मे पवहण वाहके हुविश्शदि (५२)।

(४५) अथ किम्।

(४६) त्वमपि आगतः?

(४७) भट्टारक! अहमपि आगतः।

(४८) तस्मात् प्रवेशय प्रवहणम्।

(४९) कतरेण मार्गेण?

(५०) एतेनैव प्राकारखण्डेन।

(५१) भट्टारक! वृषभौ म्रियेते, प्रवहणमपि भज्यते, अहमपि चेटो म्रिये।

(५२) अरे! राजश्यालकोऽहं, वृषभौ मृतौ अपरौ क्रेष्यामि, प्रवहणं भग्नम् अपरं कारयिष्यामि, त्वं मृतः अन्यः प्रवहणवाहको भविष्यति।

चेटः। सव्वं उववण्णं हुविश्शदि, हग्गे अत्तणकेलके ण हुविश्शं (५३)।

शकारः। अले! सव्वं पि णश्शदु, पागालखण्डेण पवेशेहि पवहणं (५४)।

चेटः। विभज्ज ले पवहण! शमं शामिणा विभज्ज। अण्णे पवहणे भोदु, भट्टकं गदुअ णिवेदेमि। प्रविश्य। कधं ण भग्गे! भट्टके! एशे उवत्थिदे पवहणे (५५)।

शकारः। ण छिण्णा गोणा? ण मला लज्जू? तुमंपि ण मले? (५६)।

चेटः। अध इं? (५७)।

शकारः। भाव! आअच्छ, पवहणं पेक्खामो। भावे! तुमं पि मे गुलू पलमगुलू पेक्खीअसि आदलके अब्भन्तलके त्ति पुलक्कलणीएत्ति(ठ) तुमं दाव पवहणं अग्गदो अहिलुह (५८)

(५३) सर्वमुपपन्नं भविष्यति, अहमात्मीयो न भविष्यामि।

(५४) अरे! सर्वमपि नश्यतु, प्राकारखण्डेन प्रवेशय प्रवहणम्।

(५५) विभज्य रे प्रवहण! समं स्वामिना विभज्य। अन्यत् प्रवहणं भवतु, भट्टारकं गत्वा निवेदयामि। कथं न भग्नं! भट्टारक! एतदुपस्थितं प्रवहणम्।

(५६) न छिन्नौ वृषभौ? न मृताः रज्जवः? त्वमपि न मृतः?

(५७) अथ किम्।

(५८) भाव! आगच्छ, प्रवहणं पश्यावः। भाव! त्वमपि मे

(ठ) आदरकः आदरणीय इत्यर्थः अभ्यन्तरकः हृदयङ्गमः रहस्य-वस्तुविदः पुरस्करणीयः पारितोषिकेण सम्माननीयः।

विटः। एवं भवतु। इत्य रोहति।

शकारः। अथवा चिट्ठ तुमं, तुह बप्पकेलके पवहणे, जेण तुमं अग्गदो अहिलुहसि? हग्गे पवहण-शामी अग्गदो पवहणं अहिलुहामि (५९)।

विटः। भवानेवं ब्रवीति।

शकारः। जइ बि हगगे एव्वं भणामि, तधा, बि तुह एशे आदले अहिलुह भट्टकेत्ति भणिदुं (६०) (ङ)।

विटः। अरोहतु भवान्।

शकारः। एशे शम्पदं अहिलुहामि। पुत्तका थाबलका चेडा! पलिबत्ताबेहि पवहणं (६१)।

चेटः। परावर्त्य। अहिलुहदु भट्टालके (६२)।

शकारः। अधिरुह्यावलोक्य च शङ्कां नाटयित्वा त्वरितमवतीर्य्य

---

गुरुः परमगुरुः प्रेत्यग्रे सादरकोऽभ्यन्तरक इति पुरस्करणीय इति, त्वं तावत् प्रवहणमग्रतोऽधिरोह।

(५९) अथवा तिष्ठ त्वम्, तव पितृसम्बन्धि प्रवहणं येन त्वमग्रतोऽधिरोहसि? अहं प्रवहणस्वामी, अग्रतः प्रवहणमधिरोहामि।

(६०) यद्यप्यहमेवं भणामि, तथापि तवैष आदरः अधिरोह भट्टारक इति भणितुम्।

(६१) एष साम्प्रतम् अधिरोहामि। पुत्रक स्थावरक चेट! परिवर्त्तय प्रवहणं।

(६२) अधिरोहतु भट्टारकः।

---

(ङ) भट्टारक! प्रभो! अधिरोह इति भणितुं तव आदरः

विटं कण्ठे अवलम्ब्य। भावे भावे! मलेम्हि मलेम्हि पवहणाधिलूढ़ा लक्खशी चोले वा पड़िवशदि, जइ लक्खशी, तदो उभे वि मूशे, (ठ) अध चोले त उभे वि खज्जे (६३)।

विटः। न भेतव्यं, कुतोऽत्र वृषभयाने राक्षस्याः सञ्चारः। मा नाम, ते मध्याह्नार्क-ताप-च्छिन्नदृष्टेः स्थावरकस्य सकञ्चुकां छायां दृष्ट्वा भ्रान्तिरुत्पन्ना।

शकारः। पुत्तका थावलका चेड़ा! जीवेशि? (६४)।

चेटः। अध इं। (६५)।

शकारः। भावे! पवहणाधिलूढ़ा इत्थिआ पड़िवशदि, ता अवलोएहि (६६)।

विटः। कथं स्त्री।

अवनतशिरसः प्रयाम शीघ्रं
पथि वृषभा इव वर्षताड़िताक्षाः
मम हि सदसि गौरवप्रियस्य
कुलजन-दर्शन-कातरं हि चक्षुः ॥१५॥

(६३) भाव भाव! मृतोऽस्मि मृतोऽस्मि, प्रवहणाधिरूढ़ा राक्षसी चौरो वा प्रतिवसति, तद् यदि राक्षसी तदा उभावपि मुषितौ, अथ चौरः, तदा उभावपि खादितौ।

(६४) पुत्रक स्थावरक चेट! जीवसि?

(६५) अथ किम्।

(६६) भाव! प्रवहणाधिरूढ़ा स्त्री प्रतिवसति, तदवलोकय।

---

(ठ) मुषितौ खादितौ।

वधू। सविस्मयमात्मगतम्। कधं मम णअणाणं आआसअरो ज्जेव राअसालओ! ता संसइदम्हि मन्दभाआ, एसो दाणिं मम मन्दभाइणीए ऊसरक्खेत्तपडिदो(व्व) विअ बीअमुट्ठी णिप्फलो इध आगमणो संवुत्तो, ता किं एत्थ करइस्सं? (६७)।

शकारः। कादले क्खु एशे वुड्ढचेड़े पवहणं णावलोएदि, भावे! आलोएहि पवहणं(६८)।

विटः। को दोषः। भवत्वेवं तावत्।

शकारः। कधं! शिआला उड्डेन्ति, वाअशा वच्चेन्ति ता जाव भावे अक्खीहिं भक्खीअदि, दन्तेहिं पेक्खीअदि, ताव हग्गे पलाइश्शं (६९)।

---

(६७) कथं मम नयनयोरायासकर एव राजश्यालः! तत् संशयितास्मि मन्दभाग्या, एतदिदानीं मम मन्दभागिन्या ऊषरक्षेत्रपतित इव वीजमुष्टिः निष्फलमिहागमनं संवृत्तम्, तत् किमत्र कारिष्यामि?

(६८) कातरः खल्वेष वृद्धचेटः प्रवहणं नावलोकयति। भाव! आलोकय प्रवहणम्।

(६९) कथं शृगाला उड्डीयन्ते, वायसा व्रजन्ति, तत् यावत् भावोऽक्षिभ्यां भक्ष्यते, दन्तैः प्रेक्ष्यते, तावदहं पलायिष्ये।

---

सन्धः नेक्षेत परकामिनीमिति वचनात् परां वधूँ दृष्ट्वा ताडिते अक्षिणी येषां तथोक्ता वृषभा इव शीघ्रं प्रयाम इतः अपगच्छाम हि अतः सदापि सभायां साधुजनसमाजे गौरवप्रियस्य गौरवाकाङ्क्षिणः मम चक्षुः कुलजनस्य कुलवधूरूपस्य दर्शने कातरं विमुखं कुलवधूदर्शनस्य साधुविगर्हितत्वादिति भावः।

विटः। वसन्तसेनां दृष्ट्वा, सविषादमात्मगतम्। कथमये! मृगी व्याघ्रमनुसरति! भोः कष्टम्!

शरच्चन्द्र-प्रतीकाशं पुलिनान्तर शायिनम्।
हंसी हंसं परित्यज्य वायसं समुपस्थिता ॥१६॥

जनान्तिकम्। वसन्तसेने! न युक्तमिदं, नापि सदृशमिदम्।

पूर्व्वं मानादवज्ञाय द्रव्यार्थं जननीवशात्।

वसन्तसेना। मा। इति शिरश्चालयति।

विटः। अशौण्डीर्य्य-स्वभावेन वेशभावेन मन्यते ॥१७॥

ननूक्तमेव मया भवतीं प्रति
समसुपचर भद्रे! सुप्रियञ्चाप्रियञ्च।

वसं। पवहण-विपज्जासेण(त) आगदा, सरणागदह्मि(७०)।

(७०) प्रवहण-विपर्य्यासेनागता, शरणागतोऽस्मि।

(१६) शरच्चन्द्रेति। हंसी शरच्चन्द्रप्रतीकाशं शारदशशिनिभं पुलिनान्तरे सैकतमध्ये शेते इति तं हंसं परित्यज्य वायसं काकं समुपस्थिता। अत्र अप्रस्तुतहंसहंसीवायसैः प्रस्तुतानां वसन्तसेना चारुदत्तशकाराणामुपस्थितेरप्रस्तुतप्रशंसालङ्कारः, अनुष्टुप् वृत्तम्।

(१७) पूर्वमिति। अशौण्डीर्यस्वभावेन वेशभावेन वेश्यात्वेन मन्यते लोकैरिति शेषः यथा पूर्वं मानात् गर्वात् अवज्ञाय शकारमिति शेषः इदानीं जननीवशात् मातुरधीनतया मातुरुपदेशादित्यर्थः द्रव्यार्थं प्रचुरधनलाभार्थं इह आगतासीति शेषः।

विटः। न भेतव्यं न भेतव्यम्। भवत्वेनं वक्ष्यामि। शकारमुपगम्य। काणेलीमातः! सत्यं राक्षस्येवात्र प्रतिवसति।

शकारः। भावे! भावे! जइ लक्खशी पडिवशदि, ता कीश ण तुमं मूशेदि? (थ) अध चोल, ता किं तुमं ण भक्खिदे? (७१)।

विटः। किमनेन निरूपितेन. यदि पुनरुद्यान-परम्परया (द) पद्भ्यामेव नगरीमुज्जयिनीं प्रविशावः, तदा को दोषः स्यात्?

शकारः। एव्वं किदे किं भोदि? (७२)।

विटः। एवं कृते व्यायामः सेवितो धुर्य्याणाञ्च(ध) परि-श्रमः परिहृतो भवति।

शकारः। एव्वं भोदु। थावलआ चेड़ा! णेहि पवहणं, अधवा, चिट्ठ चिट्ठ. देवदाणं बम्हणाणं च अग्गदो चलणेण गच्छामि। णहि णहि. पवहणं अहिलुहिअ गच्छामि। जेण दूलदो मं पेक्खिअ भणिश्शन्ति, एशे शे लट्ठिअ शाले भट्टालके गच्छदि (७३)।

---

(७१) भाव! भाव! यदि राक्षसी प्रतिवसति, तत् कथं न त्वां मुष्णाति? अथ चोरस्तदा किं त्वं न भक्षितः?

(७२) एवं कृते किं भवति?

(७३) एवं भवतु। स्थावरक चेट! नय प्रवहणम्। अथवा,

---

(थ) मुष्णाति हरति नाशयतीत्यर्थः।

(द) उद्यानपरम्परया आरामश्रेण्या उपवनमार्गेण इत्यर्थः।

(ध) [illegible]

विटः । स्वगतम् । दुष्करं विषमौषधीकर्तुम्, भवत्वेवं तावत् ।

प्रकाशम् । काणेलीमातः ! एषा वसन्तसेना भवन्तमभिसारयितुमागता ।

चेटः । सन्तं पावं ! सन्तं पावं ! (७४) ।

शकारः । सहर्षम् । भावे ! भावे ! मं पवलपुलिश्रं मणुश्शं वाशुदेवकं ? (७५) ।

विटः । अथ किम् ।

शकारः । तेण हि अपुव्वा शिली शमाशादिदा, तश्शिं काले मए लोशाइदा, शम्पदं पादेशुं पडिअ पशादेमि (७६) ।

विटः । साध्वभिहितम् ।

शकारः । एशे पादेशुं पडेमि । इति वसन्तसेनामुपसृत्य । अम्बिके अम्बिके ! शुण मम विण्णत्तिं (७७) ।

तिष्ठ तिष्ठ, देवतानां आज्ञयावाज्ञाप्यतः चरणेन गच्छामि । नहि नहि, प्रवहणमधिरुह्य गच्छामि । येन दूरतो मां प्रेक्ष्य भणिष्यन्ति, एष स राष्ट्रियश्यालो भट्टारको गच्छति ।

(७४) शान्तं पापं, शान्तं पापम् ।

(७५) भाव ! भाव ! मां प्रवरपुरुषं मनुष्यं वासुदेवकम् ?

(७६) तेन हि अपूर्वा श्रीः समासादिता, तस्मिन् काले मया रोषिता, साम्प्रतं पादयोः पतित्वा प्रसादयामि ।

(७७) एष पादयोः पतामि । हे मातः ! अम्बिके ! शृणु मम विज्ञप्तिम् ।

एषे पडेमि चलणेसु विसालणेत्ते !
हत्थञ्जलिं दसणहे ! तव सुद्धदन्ति !
जं तं मए अवकिदं मदणातुलेण,
तं खम्मिदाणि, वलगत्ति ! तव म्हि दाशे(७८) १८

वसं। सक्रोधम्। अवेहि अणज्जं मन्तेसि(७९)।

इति पादेन ताड़यति।

शकारः। सक्रोधम्।

जे चुम्बिदे अम्बिक मादुकेहिं,
गदे ण देवाण वि जे पणामं।
शे पाड़िदे पादतलेण मुण्डे
वणे शिआलेण जधा मुदङ्गे (८०) ॥१९॥

---

(७८) एष पतामि चरणयोर्विशालनेत्रे !
हस्ताञ्जलिं दशनखे ! तव शुद्धदन्ति !।
यत्तन्मया अपकृतं मदनातुरेण,
तत्क्षामिताषि, वरगात्रि ! तवास्मि दासः ॥

(७९) अपेहि, अनार्य्यं मन्त्रयसि।

(८०) यच्चुम्बितमम्बिकामातृकाभिर्गतं न देवानामपि यत्प्रणामम्।
तत्पातितं पादतलेन मुण्डं वने शृगालेन यथा मृताङ्गम् ॥

---

(१८) हस्ताञ्जलिं करोमीति शेषः। दश नखा यस्यास्तत्-सम्बुद्धौ।

(१९) यदिति। यत् मुण्डं शिरः ममेति शेषः अम्बिकामातृ-काभिः मातृभिरिति भावः शकारवाक्यात् पौनरुक्त्यं न दोषावहेति बोद्धव्यम्। चुम्बितं तथा यत् देवानामपि प्रणामं न गतं देवानपि

अले थावलआ चेड़ा ! कहिं तुए एशा शमाशादिदा ? (८१)

चेटः। भट्टके ! गाम शअडेहिं लुद्धे लाअमग्गे तदा चालुदत्तश्श लुक्खवाडिआए पवहणं थाविअ तहिं ओद्‌लिअ जाव चक्कपलिवट्टिअं कलेमि, ताव एशा पवहण-विपज्जाशेण इह आलूढ त्ति तक्केमि (८२)।

शकारः। कधं पवहण-विपज्जाशेण आगदा, ण मं अहिशालिदुं। ता ओदल ओदल मम केलकादो पवहणादो। तुमं तं दलिद्द-शत्थवाह-पुत्तकं अहिशालेशि, मम केलकाइं गोणाइं वाहेशि, ता ओदल ओदल गब्भदाशि ! ओदल ओदल(८३)।

वसं। तं अज्जचालुदत्तं अहिसारेमि त्ति जं सच्चं अलंकिद म्हि इमिणा वअणेण। सम्पदं जं भोदु तं भोदु(८४)।

(८१) अरे स्थावरक चेट ! कुत्र त्वया एषा समासादिता ?

(८२) भट्टक ! ग्रामशकटैः रुद्धे राजमार्गे तदा चारुदत्तस्य वृक्षवाटिकायां प्रवहणं स्थापयित्वा तत्रावतीर्य्य यावच्चक्रपरिवृत्तिं करोमि, तावदेषा प्रवहण-विपर्य्यासेनेहारूढेति तर्कयामि।

(८३) कथं प्रवहणविपर्य्यासेनागता, न मामभिसारयितुं, तदवतर अवतर मदीयात् प्रवहणात्। त्वं तं दरिद्रसार्थवाहपुत्रकमभिसारयसि, मदीयौ गावौ वाहयसि, तदवतर अवतर गर्भदासि ! अवतर अवतर।

(८४) तमार्य्यचारुदत्तमभिसारयामीति यत्सत्यम् अलङ्कृतास्मि अमुना वचनेन। साम्प्रतं यद्भवतु, तद्भवतु।

न प्रत्यभिज्ञार्थः तत् शवं शृगालेन मृतकं यथा मृतशरीरमिव पादतलेन तर्जति शेषः पातितं उपमालङ्कारः उपजातिवृत्तम्।

शकारः। एदेहिं दे दशणहुप्पल-मण्डलेहिं
हत्थेहिं चाडुशद-ताड़ण-लम्पडेहिं।
कड्ढामि दे बलतणुं णिअ-जाणकादो,
केशेशु बालिदइअं वि जहा जडाऊ(८५)॥२०॥

विटः। अग्राह्या मूर्द्धजेष्वेताः स्त्रियो गुणसमन्विताः।
न लताः पल्लवच्छेदमर्हन्त्युपवनोद्भवाः ॥२१॥

तदुत्तिष्ठ त्वम्, अहमेनामवतारयामि। वसन्तसेने! अवतीर्य्यताम्।

(८५) एताभ्यां ते दशनखोत्पलमण्डलाभ्यां
हस्ताभ्यां चाटुशतताड़नलम्पटाभ्याम्।
कर्षामि ते वरतनुं निजयानकात्
केशेषु, वालिदयितामिव यथा जटायुः।

(२०) एताभ्यामिति। दश नखाः उत्पलमण्डलानि उत्पलसमूहाः ययोः ताभ्यां तथा चाटुशतानि प्रियवचनशतानीव ताड़नानि प्रहाराः तेषु लम्पटाभ्यां लुब्धाभ्यां तत्पराभ्यामित्यर्थः एताभ्यां हस्ताभ्यां निजयानकात् निजात् प्रवहणात् ते तव वरतनुं सुन्दरं गात्रं जटायुः केशेषु वालिदयितां तारामिव कर्षामि परस्परविरुद्धमेतत् शकारवचनात् असद्धर्ममिति बोद्धव्यम्।

(२१) अग्राह्या इति। गुणसमन्विताः गुणवत्यः एताः स्त्रियः मूर्द्धजेषु केशेषु अग्राह्याः न ग्रहीतुमर्हाः तथाहि उपवनोद्भवाः लताः पल्लवच्छेदं न अर्हन्ति, अत्र केशग्रहणपल्लवच्छेदनरूपधर्मयोः साम्यात् दृष्टान्तालङ्कारः दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति तल्लक्षणात् अनुष्टुप् वृत्तम्।

वसन्तसेना । सकरुणं पश्चात् स्थिता ।

शकारः । स्वगतम् । जेम्ब मम बम्मणाब्भाणेण तदा लोममशी शल्पुकिदे, (न) अज्ज एदाए पादप्पहालेण अणेण पज्जलिदे, तं अम्हदं मालेमि णं । भोदु एव्व दाव ।

प्रकाशम् । भावे भावे ।

जदिच्छसि लम्बदशा विशालं
पावालअं सुत्तशदेहि जुत्तम् ।
मंसं च खादुं तह तुट्टि कादुं,
चुह्न चुह्न चुक्कु, चुह्न चुह्नांत्ति (८६) ॥२१॥

विटः । ततः किम् ।

शकारः । मम पिअं कलेहि । (८७)

(८६) यः स मम बमनाभ्यासेन तदा रोषाग्निः सन्धुक्षितः, अद्य एतस्याः पादप्रहारदानेन प्रज्वलितः, तत् साम्प्रतं मारयाम्येनाम् ; भवतु एवं तावत् ।

यदीच्छसि लम्बदशाविशालं प्रावारकं सूत्रशतैर्हि युक्तम् ।
मांसञ्च खादितुं तथा तुष्टिं कर्तुं चुह्न चुह्न चुक्कु, चुह्न चुह्न इति ॥

(८७) मम प्रियं कुरु ।

(न) सन्धुक्षितः सम्यक् दीपितः ।

(२१) यदीति । यदि लम्बाभिर्दशाभिः प्रान्तैः दशावस्था दीपवर्त्तौ वस्त्रान्ते भूम्नि योषितीति मेदिनी । विशालं दीर्घं तथा सूत्रशतैः बहुसूत्रैरित्यर्थः युक्तं प्रावारम् उत्तरीयं वसनं मांसं खादितुं तथा तुष्टिं मम सन्तोषं कर्त्तुम् इच्छसि, मम सकाशात् दीर्घं उत्तरीयवसनं मांसभोजनञ्च यदि अभिलषसीत्यर्थः ।

विट। बाढं करोमि, वर्जयित्वा त्वकार्य्यम्।

शकारः। भावे! अकज्जाह गन्धे वि णत्थि, लक्खशी कावि णत्थि (८८)(प)।

विट। उच्यतां तर्हि।

शकारः। मालेहि वशन्तशेणिअं (८९)।

विट। कर्णौ पिधाय।

बालां स्त्रियञ्च नगरस्य विभूषणञ्च
वेश्यामवेश-सदृश प्रणयोपचाराम्।
एनामनागसमहं यदि घातयामि
केनोडुपेन परलोकनदीं तरिष्ये ॥२३॥

(८८) अकार्य्यस्य गन्धोऽपि नास्ति, राक्षसी कापि नास्ति।

(८९) मारय वसन्तसेनाम्।

(प) राक्षसी कापि नास्तीति पूर्व्वम् अकार्य्यं वर्जयित्वेति विटवाक्यात् अकार्य्यं अकर्त्तव्यमिति विटाभिप्रेतमर्थमज्ञात्वा अकार्य्यं कर्त्तुमशक्यम् असाध्यमित्येवमर्थं बुद्ध्वा राक्षसी कापि नास्तीत्युक्तं राक्षसी सर्वो दुःसाध्यः अस्मास्तु न तथेति भावः प्रकटितः।

(२३) बालामिति। यदि अहं बालां तरुणीं स्त्रियम् अबलां नगरस्य विभूषणं अलङ्काररूपां वेश्यां जात्येति शेषः वेशो वेश्याजनाश्रयः तत् सदृशः न भवतीति अवेशसदृशः प्रणयव्यवहारः यस्यां तादृशीं कुलकामिनीमिव प्रणयवतीमित्यर्थः अनागसं निरपराधां एनां वसन्तसेनां घातयामि, तदा केन उडुपेन भेलेन परलोकनदीं तरिष्ये न केनापीत्यर्थः परलोके नैव निस्तारो ममेति भावः।

शकारः । अहं ते भेडकं दइश्शं । अण्णं च, विवित्ते उय्याणे इध मालन्तं को तुमं पेक्खिश्शदि ? (९०) ।

विटः । पश्यन्ति मां दशदिशो, वनदेवताश्च,

चन्द्रश्च, दीप्तकिरणश्च दिवाकरोऽयम् ।

धर्म्मानिलौ च गगनञ्च तथान्तरात्मा

भूमिस्तथा सुकृत-दुष्कृतसाक्षिभूता ॥२४॥

शकारः । तेण हि पडन्तोवालिदं (फ) कदुअ मालेहि (९१) ।

विटः । मूर्ख ! अपध्वस्तोऽसि (ब) ।

शकारः । अधम्मभीलू एशे वुड्ढकोले (भ) । भोदु, थाव-

(९०) अहं ते उडुपं दास्यामि । अन्यच्च, विविक्ते उद्याने इह मारयन्तं कस्त्वां प्रेक्षिष्यते ?

(९१) तेन हि पटान्तापवारितां कृत्वा मारय ।

---

(२४) पश्यन्तीति । सुकृतदुष्कृतसाक्षिभूताः दश दिशः वनदेवताः चन्द्रः दीप्तकिरणः दिवाकरः धर्मः अनिलः वायुः गगनं आकाशम् अन्तरात्मा मनः तथा भूमिश्च मां पश्यन्ति, तदुक्तं "आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्" ॥ वसन्ततिलकं वृत्तम् ।

(फ) पटान्तापवारितां वस्त्रान्तेन आच्छादितां येन कोऽपि न पश्यन्तीति भावः ।

(ब) अपध्वस्तः नीचवंशप्रसूतः अथवा अधःपतितः ।

(भ) वृद्धकोलः वृद्धसूकरः वराहः सूकरो घृष्टिः कोलः पोत्री-क्रमेलः ।

लअं चेड़ं अणुणेमि । पुत्तका थावलका चेड़ा ! शोवस्स-खड़आइं दइश्शं (९२)।

चेटः। अहं पि पलिहिश्शं (९३)।

शकारः। शोवस्सं दे पोठकं कालइश्शं (९४)।

चेटः। अहं पि उवविशिश्शं (९५)।

शकारः। शव्वं दे उच्छिट्टं दइश्शं (९६)।

चेटः। अहं पि खाइश्शं (९७)।

शकारः। शव्वचेड़ाणं महत्तलकं कलइश्शं (९८)।

चेटः। भट्टके ! हुविश्शं (९९)।

शकारः। ता मस्सेहि मम वअणं (१००)।

चेटः। भट्टके ! शव्वं कलेमि, वज्जिअ अकज्जं(१)।

शकारः। अकज्जाह गन्धे वि णत्थि (२)।

(९२) अधर्मभीरुरेष वृद्धकोलः। भवतु, स्थावरकं चेटमनुनयामि। पुत्रक स्थावरक चेट ! सुवर्णकटकानि दास्यामि।

(९३) अहमपि परिधास्यामि।

(९४) सौवर्णं ते पीठकं कारयिष्यामि।

(९५) अहमपि उपवेक्ष्यामि।

(९६) सर्वं ते उच्छिष्टं दास्यामि।

(९७) अहमपि खादिष्यामि।

(९८) सर्वचेटानां महत्तरकं कारयिष्यामि।

(९९) भट्टक ! भविष्यामि।

(१००) तन्मन्यस्व मम वचनम्।

(१) भट्टक ! सर्वं करोमि, वर्जयित्वा अकार्यम्।

(२) अकार्यस्य गन्धोऽपि नास्ति।

चेटः। भणादु भट्टके (३)।

शकारः। एणं बशन्तशेणिअं मालेहि (४)।

चेटः। पशीददु भट्टके। इअं मए अणज्जेण अज्जा पवहण पलिवत्तणेण आणीदा(५)।

शकारः। अले चेड़ा! तबाबि ण पहबामि? (६)।

चेटः। पहबदि भट्टके शलीलाह, ण चालित्ताह, ता पशीददु पशीददु भट्टके, भाआमि क्खु अहं(७)।

शकारः। तुमं मम चेड़े भविअ कश्श भाआशि?(८)।

चेटः। भट्टके! पललोअश्श (९)।

शकारः। के शे पललोए (१०)।

चेटः। भट्टके! शुकिद-दुक्किदश्श पलिणामे? (११)।

शकारः। केलिशे शुकिदश्श पलिणामे? (१२)।

(३) भणतु भट्टकः।

(४) एनां वसन्तसेनां मारय।

(५) प्रसीदतु भट्टकः। इयं मया अनार्य्येण आर्य्या प्रवहणपरिवर्त्तनेमानीता।

(६) अरे चेट! तवापि न प्रभवामि?

(७) प्रभवति भट्टारकः शरीरस्य न चारित्रस्य, तत् प्रसीदतु प्रसीदतु भट्टारकः, बिभेमि खल्वहम्।

(८) त्वं मम चेटो भूत्वा कस्मात् बिभेषि?

(९) भट्टारक! परलोकात्।

(१०) कः स परलोकः?

(११) भट्टक! सुकृतदुष्कृतस्य परिणामः।

(१२) कादृशः सुकृतस्य परिणामः?

चेटः । जादिशे भट्टके बहुशोवण्णमण्डिदे (१३) ।

शकारः । दुक्किद्श्श्श केलिशे ? (१४) ।

चेटः । जादिशे हग्गे पलपिण्ड-भक्खके भूदे । ता, अकज्जं ण कलइश्शं (१५) ।

शकारः । अले ! ण मालिश्शशि ? इति बहुविधं ताड़यति (१६) ।

चेटः । पिट्ठदु भट्टके, मालेदु भट्टके, अकज्जं ण कलइश्शं ।

जेण म्हि गब्भदाशे विणिम्मिदे भाअधेअ दोशेहिं ।
अहिअं च ण कीणिश्शं तेन अकज्जं पलिहलामि (१७) ॥२५॥

वसं । भाव ! शलणागदे म्हि (१८) ।

विटः । काणेलीमातः ! मर्षय, मर्षय । साधु स्थावरक ! साधु ।

(१३) यादृशो भट्टारको बहुसुवर्णमण्डितः ।

(१४) दुष्कृतस्य कीदृशः ?

(१५) यादृशोऽहं परपिण्डभक्षको भूतः । तदकार्यं न करिष्यामि ।

(१६) अरे ! न मारयिष्यसि ?

(१७) ताड़यतु भट्टारको मारयतु भट्टारकः, अकार्यं न करिष्यामि
येनास्मि गर्भदासो विनिर्मितो भागधेयदोषैः ।
अधिकञ्च न क्रीणिष्यामि, तेनाकार्यं परिहरामि ॥

(१८) शरणागतोऽस्मि ।

---

(२५) येनेति । गर्भदासः आजन्मभृत्य इत्यर्थः अधिकं एतस्मा-
दपि गर्भदासत्वादिति भावः [illegible]

अप्येष नाम परिभूतदशो दरिद्रः
प्रेष्यः परत्र फलमिच्छति, नास्य भर्त्ता।
तस्मादमी कथमिवाद्य न यान्ति नाशं,
ये वर्द्धयन्त्यसदृशं सदृशं त्यजन्ति ॥ २६ ॥

अपिच ।

रन्ध्रानुसारी विषमः कृतान्तो
यदस्य दास्यं तव चेश्वरत्वम् ।
श्रियं त्वदीयां यदयं न भुङ्क्ते,
यदेतदाज्ञां न भवान् करोति ॥ २७ ॥

(२६) अपीति। परिभूता तिरस्कृता दशा अवस्था यस्य सः दुरवस्थ इत्यर्थः दरिद्रः प्रेष्यः भृत्यः अपि एषः चेट इति शेषः परत्र परलोके फलं सद्गतिरूपं नाम सम्भावनायामव्ययं इच्छति, अस्य भर्त्ता स्वामी शकार इत्यर्थः न इच्छतीत्यर्थः तस्मात् ये असदृशं अयोग्यं दुर्जनमित्यर्थः वर्द्धयन्ति वृद्धिं प्रापयन्ति तथा सदृशं योग्यं त्यजन्ति न वर्द्धयन्तीत्यर्थः ते अमी जनाः कर्मविपाका वा अद्य कथमिव नाशं न यान्ति न प्राप्नुवन्ति तेषां नाश उचित इति भावः। वसन्ततिलकं छन्दः।

(२७) रन्ध्रेति। कृतान्तः दैवं कृतान्तो यम दैवयोरिति कोषः। रन्ध्रानुसारी छिद्रानुसन्धायी दोषमात्रदर्शीत्यर्थः अतएव विषमः विपरीतः अविचारक इत्यर्थः यत् यस्मात् अस्य चेटस्य साधोरिति भावः दास्यं किङ्करत्वं तव च अकार्य्यकारिण इति भावः ईश्वरत्वं, प्रभुत्वं यत् यस्मात् अयं चेटः त्वदीयां श्रियं न भुङ्क्ते प्रभुत्वेनेति शेषः, भवांश्च एतदाज्ञाम् एतस्य चेटस्य आज्ञां न करोति भृत्यभावेनेति शेषः। इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजाति वृत्तम्।

शकारः। स्वगतम्। अधम्मभिलुए वुड्ढखोड्डे, पललोअभिलू एशे गब्भदाशे, हग्गे लट्टिअशाले कश्श भाआमि? वलपुलिश-मणुश्शे। प्रकाशम्। अले गब्भदाशे चेडे! गच्छ तुमं, ओवलके(म) पविशिअ वीशन्ते एअन्ते चिट्ठ(१९)।

चेटः। जं भट्टके आणवेदि। वसन्तसेनामुपसृत्य। अज्जए! एत्तिके मे विहवे (२०)। इति निष्क्रान्तः।

शकारः। परिकरं (य) बध्नन्। चिट्ठ वशन्तशेणिए! चिट्ठ, मालइश्शं (२१)।

विटः। आः! ममाग्रतो व्यापादयिष्यसि? इति गले गृह्णाति।

शकारः। भूमौ पतति। भावे भट्टकं(र) मालेदि। इति मोहं नाटयति। चेतनां लब्ध्वा॥

शव्वकालं मए पुट्टे मंशेण अ घिएण अ।
अज्ज कज्जे शमुप्पण्णे, जादे मे वेलिए कधं॥ २८॥

---

(१९) अधर्मभीरुको वृद्धशृगालः, परलोकभीरुरेष गर्भदासः। अहं राष्ट्रियश्यालः कस्मात् बिभेमि वरपुरुषमनुष्यः? अरे गर्भदास चेट! गच्छ त्वम्, अपवारकं प्रविश्य विश्रान्त एकान्ते तिष्ठ।

(२०) यत् भट्टक आज्ञापयति। एतावान् मे विभवः।

(२१) तिष्ठ वसन्तसेने! तिष्ठ, मारयिष्यामि।

---

(म) अपवारके अवनिकामध्ये इत्यर्थः।

(य) परिकरं गात्रबन्धविशेषम् अथ परिकरः पर्य्यङ्कपरिवारयोः। प्रगाढ़े गात्रिकाबन्धे इति हेमचन्द्रः।

(र) भट्टकं भट्टारकं प्रभुं मामिति शेषः।

विचिन्त्य। भोदु, लद्धे मए उवाए। दिस्सा वुड्ढखोड्डेण सिरश्चालण श्रसा, ता, एदं पेश्चिश्च(ल) वश्रन्तसेणिश्चं मालइश्चं, एव्वं दाव। प्रकाशम्। भावे! जं तुमं मए भणिदे, तं कधं हग्गे एव्वं वड्ढकेहिं गल्लक्कप्पमाणेहिं (व) कुलेहिं जादे श्रकज्जं कलेमि? एव्वं एदं श्रङ्गीकलाविदुं मए भणिदं (२२)।

विटः। किं कुलेनोपदिष्टेन, शीलमेवात्र कारणम्।

भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः॥ २९॥

शकारः। भावे! एशा तव अग्गदो लज्जाश्रदि, ण मं अङ्गीकलेदि, ता गच्छ, थावलश्र चेड़े मए पिट्टिदे गदे वि

(२२) भावो भट्टकं मारयति।

सर्वकालं मया पुष्टो मांसेन च घृतेन च।

अद्य कार्य्ये समुत्पन्ने जातो मे वैरिकः कथम्?॥

भवतु, लब्धो मया उपायः। दत्ता वृद्धशृगालेन शिरश्चालनसञ्ज्ञा, तदेतं पिष्ट्वा वसन्तसेनां मारयिष्यामि एवं तावत्। भाव! यत् त्वं मया भणितः, तत्कथमहमेवं दृहत्तरैः गल्लर्कप्रमाणैः कुलैर्जातोऽकार्यं करोमि? एवमेतदङ्गीकारयितुं मया भणितम्।

---

(ल) पेश्चिश्च इति प्राकृतस्य पिष्ट्वेति संस्कृतं बोद्धव्यम्।

(व) गल्लर्कप्रमाणैः कुक्कुरसदृशैरित्यर्थः।

(२९) किमिति। उपदिष्टेन कथितेन, शीलं स्वभावः शीलं स्वभावे सद्वृत्ते इति कोषः, सुतराम् अतिशयेनेत्यर्थः स्फीताः वर्द्धिता इत्यर्थः।

एशे पलाइअ गच्छदि (ग), ता तं गेह्णिअ आअच्छदु भावे (२३)।

विटः। स्वगतम्।

अस्मत्समक्षं हि वसन्तसेना
शौण्डीर्यभावान्न भजेत मूर्खम्।
तस्मात्करोम्येष विविक्तमस्या
विविक्तविस्रम्भरसो हि कामः॥३०॥

प्रकाशम्। एवं भवतु, गच्छामि।

वसं। पटान्ते गृहीत्वा। णं भणामि शरणागदम्हि (२४)।

विटः। वसन्तसेने! न भेतव्यं न भेतव्यम्। काणेलीमातः! वसन्तसेना तव हस्ते न्यासः।

शकारः। एव्वं मम हत्थे एशा णाशेण चिट्ठदु(२५)।

(२३) एषा तवाग्रतो लज्जते, न मामङ्गीकरोति, तद्गच्छ स्थावरकचेटो मया ताड़ितो गतोऽपि एष प्रपलाय्य गच्छति, तस्मात्तं गृहीत्वा आगच्छतु भावः।

(२४) ननु! भणामि शरणागताऽस्मि।

(२५) एवं मम हस्ते एषा न्यासेन तिष्ठतु।

(ग) अपि एष प्रपलाय्य गच्छति, अपीति प्रश्नसूचकमव्ययमिति ज्ञेयम्।

(३०) अस्मादिति। वसन्तसेना शौण्डीर्यभावात् उदारस्वभावात् अस्मत् समक्षं मम सन्निधौ इत्यर्थः मूर्खं शकारमिति शेषः न भजेत, तस्मात् एषः अहं अस्याः विविक्तं विजनत्वं करोमि, हि यतः कामः विविक्ते विजने यः विस्रम्भः विश्वासपूर्वकरहस्यव्यापारः तस्मिन् रसः अनुरागः यस्य तादृशः विजनेषु एव कामः प्रसरतीति भावः।

विटः। सत्यम् ?

शकारः। शच्चं (२६)।

विटः। किञ्चिद्गत्वा। अथवा मयि गते नृशंसो हन्यादेनाम्, तदपवारितशरीरः पश्यामि तावदस्य चिकीर्षितम्। इत्येकान्ते स्थितः।

शकारः। भोदु, मालइश्शं। अधवा कवड-कावडिके एशे बम्हणे वुड्ढखोड़े कदावि ओवालिदशलीले गढ़िअ, शिआले भविअ, chulbul कलेदि, ता, एदश्श वञ्चणा-णिमित्तं एव्वं दाव कलइश्शं। कुसुमावचयं कुर्वन्नात्मानं मण्डयति। बाशू बाशू वशन्तशेणिए! एहि (२७)।

विटः। अये! कामी संवृत्तः, हन्त निर्वृत्तोऽस्मि। गच्छामि। इति निष्क्रान्तः।

शकारः। शुवण्णअं देमि, पिअं वदेमि,
पडेमि शीशेण शवेट्टणेण।
तधा वि मं णेच्छशि, शुद्धदन्ति!
किं शेवअं कट्ठमआ मणुश्शा (२८) ॥ ३१ ॥

---

(२६) सत्यम्।

(२७) भवतु मारयिष्यामि। अथवा कपटकापटिक एष ब्राह्मणो वृद्धशृगालः, कदापि अपवारितशरीरो गत्वा शृगालो भूत्वा कपटं करोति, तदेतस्य वञ्चनानिमित्तमेवं तावत् करिष्यामि। वासे वासे! वसन्तसेने! एहि।

(२८) सुवर्णकं ददामि, प्रियं वदामि, पतामि शीर्षेण सवेष्टनेन।
तथापि मां नेच्छसि शुद्धदन्ति! किं सेवकं कष्टमया मनुष्याः॥

(३१) सुवर्णकमिति। सवेष्टनेन शोष्णीषेण किरीटभूषितेनेत्यर्थः।

यं। को एत्थ सन्देहो (२९)। खलचरितखलो, खलचरित-मित्यादि श्लोकद्वयं पठति।

खल चरित निकृष्ट! जातदोषः
कथमिह मां परिलोभसे धनेन।
सुचरित-चरितं विशुद्धदेहं
न हि कमलं मधुपाः परित्यजन्ति॥ ३२॥
यत्नेन सेवितव्यः पुरुषः कुलशीलवान् दरिद्रोऽपि।
शोभा हि पण्यस्त्रीणां सदृशजन समाश्रयः कामः॥३३॥

---

(२९) कोऽत्र सन्देहः।

---

तथाहि मनुष्याः कष्टमयाः क्लेशबहुलाः क्लेशसहा इत्यर्थः। अन्यत् सुगमम्।

(३२) खलेति। हे खलचरित! खलस्य दुर्जनस्य चरितमिव चरितं यस्य तादृश! निकृष्ट! नीच! अथवा खल! चरितेन पाप-कर्मणा निकृष्ट! नीच! जातदोषः समुत्पन्नपापः मज्जिघांसयेति भावः। त्वम् इह धनेन मां कथं परिलोभसे लोभयसीत्यर्थः, धनेन मम लोभनं व्यर्थमित्याह सुचरितेति मधुपाः भ्रमरा भ्रमर्यः वा सुचरित-चरितं सुचरितं सुष्ठु कृतं चरितं जनशीनोद्धरणरूपं कार्यं येन तादृशं विशुद्धदेहं निर्मलशरीरम् अपापं वा कमलं चारुदत्तमिति ध्वनिः नहि व परित्यजन्ति। यथा भ्रमराः कमलं विहाय कुसुमान्तरं न गच्छन्ति था अहं चारुदत्तं परित्यज्य नान्यमाश्रयामीति भावः।

(३३) यत्नेनेति। हि यतः पण्यस्त्रीणां वेश्यानां सदृशजने समाश्रयः सम्यक् आश्रयः येन तादृशः कामः शोभा, सदृशजनानुरक्ता एव स्त्रीः शोभन्ते इत्यर्थः पूर्वार्द्धं सुगमम्।

अविश्र। सहआर-पादवं सेविश्र पलास-पादवं (घ) अङ्गीकरिस्सं ? (३०)।

शकारः। दाशीए धीए! दलिद्द चालुदत्ताके शहआलु-पादवे कड़े, हगे उण पलाशे भणिदे, किंशुके वि ण कड़े। एव्वं तुमं मे गालिं देन्ती अज्जवि तं ज्जेव चालुदत्ताकं शमलेशि ? (३१)।

वसं। हिअअगदो ज्जेव किंत्ति न सुमरीअदि ? (३२)।

शकारः। अज्ज बि दे हिअअगदं तुमं च शमं ज्जेव मोड़ेमि। ता दलिद्द-शत्थवाहअ-मणुश्श कामुकिणि! चिट्ठ चिट्ठ (३३)।

(३०) अपिच। सहकारपादपं सेवित्वा न पलाशपादपमङ्गीकरिष्यामि।

(३१) दास्याः पुत्रि! दरिद्रचारुदत्तकः सहकारपादपः कृतः, अहं पुनः पलाशो भणितः, किंशुकोऽपि न कृतः। एवं त्वं मह्यं गालीं ददती अद्यापि तमेव चारुदत्तकं स्मरसि ?

(३२) हृदयगतएव किमिति न स्मर्यते ?

(३३) अद्यापि ते हृदयगतं त्वाञ्च सममेव मोटयामि, तद्दरिद्र-सार्थवाहक-मनुष्यकामुकि! तिष्ठ तिष्ठ।

(घ) सहकारपादपम् आम्रतरुम् आम्रश्चूतो रसालोऽसौ सहकारोऽति सौरभ इत्यमरः पलाशपादपं पलाशवृक्षं गन्धशून्यमिति भावः (देखिते पलाशपुष्प अतिमनोहर, गन्धविने केवा तार करे समादर) इति भाषा भावेनावगन्तव्या। अत्र अप्रस्तुताभ्यां सहकारपलाशाभ्यां प्रस्तुतयोश्चारुदत्तशकारयोर्बोधनात् अप्रस्तुतप्रशंसेयमलङ्कृतिः।

चेटः । भण भण पुणो वि भण सलाहणिआइं एदाइं अक्खराइं (३४) ।

शकारः । पलित्ताअदु दाशीए पुत्ते दलिद्दचालुदत्तके तुमं (३५) ।

चेटः । परित्ताअदि जदि मं पेक्खदि (३६) ।

शकारः । किं शे शक्के वालिपुत्ते महिन्दे
लम्भापुत्ते कालणेमी शुबन्धू ।
लुद्दे लाआ दोणपुत्ते जडाऊ
चाणक्के वा धुन्धुमाले तिशङ्कू ? (३७) ॥३४॥

---

(३४) भण भण पुनरपि भण श्लाघनीयानि अक्षराणि ।
(३५) परित्रायतां दास्याः पुत्रश्चारुदत्तकस्त्वाम् ।
(३६) परित्रायते यदि मां प्रेक्षते ।
(३७) किं स शक्रो वालिपुत्रो महेन्द्रो रम्भापुत्रः कालनेमिः सुबन्धुः । रुद्रो राजा द्रोणपुत्रो जटायुश्चाणक्यो वा धुन्धुमारस्त्रिशङ्कुः ? ॥

---

(३४) किमिति । स चारुदत्त इत्यर्थः वालिपुत्रः अङ्गदः अथवा वालीपुत्रो यस्येति शक्रविशेषणम् । कालनेमिः राक्षसविशेषः दैत्यविशेषो वा यथा कालनेमिं दुराधर्षं रणः परमदुर्जयः । चतुरास्यं चतुर्हस्तमष्टनेत्रं भयावहमिति रामायणं तथा चात्मानमपि यज्ज्ञातं जानन् प्राक् विष्णुना हतम् । महासुरं कालनेमिं यदुभिः स न्यवध्यत इति श्रीमद्भागवतम् । सुबन्धुः राजविशेषः, द्रोणपुत्रः अश्वत्थामा, धुन्धुमारः राजविशेषः । शालिनी वृत्तम् । "मात्तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात् ।

अधवा। एदे वि दे ण लक्खन्ति।

चाणक्के ण जधा सीदा मालिदा भालदे जुगे।

एव्वं दे मोड़इस्सामि, जड़ाऊ विअ दोवदिं (३८) ॥ ३५ ॥

इति ताड़यितुमुद्यतः।

वसं। हा अत्ते! कहिं सि? हा अज्जचारुदत्त! एसो जणो असम्पुण्ण-मणोरधो ज्जेव विवज्जदि, ता उड्ढं (स) अक्कन्दइस्सं। अधवा, वसन्तसेणा उड्ढं अक्कन्ददि त्ति लज्जणीअं क्खु एदं, णम अज्जचारुदत्तस्स (३९)।

शकारः। अज्जवि गब्भदासी तस्स ज्जेव पावस्स णामं गेह्णदि? इति कण्ठे पीड़यन्। शुमल गब्भदाशि! शुमल (४०)

वसं। णमो अज्जचारुदत्तस्स (४१)।

(३८) अथवा एतेऽपि त्वां न रक्षन्ति।

चाणक्येन यथा सीता मारिता भारते युगे।

एवं त्वां मोटयिष्यामि जटायुरिव द्रौपदीम् ॥

(३९) हा मातः कुत्रासि? हा आर्य्य चारुदत्त! एष जनोऽसम्पूर्णमनोरथ एव विपद्यते। तदूर्द्ध्वमाक्रन्दयिष्यामि, अथवा, वसन्तसेना उर्द्ध्वमाक्रन्दतीति लज्जनीयं खल्वेतत्, नम आर्य्यचारुदत्ताय।

(४०) अद्यापि गर्भदासी तस्यैव पापस्य नाम गृह्णाति? स्मर गर्भदासि। स्मर।

(४१) नम आर्य्य चारुदत्ताय।

---

(३५) चाणक्येनेति। मोटयिष्यामि चूर्णयिष्यामि अन्यत् सर्वं प्रकारवाक्यात् बालव्यम्।

(स) उड्ढं उच्चैरित्यर्थः।

शकारः। मल गब्भदाशि ! मल (४२)। नाट्येन कण्ठं निपीडयन् मारयति। वसन्तसेना मूर्च्छिता पतति निश्चेष्टा।

शकारः। सहर्षम्।

एदं दोशकलण्डिअं अविणअश्शावाशभूदं खलं
लत्तं तश्श किलागदश्श लमणे कालागदं आअदम्।
किं एशे शमुदाहलामि णिअअं बाहूण शूलत्तणं
णीशाशे वि मलेदु अम्ब शुमला शीदा जधा भालदे(४३) ३६॥

(४२) म्रियतां गर्भदासि ! म्रियताम्।

(४३) एतां दोषकरण्डिकामविनयस्यावासभूतां खलां
रक्तां तस्य किलागतस्य रमणे कालागतामागताम्।
किमेष समुदाहरामि निजकं बाह्वोः शूरत्वं,
निश्वासेऽपि म्रियते अम्बा सुमृता, सीता यथा भारते॥

(३६) एतामिति। करण्डिका पात्रभेदः दोषाणां करण्डिका तां दोषाकरामित्यर्थः, अविनयस्य दुर्नीतेः आवासभूतां वासभूमिं अविनयवहुलामित्यर्थः खलां क्रूराम् आगतस्य पूर्वमुद्यानमुपस्थितस्य तस्य चारुदत्तस्य रमणे आगतां रक्तां तत्रानुरागिणीं कालागतां कालप्राप्ताम् एतां वसन्तसेनां हत्वेति शेषः एषः अहं निजकं स्वकीयं बाह्वोः शूरत्वं वीर्यं किं समुदाहरामि प्रकटयामि बाहुवीर्यस्य अनावश्यकत्वादिति भावः यतः अम्बा माता वसन्तसेना इति भावः यथा भारते महाभारते सीता सुमृता सुष्ठु मृता तथा निश्वासेऽपि मम निश्वासपातेऽपि म्रियते मम बाहुवीर्यं दूरे तिष्ठतु, वसन्तसेना मदीयनिश्वासपातमपि न सहते अतिसौकुमार्य्यादिति भावः।

इच्छन्तं मम णेच्छति त्ति गणिआ पाशेण मे मालिदा,
शुखे पुप्फकलण्डके त्ति शहशा पाशेण उत्तासिदा।
श वा बञ्चिद-भादुके मम पिदा मादेव शा द्दोप्पदी
जेशे पेक्खदि णेदिशं बबशिदं पुत्ताह शूलत्तणं (४४) ॥३७॥

भोदु, सम्पदं वुड्ढखोड्डे आगमिश्शदि त्ति, ता ओशलिअ चिट्ठामि। तथा करोति। (४५)। प्रविश्य चेटेन सह।

विटः। अनुनीतो मया स्थावरकश्चेटः। तद्यावत् काणेलीमातरं पश्यामि। परिक्रम्यावलोक्य च। अये! मार्ग एव पादयोर्निपतितः। अनेन च पतता स्त्री व्यापादिता। भोः पाप! किमिदमकार्य्यमनुष्ठितं त्वया? तवापि पापिनः पतनात् स्त्रीवधदर्शनेनातीव पातिता वयम्। अनिमित्तमेतत् यत्सत्यं वसन्तसेनां प्रति शङ्कितं मे मनः, सर्वथा देवताः स्वस्ति करिष्यन्ति। शकारमुपसृत्य। काणेलीमातः! एवं मया अनुनीतः स्थावरकश्चेटः।

---

(४४) इच्छन्तं मां नेच्छतीति गणिका पाशेन मे मारिता,
शून्ये पुष्पकरण्डके इति सहसा पाशेन उत्त्रासिता।
स वा वञ्चितो भ्राता मम पिता मातेव सा द्रौपदी,
योऽसौ पश्यति नेदृशं व्यवसितं पुत्रस्य शूरत्वम्॥

(४५) भवतु, साम्प्रतं वृद्धशृगाल आगमिष्यतीति, ततोऽपसृत्य तिष्ठामि।

---

(३७) इच्छन्तमिति। यः मम भ्राता पिता तथा द्रौपदीसदृशी माता मम ईदृशं शूरत्वं न पश्यति अतस्ते वञ्चिता इति भावार्थः।

शकारः। भावे! शाअदं दे? पुत्तका थावलका चेड़ा! तब्बवि शाअदं? (४६)।

चेटः। अधइं (४७)।

विटः। मदीयं न्यासमुपनय।

शकारः। कीदिशे णाशे? (४८)।

विटः। वसन्तसेना।

शकारः। गदा (४९)।

विटः। क्व?।

शकारः। भावग्श ज्जेव पिट्ठदो (५०)।

विटः। सवितर्कम्। न गता खलु सा तया दिशा।

शकारः। तुमं कदमाए दिशाए गड़े? (५१)।

विटः। पूर्वया दिशा।

शकारः। शा वि दक्खिणाए गड़ा (५२)।

विटः। अहं दक्षिणया।

(४६) भाव! स्वागतं ते? चेट पुत्रक स्थावरक! तवापि स्वागतम्?

(४७) अथ किम्।

(४८) कीदृशो न्यासः?

(४९) गता।

(५०) भावस्यैव पृष्ठतः।

(५१) त्वं कतमया दिशा गतः?

(५२) सापि दक्षिणया गता।

शकारः। णा वि उत्तलाए (५३)।

विटः। अत्याकुलं कथयसि, न शुद्ध्यति मे अन्तरात्मा, तत्कथय सत्यम्।

शकारः। शवामि भावश्श शीशं अत्तणकेलकेहिं पादेहिं, ता णठावेहि हिअअं, एशा मए मालिदा (५४)।

विटः। सविषादम्। सत्यं त्वया व्यापादिता?।

शकारः। जइ मम वअणे ण पत्तिआअशि, ता पेक्ख पढमं लट्ठिअ शालशण्ठाणाह शूलत्तणं (५५)। इति दर्शयति।

विटः। हा! हतोऽस्मि मन्दभाग्यः! इति मूर्च्छितः पतति।

शकारः। ही ही, उवलदे भावे (५६)।

चेटः। शमश्शशदु शमश्शशदु भावे। अविआलिअं पवहणं आणन्तेण ज्जेव मए पढमं मालिदा (५७)।

(५३) नापि उत्तरया।

(५४) शपे भावस्य शीर्षमात्मीयाभ्यां, पादाभ्यां ततः संस्थापय हृदयम्, एषा मया मारिता।

(५५) यदि मम वचने न प्रत्ययसे, तत्पश्य प्रथमं राष्ट्रियश्यालसंस्थानस्य शूरत्वम्।

(५६) ही ही, उपरतो भावः।

(५७) समाश्वसितु समाश्वसितु, भावः। अविचारितं प्रवहणमानयतैव मया प्रथमं मारिता।

विटः। समाश्वस्य सकरुणम्। हा वसन्तसेने!

दाक्षिण्योदकवाहिनी विगलिता याता स्वदेशं रति-
र्हा हालङ्कृतभूषणे! सुवदने! क्रीड़ारसोद्भासिनि!।
हा सौजन्यनदि! प्रहासपुलिने! हा मादृशामाश्रये!
हा हा! नश्यति मन्मथस्य विपणिः सौभाग्यपण्याकरः॥३८

सास्रम्। कष्टं भोः कष्टम्!।

किं नु नाम भवेत् कार्य्यमिदं येन त्वया कृतम्।
अपापा पापकल्पेन नगरश्रीर्निपातिता॥ ३९ ॥

---

(३८) दाक्षिण्योदकेति। हा हेति समधिकखेदसूचनार्थमव्ययद्वयम्। अलङ्कृतभूषणे! अलङ्कृतं भूषणं यया तत् सम्बुद्धौ अलङ्कारालङ्कारस्वरूपे इत्यर्थः, सुवदने सुमुखि! क्रीड़ायां यः रसः अनुरागः तस्य उद्भासिनि! प्रकृष्टः मधुरः हासः एव पुलिनं सैकतं यस्यास्तादृशि सौजन्यनदि सुजनता प्रवाहवति! हा मादृशां विटजनानां आश्रये! दाक्षिण्यं सारल्यमेव उदकं तस्य वाहिनी नदीरूपा रतिः अनुरागः विगलिता आधारभूतायास्तव नाशात् त्वच्छरीरविच्युता सती स्वदेशं दक्षिणं देशं नदीनां दक्षिणदिग्वाहित्वं प्रसिद्धं बोध्यम्। याता गता विनष्टा इत्यर्थः। हा हा मन्मथस्य सौभाग्यान्येव सौन्दर्य्याण्येव पण्यानि तेषाम् आकरः विपणिः पण्यवीथिका विपणिः पण्यवीथिकेत्यमरः। क्रयविक्रयस्थानमित्यर्थः नश्यति। शार्दूलविक्रीड़ितं वृत्तम्।

(३९) किमिति। अनेन वसन्तसेनावधेनेति अध्याहार्य्यं नु भोः किं कार्यं भवेत् सम्पद्येत? न किमपीत्यर्थः, येन त्वया इदं स्त्रीवधरूपं कार्य्यं कृतं निष्फलमिदं स्त्रीहननमित्यर्थः। अधिकन्तु पापकल्पेन पापपुरुषादीषदूनेन त्वया अपापा निर्दोषा नगरश्रीः नगरस्य श्रीः शोभा निपातिता विनाशिता, वसन्तसेनावधे केवलं स्त्रीवधपापं न अपितु नगरं श्रीभ्रष्टं कृतमिति भावः। अनुष्टुप् वृत्तम्।

स्वगतम्। अये! कदाचिदयं पाप इदमकार्य्यं मयि सङ्क्रामयेत्। भवत्वितो गच्छामि। इति परिक्रामति।

शकार उपगम्य धारयति।

विटः। पाप! मा मा स्प्राक्षीः (ङ)। अलं त्वया गच्छाम्यहम्।

शकारः। अले! वशन्तशेणिअं शअं ज्जेव मालिअ मं दूशिअ कहिं पलाअशि? शम्पदं ईदिशे हग्गे अणाधे पाविदे (५८)।

विटः। अपध्वस्तोऽसि।

शकारः।

अत्थं शदं देमि शुवण्णअं दे कहावणं देमि शवोड्डिअं दे।
एशे दुशद्दाण फलक्कमे मे शामाण्णए भोदु मणुश्शआणं (५९)॥४०॥

---

(५८) अरे! वसन्तसेनां स्वयमेव मारयित्वा मां दूषयित्वा कुत्र पलायसे? साम्प्रतमीदृशोऽहमनाथः प्राप्तः।

(५९) अर्थात् शतं ददामि सुवर्णकं ते कार्षापणं ददामि सपोषणं ते
एष दुःशब्दानां फलक्रमो मे सामान्यको भवतु मनुष्यकाणाम्॥

---

(ङ) मा मां स्प्राक्षीः स्पृश।

(४०) अर्थमिति। सपोषणं सभोजनं भोजनसहितं सुष्ठु भोजयित्वा कार्षापणं ददामीत्यर्थः। दुःशब्दानां दुर्वचनानां वसन्तसेनावधविषयकाणामिति भावः। एषः फलक्रमः फलस्य दण्डरूपस्य क्रमः विधिः मनुष्यकाणां अन्येषामित्यर्थः सामान्यः तुल्यः भवतु वसन्तसेनावधाभियोगं ममोपरि अपातयित्वा सामान्येन अन्यान् प्रति पातय इति भावः।

विटः। धिक्, तवैवास्तु।

चेटः। भन्तं पावं (६०)।

शकारः। हसति।

विटः। अप्रीतिर्भवतु विमुच्यतां हि हासो,
धिक् प्रीतिं परिभवकारिकामनार्य्याम्।
माभूच्च त्वयि मम सङ्गतं कदाचि-
दाच्छिन्नं धनुरिव निर्गुणं त्यजामि॥ ४१॥

शकारः। भावे! पशीद पशीद, एहि, णलिणीए (च) पविशिअ कीलेम्ह (६१)।

विटः। अपतितमपि तावत् सेवमानं भवन्तं
पतितमिव जनोऽयं मन्यते मामनार्य्यम्।
कथमहमनुयायां त्वां हतस्त्रीकमेनं
पुनरपि नगरस्त्री-शङ्कितार्द्धेदृष्टम्॥ ४२॥

---

(६०) शान्तं पापम्।

(६१) भाव! प्रसीद, प्रसीद एहि, नलिन्यां प्रविश्य क्रीडावः।

---

(४१) अप्रीतिरिति। अप्रीतिः अप्रणयः भवतु त्वया सहेति शेषः, हासः विमुच्यतां परिभवकारिकां निन्दाजननीम् अनार्य्याम् असाध्वीं प्रीतिं दुर्जनेन सहेति शेषः धिक्। त्वयि मम सङ्गतं मिलनं कदाचित् अपीति शेषः माभूच्च न भवतु इत्यर्थः निर्गुणं गुणाः दयादाक्षिण्यादयः तद्रहितं मौर्व्वीविहीनं वा त्वाम् आच्छिन्नं सगुणा निलग्नं धनुरिव त्यजामि। प्रहर्षिणी वृत्तम्।

(च) नलिन्यां नलिनानि पद्मानि सन्त्यस्यामिति नलिनी पद्माकरः तस्याम्।

(४२) अपतितमिति। अयं जनः साधारणमानव इत्यर्थः अपतित-

वकरचम् । वसन्तसेने !

अन्यस्यामपि जातौ मा वेश्याभूस्त्वं हि सुन्दरि ! ।
चारित्र्यगुणसम्पन्ने जायेथा विमले कुले ॥ ४३ ॥

शकारः । मम केलके पुप्फकलण्डक जिण्णुज्जाणे वशन्तशेणिअं मालिअ कहिं पलाअशि ? एहि, मम आवुत्तश्श अग्गदो ववहालं (क) देहि (६२) इति धारयति ।

विटः । आः ! तिट्ठ जाल्म ! इति खड्गमाकर्षति ।

शकारः । सभयमपसृत्य । किं ले ! भीदेशि ? ता गच्छ (६३) ।

(६२) मदीय पुष्पकरण्डक जीर्णोद्याने वसन्तसेनां मारयित्वा कुत्र पलायसे ? एहि मम आवुत्तस्याग्रतो व्यवहारं देहि ।

(६३) किं रे ! भीतोऽसि ? तद्गच्छ ।

मपि अपापकारिणमपि मां भवन्तं सेवमानम् अतएव पतितमिव अनार्य्यम् असाधुं मन्यते सम्भावयति, अतः अहं हतश्लोकं विनाशित-वसन्तसेनं, अतएव नगरस्त्रीभिः पुरकामिनीभिः शङ्कितम् अस्मानपि अयं कदाचिदेव घातयिष्यतीति सन्दिग्धं यथा तथा अर्द्धाक्षिभिः चक्षुः-र्भितनेत्रैः दृष्टः तम् एनं त्वां पुनरपि कथम् अनुयायाम् अनुगच्छेयं न कदाप्यनुगच्छेयमित्यर्थः । अत्र मालिनी वृत्तम् ।

(४४) अन्यस्यामिति । हे सुन्दरि ! त्वम् अन्यस्यामपि जातौ जन्मनि जन्मान्तरे इत्यर्थः वेश्या माभूः, हे चारित्र्यगुणसम्पन्ने सुचरित्रे गुणशालिनि च ! विमले विशुद्धे कुले जायेथा उत्पद्यस्व । अनुष्टुप् वृत्तम् ।

(क) आवुत्तस्य भगिनीपतेः राज्ञ इति यावत् भगिनीपतिरावुत्त इत्यमरः व्यवहारं वधाभियोगे उत्तरमित्यर्थः ।

विटः। स्वगतम्। न युक्तमवस्थातुम्, भवतु, यत्रार्य्य-शर्व्विलकचन्दनकप्रभृतयः सन्ति तत्र गच्छामि। इति निष्क्रान्तः।

शकारः। णिधणं गच्छ। अले थावलका पुत्तका! कीलिशे मए कडे? (६४)।

चेटः। भट्टके! महन्ते अकज्जे कडे (६५)।

शकारः। अले चेडे! किं भणाशि अकज्जे कडे त्ति? भोदु एव्वं दाव। नानाभरणान्यवतोर्य्य। गेह्ण एदं अलङ्का-लअं, मए ताव दिस्से, जेत्तिके वेले अलङ्कलेमि तेत्तिकं वेलं मम अस्सं तव (ख) (६६)।

चेटः। भट्टके ज्जेव एदे शोहन्ति, किं मम एदेहिं (६७)

शकारः। ता गच्छ एदाइं गोणाइं गेह्णिअ मम केल-

---

(६४) निधनं गच्छ। अरे स्थावरक पुत्रक! कीदृशं मया कृतम्?

(६५) भट्टक! महदकार्य्यं कृतम्।

(६६) अरे चेट! किं भणसि अकार्य्यं कृतमिति? भवतु, एवं तावत्। गृहाणेममलङ्कारं, मया तावद्दत्तं यावत्यां वेलायाम् अल-ङ्करोमि तावतीं वेलां मम आज्ञा तव।

(६७) भट्टके एव एते शोभन्ते, किं मम एतैः।

---

(ख) मया तावद्दत्तम् इमम् अलङ्कारं गृहाण, यावत्यां वेलायां यदा इत्यर्थः अहम् अलङ्करोमि गात्रं भूषयामि, तावतीं वेलां प्राप्येति शेषः तदैवेत्यर्थः मम तव आज्ञा, त्वामादिशामि अलङ्कारं परिधातु-मित्यर्थः।

काए पाशाद बालग्ग पदोलिकाए (ग) चिट्ठ, जाव हग्गे आअच्छामि (६८) :

चेटः। जं भट्टके आणवेदि (६९)। इति निष्क्रान्तः।

शकारः। अत्तपलित्ताणे भावे गदे अदंशणं, चेडे वि पाशाद बालग्ग-पदोलिकाए णिअलपूलिदं कदुअ थाव-दूश्शं। एव्वं मन्ते लक्खिदे भोदि, ता गच्छामि, अधवा, पेक्खामि दाव एदं, किं एशा मला, आधवा पुणो वि माल-दूश्शं?। अवलोक्य। कधं शुमला। भोदु, एदिणा पावाल-एण पच्छादेमि णं। अधवा, णामङ्किदे एशे, ता के वि अज्जपुलिशे पच्चहि जाणेदि। भोदु, एदिणा वादाली-पुञ्जिदेण (घ) शुक्खपण्णपुडेण पच्छादेमि। तथा कृत्वा विचिन्त्य। भोदु, एव्वं दाव, शम्पदं अधिअलणं गच्छिअ बवहालं लिहावेमि। जहा अत्थश्श कालणादो शत्थवाह-चालुदत्ताकेण मम केलकं पुप्फकलण्डकं जिण्णुज्जाणं पवे-शिअ बशन्तशेणिआ वावादिदे त्ति।

(६८) तद्गच्छ, एतौ प्रवहणौ गृहीत्वा मदीयायां प्रासादबालाग्र-प्रतोलिकायां तिष्ठ यावदहमागच्छामि।

(६९) यद्भट्टक आज्ञापयति।

---

(ग) प्रासादबालाग्रप्रतोलिकायां प्रासादस्य बहिर्द्वारिकाया बाला-याम् अभिनवनिर्म्मितायाम् अग्रप्रतोलिकायां प्रधानरथ्यायाम्।

(घ) आत्मपरित्राणे आत्मनः परित्राणार्थमित्यर्थः, निगडपूरितं पाशबद्धमित्यर्थः, नामाङ्कितः मम नामचिह्नित इत्यर्थः। वातालो-ड्डितेन वायुसमुद्धूतेन।

चालुदत्तविणाशाय कलेमि कवड़ं णवं ।
णअलीए विशुद्धाए पशुघादं व्व दालुणम् (७०) ॥४४॥

भोदु, गच्छामि । इति निष्क्रम्य दृष्ट्वा सभयम् । अविद-मादिके ! (ङ) जेण जेण गच्छामि मग्गेण, तेण ज्जेव एशे दुट्टशमणके गहिद-कशाओदकं चीवलं गेह्णिअ आअ-च्छदि, एशे मए णशिच्छिअ वाहिदे कदवेले कदा वि मं पेक्खिअ, एदेण मालिदे त्ति पआशइश्शदि, ता कधं

---

(७०) आत्मपरित्राणे भावो गतोऽदर्शनम्, चेटमपि प्रासाद-बाला-प्रतोलिकायां निगडपूरितं कृत्वा स्थापयिष्यामि । एवं मन्त्रो रक्षितो भवति । तद्गच्छामि, अथवा, पश्यामि तावदेनाम्, किमेषा मृता ? अथवा पुनरपि मारयिष्यामि ? कथं ! सुमृता । भवतु, एतेन प्रावारकेण प्रच्छादयाम्येनाम्, अथवा नामाङ्कित एषः, तत्कोऽपि आर्यपुरुषः प्रत्यभिज्ञास्यति । भवतु, एतेन वातालीपुञ्जितेन शुष्कपर्ण-पुटेन प्रच्छादयामि । भवतु, एवं तावत् साम्प्रतमधिकरणं गत्वा व्यव-हारं लेखयामि, यथा अर्थस्य कारणात् सार्थवाहकचारुदत्तकेन मदीयं पुष्पकरण्डकं जीर्णोद्यानं प्रवेश्य वसन्तसेना व्यापादितेति ।

चारुदत्तविनाशाय करोमि कपटं नवम् ।
नगर्यां विशुद्धायां पशुघातमिव दारुणम् ॥

---

(४४) चारुदत्तेति । कपटं कूटप्रयोगं, पशुघातमिव पशोः घातः मत् पशुघातमिति क्रियाविशेषणम् । अन्यत् सुगमम् ।

(ङ) अविदमादिके इति अव्ययं खेदविस्मयभयद्योतकम् । वाहितः ताडितः ।

गच्छामि। अवलोक्य। भोदु, एदं अद्धपडिदं पाआलखण्डं उल्लङ्घिअ गच्छामि।

एशे म्हि तुलिद तुलिदे लङ्का-णअलीए गअणे गच्छन्ते।
भूमीए पाआले हणूमशिहले विअ महेन्दे (७१)॥४५॥

इति निष्क्रान्तः।

प्रविश्यापटीक्षेपेण संवाहकोभिक्षुः। पक्खालिदे एशे मए चीवलखण्डे, किं णु हु शाहाए शुक्खावइश्शं? इध वाणला विलुम्पन्ति। किं णु हु भूमीए? धूलीदोशे होदि. ता कहिं पशालिअ शुक्खावइश्शं?। दृष्ट्वा। भोदु, इध वादालीपुञ्जिदे शुक्खवत्तसञ्चए पशालइश्शं। तथा कृत्वा। णमो बुद्धश्श। इत्युपविशति। भोदु, धम्मक्खलाइं उदाह-लामि। पञ्चजण जेण मलिदा इत्यादि पूर्वोक्तं पठति। अधवा, अलं मम एदेण शग्गेण, (च) जाव ताए बुद्धोवाशिआए

(७१) भवतु, गच्छामि। अविदमादिके! येन येन गच्छामि मार्गेण, तेनैव एष श्रमणको गृहीतकषायोदकं चीवरं गृहीत्वा आगच्छति, एष मया नासां छित्त्वा वाहितः कृतवैरः कदापि मां प्रेक्ष्य एतेन मारिता, इति प्रकाशयिष्यति, तत्कथं गच्छामि? भवतु एतम् अर्द्धपतितं प्राकार खण्डमुल्लङ्घ्य गच्छामि।

एषोऽहं त्वरित-त्वरितो लङ्कानगर्यां गगने गच्छन्।
भूम्यां पाताले हनूमच्छिखरे इव महेन्द्रः॥

---

(४५) एष इति। हनुमानिव महेन्द्रशिखरे इति वक्तव्ये हनूमच्छिखरे इव महेन्द्र इति शकारोक्तिः।

(च) एतेन स्वर्गेण स्वर्गगमनकामनया एतत् पाठेनेत्यर्थः।

पच्चुव आलं ण कालेमि, जाए दसाणं सुवसुकाणं किदे जूदिअलेहिं णिक्कीदे, तदो पहुदि ताए कीदं विअ अत्ताणअं अवगच्छामि। इहा। किं णु हु पसोदले समुस्सशदि ? अथवा,

वादादवेण तत्ता, चीवल-तोएण तिम्मिदा पत्ता।
एदे वित्थिण्णपत्ता मत्ते पत्ता विअ फुलन्ति (७२) ॥४६॥

वसन्तसेना सञ्ज्ञां लब्ध्वा हस्तं दर्शयति।

---

(७२) प्रक्षालितमेतन्मया चीवरखण्डम्, किं नु खलु शाखायां शुष्कं करिष्यामि ? इह वानरा विलुम्पन्ति। किं नु खलु भूम्याम् ? धूलीदोषो भवति, तत् कुत्र प्रसार्य शुष्कं करिष्यामि ? भवतु, इह वाताली‍पुञ्जिते शुष्कपत्रसञ्चये प्रसारयिष्यामि। नमो बुद्धाय। भवतु, धर्माक्षराणि उदाहरामि। अथवा अलं ममैतेन स्वर्गेण, यावत्तस्या वसन्तसेनाया बुद्धोपासिकायाः प्रत्युपकारं न करोमि, यया दशानां सुवर्णकानां कृते द्यूतकराभ्यां निष्क्रीतः ततः प्रभृति तया क्रीतमिवात्मानमवगच्छामि किं नु खलु पर्णोदरे समुच्छ्वसिति ? अथवा,

वातातपेन तप्तानि चीवरतोयेन स्तिमितानि पत्राणि।
एतानि विस्तीर्णपत्राणि मन्ये पत्राणीव स्फुरन्ति॥

(४७) वातातपेनेति। वातातपेन वातेन आतपेन च तप्तानि शोषं गतानि एतानि पत्राणि चीवरतोयेन चीवरं यतीनां वस्त्रखण्डं, तस्य तोयेन तद्गलितजलेन स्तिमितानि सिक्तानि सन्ति विस्तीर्णपत्राणि प्रसारितपक्षाणि पत्त्राणीव पक्षिण इव पत्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोरिति मेदिनी। स्फुरन्ति स्पन्दन्ते इति मन्ये तर्कयामीत्यर्थः। आर्यावृत्तम्, उपमालङ्कारश्च।

भिक्षुः । हा हा ! सुवालङ्कालभूशिदे इत्थिआ हत्थे णिक्कमदि ! कधं, दुदिए वि हत्थे ! । बहुविधं निरूप्य । पच्चभिआणामि विअ एदं हत्थं । अधवा, किं विचालेण ? सच्चं शे ज्जेव हत्थे जेण मे अभअं दिण्णं । भोदु, पेक्खिस्सं । नाट्येनोद्घाट्य दृष्ट्वा प्रत्यभिज्ञाय च । शा ज्जेव बुद्धोवाशिआ (७३)

वसन्तसेना पानीयमाकाङ्क्षति ।

भिक्षुः । कधं ! उदअं मग्गेदि ! दूले च दिग्घिआ, किं दाणिं एत्थ कलइस्सं ! । भोदु, एदं चीवलं शे उवलि गालइस्सं (७४) (क) तथा करोति ।

वसन्तसेना । संज्ञां लब्ध्वा उत्तिष्ठति । भिक्षुः पटान्तेन वीजयति ।

वसं । अज्ज ! को तुमं ? (७५) ।

भिक्षुः । किं मं ण शुमलेदि बुद्धोवाशिआ दशशुवण्णणिक्कीदं ? (७६) ।

---

(७३) हा हा ! सुवालङ्कारभूषितः स्त्रीहस्तो निष्क्रामति । कथं ! द्वितीयोऽपि हस्तः ! प्रत्यभिजानामीव एतं हस्तम् । अथवा, किं विचारेण ? सत्यं स एव हस्तो येन मे अभयं दत्तम् । भवतु, पश्यामि । सैव बुद्धोपासिका ।

(७४) कथमुदकं याचते ! दूरे च दीर्घिका । किमिदानीमत्र करिष्यामि ? भवतु, एतच्चीवरम् अस्या उपरि गालयिष्यामि ।

(७५) आर्य्य ! कस्त्वम् ?

(७६) किं मां न स्मरति बुद्धोपासिका दशसुवर्णनिष्क्रीतम् ?

(क) गालयिष्यामि निष्पीड्य जलं दास्यामीत्यर्थः ।

वसं। सुमरामि, ण उण जधा अज्जो भणादि, (ज) वरं अहं उवरदा ज्जेव (७७)।

भिक्षुः। बुड्ढोवासिए! किं णेदं? (७८)।

वसं। यन्निर्वेदम्। जं सरिसं वेसभावस्स (७६)।

भिक्षुः। उट्ठेउ उट्ठेउ बुड्ढोवासिआ। एदं पादव समीवजादं लदं ओलम्बिअ (८०)। इति लतां नामयति। वसन्तसेना गृहीत्वा उत्तिष्ठति।

भिक्षुः। एदस्सिं विहाले मम धम्मबहिणिआ चिट्ठदि, तहिं समस्सस्सिदमणा भविअ उवासिआ गेहं गमिस्सदि, ता सणिअं सणिअं गच्छदु बुड्ढोवासिआ। इति परिक्रामतः। दृष्ट्वा। ओसलध अज्जा! ओसलध, एसा तलुणी इत्थिआ, एसो भिक्खु त्ति सुद्धे मम एसे धम्मे, हत्थसञ्जद मुहसञ्जद-

(७७) स्मरामि, न पुनर्यथा आर्यो भणति, वरमहमुपरतैव।

(७८) बुद्धोपासिके! किं न्विदम्?

(७६) यत्सदृशं वेशभावस्य।

(८०) उत्तिष्ठतु उत्तिष्ठतु बुद्धोपासिका एतां पादपसमीपजातां लतामवलम्ब्य।

---

(ज) न पुनरार्यो यथा भणति दशसुवर्णनिष्क्रीतमिति यद् कथयति तत् न स्मरामि इत्यनेन वसन्तसेनाया महदौदार्य्यं सूचितम्।

इन्दिअसञ्जदे, शे क्खु माणुशे, किं कलेदि तश्श लाअउले ? पललोअ हत्थे णिच्चले (८१) (भ)।

इति निष्क्रान्ताः सर्वे ।

इति मृच्छकटिकायां वसन्तसेनामोटनो नामाष्टमोऽङ्कः ।

---

(८१) एतस्मिन् विहारे मम धर्मभगिनी तिष्ठति, तत्र समाश्वस्तमना भूत्वा उपासिका गेहं गमिष्यति, तत् शनैः शनैर्गच्छतु बुद्धोपासिका। अपसरत आर्याः! अपसरत, एषा तरुणी स्त्री, एष भिक्षुरिति शुद्धो मम एष धर्मः. हस्तसंयतः मुखसंयतः इन्द्रिय संयतः स खलु मनुष्यः, किं करोति तस्य राजकुलं परलोको हस्ते निश्चल इति ।

(भ) विहारे आश्रमे, बुद्धोपासनास्थाने इत्यर्थः विहारो भ्रमणे स्कन्धे लीलायां सुगतालये इति मेदिनी। हस्तसंयतः हस्तेन संयतः नियमितः संयतहस्तः यः खलु हस्ताभ्यां किमपि अकार्य्यं न करोतीत्यर्थः, मुखसंयतः मुखेन संयतः संयतमुखः यो हि मुखेन कमपि कटुवाक्यं कथयतीत्यर्थः, तथा इन्द्रियसंयतः संयतेन्द्रियः यश्च इन्द्रियाणि चक्षुरादीनि विषयेभ्यः निगृह्णातीत्यर्थः, स खलु एव मनुष्यः मनुष्यत्वेन गणय इत्यर्थः, तस्य हस्ते परलोकः स्वर्गः निश्चलः कदाचिदपि स स्वर्गात् न भ्रश्यतीत्यर्थः ।

# नवमोऽङ्कः ।

ततः प्रविशति शोधनकः ।

शोधनकः । आणत्तम्हि अधिअरणभोइएहिं, अरे सोह-णआ ! ववहारमण्डवं गदुअ आसणाइं सज्जीकरेहि त्ति । ता जाव अधिअरणमण्डवं सज्जिदुं गच्छामि । परिक्रम्यावलोक्य च । एदं अधिअरणमण्डवं, एस पविसामि । प्रविश्य सम्मार्ज्यासनमाधाय । विवित्तं (क) कारिदं मए अधिअरण-मण्डवं विरइदा मए आसणा, ता जाव अधिअरणिआणं उण णिवेदेमि । परिक्रम्यावलोक्य च । कधं, एसो रट्टिअ-स्सालो दुट्ट दुज्जण-मणुस्सो इदो एव्व आअच्छदि ता दिट्ठि-पधं परिहरिअ गमिस्सं (१) । इत्येकान्ते स्थितः ।

---

(१) आज्ञप्तोऽस्मि अधिकरणभोजकैः, अरे शोधनक ! व्यवहार-मण्डपं गत्वा आसनानि सज्जीकुरु इति, तत् यावदधिकरण-मण्डपं

---

(क) अधिकरणभोजकैः अधिक्रियते विचार्य्यते अस्मिन्निति अधि-करणं विचारालयः तस्य भोजकाः भोगकारिणः विचारका इत्यर्थः तैः । व्यवहारमण्डपं व्यवहारः विवादः विवादो व्यवहारः स्यादित्य-मरः विचारो वा तदुक्तं मिताक्षरायां विनाशार्थेऽवसन्देहे हरणं हार उच्यते । नानासन्देहहरणाद्व्यवहार इति स्मृत इति परस्परं मनु-ष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यात् न्यायाद् व्यवस्थानं व्यवहार उदाहृत इति च । तस्य मण्डपं मटं विचारालय इत्यर्थः तत् । विविक्तं विशोधितं सम्यक् मार्जितमित्यर्थः विविक्तौ पूतविजनावित्यमरः ।

ततः प्रविशति उज्ज्वलवेशधारी शकारः ।

शकारः । ण्हादेऽहं शलिलजलेहि पाणिएहिं

उज्जाणे उववणे काणणे णिशण्णे ।

णालीहिं सह जुवदीहि इत्थिआहिं,

गन्धव्वे विअ शुहिदेहि अङ्गकेहिं ॥ १ ॥

खणेण गण्ठी, खण जूलके मे, खणेण मे चम्पुलकुन्तले वा ।

खणेण मुक्के, खण उद्धचूडे, चित्ते विचित्ते हगे लाअशाले ॥२॥

अवि अ । विशगण्ठि-गब्भ-पविट्टेण विअ कीडएण अन्तलं मग्गमाणेण (ख) पाविदं मए महदन्तलं. ता कश्श एदं

---

षञ्जितुं गच्छामि । इदमधिकरणमण्डपम्, एतत् प्रविशामि । विविक्तं कारितं मयाधिकरणमण्डपम्, विरचितानि च मयासनानि, तत् यावदधिकरणिकानां निवेदयामि । कथमेष राष्ट्रियश्यालो दुष्ट-दुर्जन-मनुष्य इत एवागच्छति, तद् दृष्टिपथं परिहृत्य गमिष्यामि ।

(१) स्नात इति । सुहितैः सुभूषितैरित्यर्थः अङ्गकैरिति विशेषणे तृतीया, अन्यत् सुगमं शकारवाक्यात् दोषस्य पुनरुक्तत्वादिर्मार्जनीयः । प्रहर्षिणी वृत्तम् ।

(२) खणेति । गण्ठिः केशबन्धः, खणजूटकः क्षणेन जूटकः जटा, चम्पुलकुन्तलाः चम्पुलाः केशपाशाः क्षणेन मुक्ताः, बन्धनात् भ्रंशिताः, ऊर्द्धचूडा उपरिस्थिता शिखा पूर्ववत् शकारवाक्यमिदम् । उपजाति वृत्तम् ।

(ख) विषग्रन्थिगर्भप्रविष्टेन विषस्य मृणालस्य ग्रन्थिः विषग्रन्थिः तस्य गर्भः अभ्यन्तरं तत्र प्रविष्टः तेन, अन्तरम् अवकाशं बहिर्निर्यातमार्गं मार्गमाणेन अन्वेषयता इत्यर्थः ।

किविण-चेट्ठिअं पाडइस्सं? स्मृत्वा। शुमलिदं मए, दलिद्दचालुदत्तस्स एदं किविण-चेट्ठिअं पाडइस्सं। अण्णं च दलिद्दे क्खु शे, तस्स शव्वं शम्भावीअदि। भोदु, अधिअलणमण्डवं गदुअ अग्गदो ववहालं लिहाविदश्शं, जधा चालुदत्तेण वशन्तशेणिआ मोडिअ मालिदा, ता जाव अधिअलणमण्डवं ज्जेव्व गच्छामि। परिक्रम्यावलोक्य च। एदं तं अधिअलणमण्डवं, एत्थ पविशामि। प्रविश्यावलोक्य च। कधं, आशणाइं दिण्णाइं चिट्ठन्ति, दाव आअच्छन्ति अधिअलणभोइआ, गदुअ दुव्वचत्तले मुहुत्तअं उवविशिअ पडिवालइश्शं (२) (ग)। तथा स्थितः।

(२) स्नातोऽहं सलिलजलैः पानीयैः, उद्याने उपवन-कानने निषण्णः।
नारीभिः सह युवतीभिः स्त्रीभिर्गन्धर्व इव सुविहितैरङ्गैः॥
क्षणेन ग्रन्थ्यः, क्षणजूटको मे, क्षणेन मे चञ्चलकुन्तला वा।
क्षणेन मुक्ताः क्षणमूर्ध्वचूडा, चित्रो विचित्रोऽहं राजश्यालः॥

कथं च। विषग्रन्थिगर्भप्रविष्टेनेव कीटकेनान्तरं मार्गमाणेन प्राप्तं मया महदन्तरम्, तत्कस्येदं कृपणचेष्टितं पातयिष्यामि? आं, स्मृतम्, दरिद्रचारुदत्तस्य इदं कृपणचेष्टितं पातयिष्यामि। अन्यच्च दरिद्रः खलु सः, तस्य सर्वं सम्भाव्यते। भवतु, अधिकरणमण्डपं गत्वा अग्रतो व्यवहारं लेखयिष्यामि, यथा चारुदत्तेन वसन्तसेना मोटयित्वा मारिता, तत् यावदधिकरणमण्डपमेव गच्छामि। एतत्तदधिकरणमण्डपम्, अत्र प्रविशामि। कथमासनानि दत्तानि तिष्ठन्ति, तावदागच्छन्ति अधिकरणभोजकाः, एतस्मिन् दूर्वाचत्वरे मुहूर्तमुपविश्य प्रतिपालयिष्यामि।

(ग) इदं वसन्तसेनावधरूपं कृपणचेष्टितं क्रूरव्यवहारं कस्य

शोधनकः। अन्यतः परिक्रम्य पुरो दृष्ट्वा। एदे अधिअरणिआ आअच्छन्ति। ता जाव उवसप्पामि (३)। इत्युपसर्पति।

ततः प्रविशति श्रेष्ठिकायस्थादि-परिवृतोऽधिकरणिक (घ)।

अधि। भो भोः! श्रेष्ठिकायस्थौ (ङ)।

तौ। आणवेदु अज्जो (४)।

अधि। अहो! व्यवहारपराधीनतया दुष्करं (च) खलु परचित्तग्रहणमधिकरणिकैः।

छन्नं कार्य्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं,
स्वान् दोषान् कथयन्ति नाधिकरणे रागाभिभूताः स्वयम्।
तैः पक्षापरपक्षवर्द्धितबलैर्दोषैर्नृपः स्पृश्यते,
सङ्क्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः॥ २॥

(३) एते अधिकरणिका आगच्छन्ति, तद् यावदुपसर्पामि।
(४) आज्ञापयतु आर्य्यः।

---

उपसर्पति शेषः। दूरोच्चत्वरं दूर्वापूर्णाङ्कनभूमौ। प्रतिपालयिष्यामि प्रतीक्षिष्ये।

(घ) अधिकरणिकः विचारकर्त्ता। श्रेष्ठी वणिक् तस्य द्रव्यादि-परीक्षार्थमधिकरणे नियोगमाह कात्यायनः यथा कुलशीलवयोवृत्त-वित्तवद्भिरधिष्ठितमिति।

(ङ) कायस्थः प्रसिद्धः तस्य लेखनादिकार्य्यसम्पादनार्थं नियोगः कर्त्तव्यः।

(च) व्यवहारपराधीनतया व्यवहारे विचारे या पराधीनता परेषां साक्षिलेख्यादीनाम् अधीनता तया परेषाम् अर्थिप्रत्यर्थिप्रभृतीनां चित्तग्रहणं मनोगतभावबोधनमित्यर्थः।

(२) छन्नमिति। पुरुषाः अभियोक्तृप्रभृतयः कार्य्यं न्यायेन

अपि च।

छन्नं दोषमुदाहरन्ति कुपिता न्यायेन दूरीकृताः,
स्वान् दोषान् कथयन्ति नाधिकरणे, सन्तोऽपि नष्टा ध्रुवम्।
ये पक्षापरपक्ष दोषसहिताः पापानि सङ्कुर्वते,
सङ्क्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः॥ ४॥

नीत्या युक्त्या वा दूरीकृतं निराकृतं नीतिरहितम् अयुक्तं वा इत्यर्थः तथा छन्नं असत्यं सत्येन सत्यमसत्येन वा आच्छादितं यथा तथा उपक्षिपन्ति कथयन्ति यतः ते स्वयं रागाभिभूताः रागेण अनुरागेण प्रणयेन क्रोधेन वा अभिभूताः तदधीना इत्यर्थः अधिकरणे स्वान् निजान् दोषान् न कथयन्ति पक्षापरपक्षवर्द्धितबलैः पक्षः वादिपक्षीयजनः, अपरपक्षः प्रतिवादिपक्षीयजनः ताभ्यां वर्द्धितं पोषितं बलं येषां तादृशैः तैः दोषैः स्वयः स्पृश्यन्ते उभयपक्षीयवाग्जालैराच्छन्नमतितया किं कर्त्तव्यताज्ञानविरहेण कदाचित् असत्यस्य सत्यवन्निर्णयात् कदाचिच्च सत्यस्य असत्यवन्निर्णयाच्चेति भावः। व्यवहारस्य अयथादर्शने अदर्शने च दोषमाह मनुः यथा "अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरकञ्चैव गच्छतीति। अतः सङ्क्षेपात् सामान्यात् किं विस्तरेणेति भावः द्रष्टुः व्यवहारदर्शिनः अपवाद एव निन्दा एव सुलभः, गुणस्तु प्रशंसालाभस्तु दूरे दूरवर्त्ती न सुलभ इत्यर्थः।

(४) उक्तमर्थं पुनर्भङ्ग्यन्तरेणाह छन्नमिति। ये कुपिताः क्रोधपरतन्त्राः अतएव न्यायेन नीत्या दूरीकृताः नीतिविच्युताः सन्तः अधिकरणे छन्नं कदाचित् सत्यमसत्येन कदाचिद्वा असत्यं सत्येन आवृतं दोषं पापम् अन्योऽन्यस्येति शेषः, उदाहरन्ति, सन्तोऽपि साधवः अपि स्वान् दोषान् न कथयन्ति, तथा पक्षापरपक्षदोषसहिताः उभयपक्षीयदोषदूषिताः सन्तः पापानि संकुर्वते सम्यक्, आचरन्ति ते ध्रुवं

यतः। अधिकरणिकः (क) खलु।

शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधन-
स्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः।
क्लीवान् पालयिता शठान् व्यथयिता धर्म्योऽतिलोभान्वितो
द्वार्भावे परतत्त्वबद्धहृदयो राज्ञश्च कोपापहः॥ ५॥

---

निश्चितं नष्टाः नाशं गताः उभयलोकाभ्यां भ्रष्टा भवन्तीत्यर्थः, अन्यत्तु पूर्ववदुक्तम्।

(क) अधिकरणिकः अधिकरणस्य अयम् अधिकरणिकः अधिकरण-सम्बन्धी व्यवहारदर्शीत्यर्थः अधिकरणशब्दादिदमर्थे णिकप्रत्ययः।

(५) तल्लक्षणमाह शास्त्रज्ञ इति। शास्त्रज्ञः, धर्मशास्त्राभिज्ञः कपटस्य कूटस्य अर्थिप्रत्यर्थिप्रयुक्तस्येति भावः अनुसारे आविष्करणे कुशलः निपुणः, वक्ता वचनचतुरः न च क्रोधनः क्रोधशून्य इत्यर्थः, मित्रपरस्वकेषु मित्रेषु परेषु अनात्मीयेषु तथा स्वकेषु स्वजनेषु तुल्यः समदर्शी अपक्षपातीत्यर्थः, चरितं अर्थिप्रत्यर्थिनोरिति शेषः विवादविषयीभूतमिति यावत् दृष्ट्वैव विचारेण ज्ञात्वैवेत्यर्थः दत्तम् उत्तरं जयपराजयरूपं येन तथाभूतः, क्लीवान् अविक्रमान् असमर्थानित्यर्थः पामे क्लीवं नपुंसकं षण्ढेऽन्यवदविक्रमे इति मेदिनी। पालयिता दुर्जनेभ्यः रक्षिता इत्यर्थः, शठान् दुर्जनान् व्यथयिता दण्डयिता, धर्म्यः धर्मादनपेते कर्मणि अतिलोभान्वितः अतिलुब्धः धर्मपरायण इत्यर्थः द्वार्भावे द्वाः द्वारम् अभ्युपायः द्वारं निर्गमनेऽपि स्यादभ्युपाये इति मेदिनी, तस्य भावः तस्मिन् उपाये सतीत्यर्थः परेषां अर्थिप्रत्यर्थिनां यत् तत्त्वं याथार्थ्यं तस्मिन् तन्निर्णये इत्यर्थः बद्धहृदयः आसक्तमनाः परतत्त्वानुसन्धाने समाहितचित्तः तथा राज्ञः नियोजकस्य नृपतेः यः कोपः अन्यथा व्यवहारदर्शनादिति भावः तम् अपहन्ति नाशयन्तीति कोपनाशकः नियुक्तेन यथा कर्त्तव्यं तत्कर्त्ता इत्यर्थः।

श्रेष्ठिकायस्थौ । अज्जस्स वि णाम गुणे दोसो त्ति वुच्चदि, जइ एव्वं, ता चन्दालोए वि अन्धआरो त्ति वुच्चदि (५) ।

अधि । भद्र शोधनक ! अधिकरणमण्डपस्य मार्गमादेशय ।

शोधनकः । एदु एदु अधिअरणभोइओ एदु (६) । इति परिक्रामन्ति ।

शोधनकः । एदं अधिअरणमण्डवं, ता पविसन्तु अधिअरणभोइआ । सर्वे च प्रविशन्ति (७) ।

अधि । भद्र शोधनक ! वहिर्निष्क्रम्य ज्ञायताम्, कः कः कार्य्यार्थीति ।

शोधनकः । जं अज्जो आणवेदि । इति निष्क्रम्य । अज्जा अधिअरणिआ भणन्ति, को को इध कज्जत्थी त्ति (८) ।

शकारः । सहर्षम् । उवत्थिए अधिअलणिए । साटोपं परिक्रम्य । हग्गे वलपुलिशे मणुश्शे वाशुदेवे लट्ठिअशाले लाअशाले कज्जत्थी (९) ।

(५) आर्य्यस्यापि नाम गुणे दोष इति उच्यते, यद्येवं, तदा चन्द्रालोकेऽपि अन्धकार इत्युच्यते ।

(६) एतु एतु अधिकरणभोजक एतु ।

(७) एतदधिकरणमण्डपं तत्प्रविशन्तु अधिकरणभोजकाः ।

(८) यदार्य्य आज्ञापयति । आर्य्या अधिकरणिका भणन्ति, कः क इह कार्य्यार्थीति ।

(९) उपस्थिता अधिकरणिकाः । अहं वरपुरुषो मनुष्यो वासुदेवो राष्ट्रियश्यालो राजश्यालः कार्य्यार्थी ।

शोधनकः । ससंभ्रमम् । हीमादिके ! पढमं ज्जेव रट्टिअ-साले कज्जत्थी ! । भोदु, अज्ज ! मुहुत्तं चिट्ठ, दाव अधिअरणिआणं णिवेदेमि । उपगम्य । अज्जा ! एसो क्खु रट्टिअसालो कज्जत्थी ववहारं उवत्थिदो (१०) ।

अधि । कथं ! प्रथममेव राष्ट्रियश्यालः कार्य्यार्थी । यथा सूर्य्योदये उपरागो महापुरुषनिपातमेव कथयति । शोधनक ! व्याकुलेनाद्य (ज) व्यवहारेण भवितव्यम्, भद्र ! निष्क्रम्योच्यतां, गच्छ, अद्य न दृश्यते तव व्यवहार इति ।

शोधनकः । जं अज्जो आणवेदि त्ति (११) । निष्क्रम्य शकारमुपगम्य । अज्ज ! अधिअरणिआ भणन्ति, अज्ज गच्छ ण दीशदि तव ववहारो (१२) ।

शकारः । सक्रोधम् । किं ण दीशदि मम ववहाले ? जइ ण दीशदि, तदो आउत्तं लाआणं पालअं बहिणीवदिं विसविअ बहिणिं अत्तिकं च विसविअ एदं अधिअलणिअं

(१०) हन्त ! प्रथममेव राजश्यालः कार्य्यार्थी । भवतु, आर्य्य ! मुहूर्त्तं तिष्ठ, तावदधिकरणिकानां निवेदयामि । आर्य्या ! एष खलु राष्ट्रियश्यालः कार्य्यार्थी व्यवहारमुपस्थितः ।

(११) यदार्य्य आज्ञापयति ।

(१२) आर्य्य ! अधिकरणिका भणन्ति, अद्य गच्छ, न दृश्यते तव व्यवहारः ।

---

(ज) उपरागः राहुणा ग्रास इत्यर्थः व्याकुलेन बहुव्यपस्थिते-नेत्यर्थः ।

फेलिअ एत्थ अत्तं अधिअलणिअं ठावइस्सं (१३)। इति गन्तुमिच्छति ।

शोधनकः । अज्ज रट्ठिअसालअ ! मुहुत्तअं चिट्ठ, दाव अधिअरणिआणं निवेदेमि । अधिकरणिकानुपगम्य । एसो रट्ठिअसालो कुविदो भणादि (१४) । इति तदुक्तं भणति ।

अधि । सर्वमस्य मूर्खस्य सम्भाव्यते । भद्र ! उच्यताम्, आगच्छ, दृश्यते तव व्यवहारः ।

शोधनकः । शकारमुपगम्य । अज्ज ! अधिअरणिआ भणन्ति, आअच्छ (१५) ।

शकारः । पढमं भणन्ति न दीशदि, सम्पदं दीशदि त्ति, ता णाम भीद भीदा अधिअलणभोइआ, जेत्तिअं हम्मे भणिश्शं तेत्तिअं पत्तिआवइश्शं, भोदु, पविशामि । प्रविश्योपसृत्य । शुशुहं अम्हाणं, तुम्हाणम्मि शुहं देमि ण देमि च (१६)

---

(१३) किं न दृश्यते मम व्यवहारः ? यदि न दृश्यते, तदा आवुत्तं राजानं पालकं भगिनीपतिं विज्ञाप्य भगिनीं मातरञ्च विज्ञाप्य एतमधिकरणिकं दूरीकृत्यान्यमधिकरणिकमत्र स्थापयिष्यामि ।

(१४) आर्य्य राष्ट्रियश्याल ! मुहूर्त्तकं तिष्ठ, तावदधिकरणिकानां निवेदयामि । एष राष्ट्रियश्यालः कुपितो भणति ।

(१५) आर्य्य ! अधिकरणिका भणन्ति, आगच्छ ।

(१६) प्रथमं भणन्ति न दृश्यते साम्प्रतं दृश्यते इति, तत् नाम भीतभीता अधिकरणभोजकाः, यद्यदहं भणिष्यामि तत्तत् प्रत्याययिष्यामि । भवतु, प्रविशामि । सुसुखमस्माकं, युष्माकमपि सुखं ददामि न ददामि च ।

अधि । स्वगतम् । अहो ! स्थिरसंस्कारता व्यवहारार्थिन: (झ) । प्रकाशम् । उपविश्यताम् ।

शकारः । आ ! अत्तणकेलका शे भूमी, ता जहिं मे लोअदि तहिं उवविशामि । श्रेष्ठिनं प्रति । एश उवविशामि शोधनकं प्रति । णं एत्थ उवविशामि । इति अधिकरणिकमस्तके हस्तं दत्वा । एश उवविशामि (१७) । इति भूमौ उपविशति ।

अधि । भवान् कार्य्यार्थी ? ।

शकारः । अधइं (१८) ।

अधि । तत्कार्य्यं कथय ।

शकारः । कण्णे कज्जं कधइश्शं । एव्वं वडढके गल्लक्कप्पमाणाह (ञ) कुले हग्गे जादे ।

लाअशशुले मम पिदा, लाआ तादश्श होइ जामादा ।
लाअशिआले हग्गे, ममावि बहणीवदी लाआ (१९) ॥६॥

(१७) आः, आत्मीया ममैषा भूमिः, यत्र मह्यं रोचते तत्रोपविशामि । एष उपविशामि । ननु अत्रोपविशामि । एष उपविशामि ।

(१८) अथ किम् ।

(१९) कर्णे कार्य्यं कथयिष्यामि । एवं वृहति गल्लक्कप्रमाणस्य कुले अहं जातः ।

---

(झ) व्यवहारार्थिनः विचारप्रार्थिनः शकारस्य इत्यर्थः स्थिरसंस्कारता स्थिरः संस्कारः यस्य तस्य भावः एकरूपमेव ग्राम्यं न काचित् परिवृत्तिरिति भावः ।

(ञ) गल्लक्कप्रमाणस्य गल्लक्केति देशीय भाषा सुरापानपात्रमस्यार्थ इति ।

अधि। सर्वं ज्ञायते।

किं कुलेनोपदिष्टेन, शीलमेवात्र कारणम्।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः॥ ७॥

तदुच्यतां कार्य्यम्।

शकारः। एव्वं भणामि, अबलडाह बि ण अ मे किं पि कलइस्सदि, तदो तेण बहिणीबदिणा परितुट्ठेण मे कीलिदुं लक्खिदुं शव्वुज्जाणाणं पवले पुप्फकलण्डकजिण्णुज्जाणे दिण्णे, तहिं च पेक्खिदुं अणुदिअहं, शोशाबेदुं शोधाबेदुं, पोत्थाबेदुं, लुणाबेदुं गच्छामि। देव्वजोएण पेक्खामि ण पेक्खामि वा, इत्थिअ-शलीलं णिबडिदं (२०)।

अधि। अथ ज्ञायते का स्त्री विपन्नेति?।

शकारः। हंहो! अधिअलणभोइआ, किंत्ति ण आणामि तं तादिशिं णअलमण्डणं कञ्चणशदभूशिअं। केण बि कुपुत्तेण अत्थकल्लवत्तस्स कालणादो शुस्सं पुप्फकलण्डक-जिण्णुज्जाणं पवेशिअ बाहुपाशबलक्कालेण बशन्तशेणिआ मालिदा, ण मए (२१) इत्यर्द्धोक्ते मुखमावृणोति।

---

राजश्वशुरो मम पिता, राजा तातस्य भवति जामाता।
राजश्यालोऽहं, ममापि भगिनीपती राजा॥

(२०) एवं भणामि, अपराद्धस्यापि न च मे किमपि करिष्यति, ततस्तेन भगिनीपतिना परितुष्टेन मे क्रीडितुं रक्षितुं सर्वोद्यानानां प्रवरं पुष्पकरण्डकजीर्णोद्यानं दत्तम्, तत्र च मे चिंतसृ अनुदिवसं शुष्कं कारयितुं शोधयितुं पुष्टं कारयितुं लूनं कारयितुं गच्छामि। दैवयोगेन पश्यामि न पश्यामि वा, स्त्रीशरीरं निपतितम्।

(२१) अधिकरणभोजकाः! किमिति न जानामि तां तादृशीं

अधि। अहो नगररक्षिणां प्रमादः! भोः श्रेष्ठिकायस्थौ! न मयेति व्यवहारपदं प्रथममभिलिख्यताम्।

कायस्थः। जं अज्जो आणवेदि। तथा कृत्वा। अज्ज! लिहिदं (२२)।

शकारः। स्वगतम्। हीमादिके! उत्तलाअन्तेण विअ पाअश पिण्डालकेण अज्ज मए अत्ता एव्व णिखाणिदो (ट)। भोदु एव्वं दाव। प्रकाशम्। अहो अधिअलणभोइआ! णं भणामि, मए ज्जेव दिट्टा, किं कोलाहलं कलेध? (२३)

इति पादेन लिखितं प्रोञ्छति।

अधि। कथं त्वया ज्ञातं यथा खल्वर्थनिमित्तं बाहुपाशेन व्यापादिता?

नगरमध्यस्थं काञ्चनगतभूषणाम्। केनापि कुपुरुषेण अर्थकल्यवर्णस्य कारणात्, शून्यं पुष्पकरण्डकजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण वसन्तसेना मारिता, न मया।

(२२) यदार्य आज्ञापयति। आर्य! लिखितम्।

(२३) विस्मये! त्वरां कुर्वाणेनेव पायसपिण्डारकेण, अद्य मया आत्मैव निर्गमितः। भवत्वेवं तावत्। अहो! अधिकरणभोजकाः! ननु भणामि मया एव दृष्टा, किं कोलाहलं कुरुत?

---

(ट) हीमादिके इति अव्ययं भयविस्मयद्योतकम्। पायसपिण्डारकेण पायसपिण्डं दुग्धपक्वान्नं परमान्नमित्यर्थः तत् गच्छति प्राप्नोतीति तेन पायसाम्न लोभिनेत्यर्थः यथा पायसान्नप्राप्तौ लोभात् त्वया क्रियते तथा मयापीत्यर्थः निर्गमितः निश्चयेन नाशं प्रापितः।

शकारः। हंहो! णूणं शुणशूणाए मोघट्ठाणाए गीवालिआए णिशुवस्तकेहिं आहलण-ट्ठाणेहिं (ठ) तक्केमि (२४)।

श्रेष्ठिकायस्थौ। जुज्जदि विअ (२५)।

शकारः। स्वगतम्। दिट्ठिआ पच्चुज्जीविदम्हि, अविद मादिके! (२६) (ड)।

श्रेष्ठिकायस्थौ। भो! कं एसो ववहारो अवलम्बदि? (२७)

अधि। द्विविधो हि व्यवहारः।

श्रेष्ठिकायस्थौ। केरिसो? (२८)।

अधि। वाक्यानुसारेण, अर्थानुसारेण च। यस्तावद्वाक्यानुसारेण, स खल्वर्थिप्रत्यर्थिभ्यः। यश्चार्थानुसारेण स चाधिकरणिकबुद्धिनिष्पाद्यः।

---

(२४) हंहो! नूनं शूनशूनया मोघस्थानया ग्रीवालिकया निःसुवर्णकैराभरणस्थानैस्तर्कयामि।

(२५) युज्यते इव।

(२६) दिष्ट्या प्रत्युज्जीवितोऽस्मि।

(२७) भोः! कमेष व्यवहारोऽवलम्बते?

(२८) कीदृशौ?

(ठ) शूनशूनया स्फीतस्फीतया अतिस्फीतयेत्यर्थः मोघस्थानया मोघं विफलं स्थानं स्थितिः सत्ता इत्यर्थः तादृशालङ्कारविरहादिति भावः यस्याः तया ग्रीवालिकया ग्रीवया तथा निः न सन्ति सुवर्णकानि सौवर्णाभरणानि येषु तथाभूतैराभरणस्थानैः हस्तादिभिरित्यर्थः।

(ड) अविदमादिके इत्यव्ययं हर्षसूचकम्।

अधिकरणिकः। ता वसन्तसेणामादरं अवलम्बेदि ववहारो (२९)।

अधि। एवमिदम्, भद्र शोधनक! वसन्तसेनामातरमनुद्वेजयन्नाह्वय।

शोधनकः। तथेति। निष्क्रम्य गणिकामात्रा सह प्रविश्य।

एदु एदु अज्जा (३०)।

वृद्धा। गदा मे दारिआ मित्तघरअं अत्तणो जोव्वणं अणुभविदुं, एसो उण दीहाऊ भणादि, आअच्छ, अधिअरणिओ सद्दावेदि, ता मोहपरवसमिव अत्ताणअं अवगच्छामि, हिअअं मे थरथरेदि। अज्ज! आदेसेहि मे अधिअरणमण्डवस्स मग्गं (३१)।

शोधनकः। एदु एदु अज्जा (३२) उभौ परिक्रामतः।

एदं अधिअरणमण्डवं, एत्थ पविसदु अज्जा (३३)।

इत्युभौ प्रविशतः।

(२९) तस्मात् वसन्तसेनामातरमवलम्बते व्यवहारः।

(३०) एतु एतु आर्या।

(३१) गता मे दारिका मित्रगृहकम् आत्मनो यौवनमनुभवितुम्, एष पुनर्दीर्घायुर्भणति, आगच्छ, अधिकरणिक आह्वयति, तन्मोहपरवशमिवात्मानमवगच्छामि, हृदयं मे प्रकम्पते। आदिश मह्यम् अधिकरणमण्डपस्य मार्गम्।

(३२) एतु एतु आर्या।

(३३) एषोऽधिकरणमण्डपः। अत्र प्रविशत्वार्या।

वृद्धा । उपसृत्य । सुहं तुम्हाणं भोदु भाविमिस्साणं (३४) ।

अधि । भद्रे ! स्वागतमास्यताम् ।

वृद्धा । तधा इत्युपविष्टा ।

शकारः । साक्षेपम् । आगदासि वुड्ढकुट्टणि ! आगदासि ? (३५) ।

अधि । अये ! त्वं किल वसन्तसेनाया माता ? ।

वृद्धा । अधइं (३६) ।

अधि । अथेदानीं वसन्तसेना क्व गता ? ।

वृद्धा । मित्तघरअं (३७) ।

अधि । किन्नामधेयं तस्या मित्रम् ? ।

वृद्धा । स्वगतम् । हद्धी हद्धी, अदिलज्जणीअं क्खु एदं । प्रकाशम् । जणस्स पुच्छणीओ अअं अत्थो, ण उण अधिअरणिअस्स (३८) ।

अधि । अलं लज्जया, व्यवहारस्त्वां पृच्छति ।

श्रेष्ठिकायस्थौ । ववहारो पुच्छदि, णत्थि दोसो, कधेहि (३९) ।

(३४) सुखं युष्माकं भवतु भावमिश्राणाम् ।

(३५) आगतासि वृद्धकुट्टनि ! आगतासि ?

(३६) अथ किम् ।

(३७) मित्रगृहम् ।

(३८) हा धिक् हा धिक् अतिलज्जनीयं खल्विदम् । जनस्य प्रच्छनीयोऽयमर्थः, न पुनरधिकरणिकस्य ।

(३९) व्यवहारः पृच्छति, नास्ति दोषः, कथय ।

वृद्धा । कधं ववहारो ! जइ एव्वं, ता सुणन्तु अज्ज-मिस्सा । सो क्खु सत्थवाह विणअदत्तस्स णत्तिओ, साअर-दत्तस्स तणओ, सुगहिदणामहेओ अज्ज चारुदत्तो णाम, सेट्ठिचत्तरे पडिवसदि, तहिं मे दारिआ जोव्वणसुह-मणुभवदि (४०) ।

शकारः । शुदं अज्जेहिं ? लिहीअन्तु एदे अक्खला, चालुदत्तेण शह मम विवादे (४१) ।

श्रेष्ठिकायस्थौ । चारुदत्तो मित्तो त्ति णत्थि दोसो (४२) ।

अधि । व्यवहारोऽयं चारुदत्तमवलम्बते ।

श्रेष्ठिकायस्थौ । एव्वं विअ (४३) ।

अधि । धनदत्त ! (ढ) वसन्तसेना आर्य्यचारुदत्तस्य गृहं गतेति लिख्यतां व्यवहारस्य प्रथमः पादः । कथमा-र्य्यचारुदत्तोऽप्यस्माभिराह्वाययितव्यः ! । अथवा व्यवहार-स्तमाह्वयति । भद्र शोधनक ! गच्छ, आर्य्यचारुदत्तं स्वैर-

---

(४०) कथं व्यवहारः ! यद्येवं तदा शृण्वन्तु आर्य्यमिश्राः । स खलु सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य तनयः सुगृहीतनामधेयः आर्य्यचारुदत्तो नाम श्रेष्ठिचत्वरे प्रतिवसति, तत्र मे दारिका यौवन-सुखमनुभवति ।

(४१) श्रुतमार्य्यैः ? लिख्यन्तामेतान्यक्षराणि, चारुदत्तेन सह मम विवादः ।

(४२) चारुदत्तो मित्रमिति नास्ति दोषः ।

(४३) एवमिव ।

(ढ) धनदत्त ! इति कायस्थनाम सम्बोधनम् ।

मसम्भ्रान्तमनुद्विग्नं सादरमाह्वय, प्रस्तावेनाधिकरणि-कस्त्वां (च) द्रष्टुमिच्छतीति।

शोधनकः। जं अज्जो आणवेदि। इति निष्क्रान्तः, चारु-दत्तेन सह प्रविश्य च। एदु एदु अज्जो (४४)।

चारु। विचिन्त्य।

परिज्ञातस्य मे राज्ञा शीलेन च कुलेन च।
यत्सत्यमिदमाह्वानमवस्थामभिशङ्कते॥ ८॥

सवितर्कं स्वगतम्।

ज्ञातो नु किं न खलु बन्धनविप्रयुक्तो
मार्गागतः प्रवहणेन मयापनीतः?।
चारेक्षणस्य नृपतेः श्रुतिमागतो वा?
येनाहमेवमभियुक्त इव प्रयामि॥ ९॥

---

(४४) यदार्य आज्ञापयति। एतु एतु आर्यः।

(च) प्रस्तावेन केनचित् प्रसङ्गेन।

(८) परिज्ञातस्येति। राज्ञा कुलेन शीलेन च परिज्ञातस्य विदि-तस्य मे मम यत् आह्वानम् इदं सत्यं निश्चितम् अवस्थां दारिद्र्य-मिति यावत् अभिशङ्कते अभिलक्ष्य कस्मिन्नपि विषये मदीयदोषं तर्कयति। दोषः सहसा दरिद्रमेवाश्रयति न धनिनमिति भावः। अनुष्टुप्वृत्तम्।

(९) ज्ञात इति। बन्धनात् कारावासात् विप्रयुक्तः विच्युतः मार्गा-गतः मार्गवशात् आगतः पान्थः इत्यर्थः स आर्य्यकनामा गोपालसुतः मया प्रवहणेन अपनीतः अपसारितः खलु निश्चयेन किं न ज्ञातः? अनेन विदितः? अपितु विदित एव नु वितर्के वा अथवा चारेक्षणस्य चारचक्षुषः नृपतेः श्रुतिमागतः? चारेण ज्ञात इत्यर्थः। येन अहम्

इद्रा। कधं ववहारो ! जइ एव्वं, ता सुणन्तु अज्ज-मिस्सा। सो क्खु सत्थवाह विणअदत्तस्स णत्तिओ, साअर-दत्तस्स तणओ, सुगहिदणामहेओ अज्ज चारुदत्तो णाम, सेट्ठिचत्तरे पडिवसदि, तहिं मे दारिआ जोव्वणसुह-मणुभवदि (४०)।

शकारः। शुदं अज्जेहिं ? लिहीअतु एदे अक्खला, चालुदत्तेण शह मम विवादे (४१)।

श्रेष्ठिकायस्थौ। चारुदत्तो मित्तो त्ति णत्थि दोसो (४२)।

अधि। व्यवहारोऽयं चारुदत्तमवलम्बते।

श्रेष्ठिकायस्थौ। एव्वं विअ (४३)।

अधि। धनदत्त! (ढ) वसन्तसेना आर्य्यचारुदत्तस्य गृहं गतेति लिख्यतां व्यवहारस्य प्रथमः पादः। कथमार्य्य चारुदत्तोऽप्यस्माभिराह्वाययितव्यः!। अथवा व्यवहारस्तमाह्वयति। भद्र शोधनक! गच्छ, आर्य्य चारुदत्तं स्वैर-

(४०) कथं व्यवहारः! यद्येवं तदा शृण्वन्तु आर्य्यमिश्राः। स खलु सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य तनयः सुगृहीतनामधेयः आर्य्यचारुदत्तो नाम श्रेष्ठिचत्वरे प्रतिवसति, तत्र मे दारिका यौवन-सुखमनुभवति।

(४१) श्रुतमार्य्यैः? लिख्यन्तामेतान्यक्षराणि, चारुदत्तेन सह मम विवादः।

(४२) चारुदत्तो मित्रमिति नास्ति दोषः।

(४३) एवमिव।

(ढ) धनदत्त! इति कायस्थनाम सम्बोधनम्

मसम्भ्रान्तमनुद्विग्नं सादरमाह्वय, प्रस्तावेनाधिकरणि-
कस्त्वां (ख) द्रष्टुमिच्छतीति।

शोधनकः। जं अज्जो आणवेदि। इति निष्क्रान्तः, चारु-
दत्तेन सह प्रविश्य च। एदु एदु अज्जो (४४)।

चारु। विचिन्त्य।

परिज्ञातस्य मे राज्ञा शीलेन च कुलेन च।
यच्चत्यमिदमाह्वानमवस्थामभिशङ्कते॥ ८॥

सवितर्कं स्वगतम्।

ज्ञातो नु किं न खलु बन्धनविप्रयुक्तो
मार्गागतः प्रवहणेन मयापनीतः?।
चारेक्षणस्य नृपतेः श्रुतिमागतो वा?
येनाहमेवमभियुक्त इव प्रयामि॥ ९॥

---

(४४) यदार्य्य आज्ञापयति। एतु एतु आर्य्यः।

---

(ख) प्रस्तावेन केनचित् प्रसङ्गेन।

(८) परिज्ञातस्येति। राज्ञा कुलेन शीलेन च परिज्ञातस्य विदि-
तस्य मे मम यत् आह्वानम् इदं सत्यं निश्चितम् अवस्थां दारिद्र्य-
मिति यावत् अभिशङ्कते अभिलक्ष्य कस्मिन्नपि विषये मदीयदोषं तर्कयति।
दोषः सहसा दरिद्रमेवाश्रयति न धनिनमिति भावः। अनुष्टुप् छन्दः।

(९) ज्ञात इति। बन्धनात् कारावासात् विप्रयुक्तः विच्युतः मार्गा-
गतः मार्गवशात् आगतः पान्थः इत्यर्थः स आर्य्यकनामा गोपालसुतः
मया प्रवहणेन अपनीतः अपसारितः खलु निश्चयेन किं न ज्ञातः?
जनैः विदितः? अपितु विदित एव नु वितर्के वा अथवा चारेक्षणस्य
चारचक्षुषः नृपतेः श्रुतिमागतः? चारेण ज्ञात इत्यर्थः। येन अहम्

अथवा किं विचारितेन। अधिकरणमण्डपमेव गच्छामि। भद्र शोधनक! अधिकरणस्य मार्गमादेशय।

शोधनकः। एदु एदु अज्जो (४५)। इति परिक्रामतः।

चारु। सशङ्कम्। नन्विदमपरम्?।

रूक्षस्वरं वाशति वायसोऽयममात्यभृत्या मुहुराह्वयन्ति।
सव्यञ्च नेत्रं स्फुरति प्रसह्य ममानिमित्तानि हि खेदयन्ति॥१०॥

शोधनकः। एदु एदु अज्जो सैरं असम्भन्तं (४६)।

चारु। परिक्रम्याग्रतोऽवलोक्य च।

शुष्कवृक्षस्थितो ध्वाङ्क्ष आदित्याऽभिमुखस्तथा।
मयि चोदयते वामं चक्षुर्घोरमसंशयम्॥ ११॥

---

(४५) एतु एतु आर्यः।

(४६) एतु एतु आर्यः स्वैरमसम्भ्रान्तम्।

---

एवंप्रकारेण अभियुक्त इव दूषित इव प्रत्यर्थी सन्नित्यर्थः प्रयामि गच्छामीत्यर्थः। वसन्ततिलकं वृत्तम्।

(१०) रूक्षस्वरमिति। अयं वायसः काकः रूक्षस्वरं कर्कशं यथा तथा वाशति शब्दायते, अत्यातिभयजनकमाह वृहत्संहितायां वराहमिहिरः। यथा दारुणनादस्वरकोटरोपगो वायसो महाभयद इति इति अमात्यानां राजनियुक्तानां पुरुषाणां भृत्याः मुहुः वारंवारम् आह्वयन्ति, तथा सव्यं वामं नेत्रञ्च प्रसह्य बहुधा स्फुरति, पुंसां वामाङ्गस्फुरणस्य दुर्निमित्तसूचकतामाह मत्स्यपुराणम्। अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत्। अप्रशस्तं तथा, वामे पृष्ठस्य हृदयस्य चेति (किं बहुना) अनिमित्तानि दुर्लक्षणानि हि निश्चितं मम खेदयन्ति मर्माणि सम्यक्व्यथयन्ति कर्मणि षष्ठी। उपजातिः वृत्तम्।

(११) शुष्क इति। शुष्क वृक्षस्थितः तथा आदित्याभिमुखः ध्वाङ्क्ष

पुनरन्यतोऽवलोक्य। अये! कथमयं सर्प्पः।

मयि विनिहितदृष्टिर्भिन्ननीलाञ्जनाभः

स्फुरितविततजिह्वः शुक्लदंष्ट्राचतुष्कः।

अभिपतति सरोषो जिह्मिताध्मातकुक्षि-

र्भुजगपतिरयं मे मार्गमाक्रम्य सुप्तः॥ १२॥

अपिचेदम्।

स्खलति चरणं भूमौ न्यस्तं, न चार्द्रतमा मही,

स्फुरति नयनं, वामो बाहुर्मुहुश्च विकम्पते।

मवलोकयन्नित्यर्थः ध्वाङ्क्षः काकः मयि घोरं भयानकं वामं चक्षुः असं-शयं यथा तथा चोदयते निक्षिपति। अस्यातिभयसूचकत्वमाह वराह-मिहिरः। छिन्नाग्रेऽङ्गच्छेदः कलहः पुष्पद्रुमस्थिते ध्वाङ्क्षे। पुरतश्च पृष्ठतो वा गोमयसंस्थे धनप्राप्तिः। ऐन्द्रादिदिगवलोकी सूर्याभिमुखो ग्टहे रुवन् ग्टहिणः। राजभयचौरबन्धनकलहाः स्युः पशुभयञ्चेति। अनुष्टुप् वृत्तम्।

(१२) मयीति। मयि विनिहिता अर्पिता दृष्टिर्येन सः, भिन्नं मर्दितं नीलं यत् अञ्जनं कज्जलं तस्येव आभा यस्य तादृशः कृष्णवर्ण इत्यर्थः, स्फुरिता स्पन्दिता वितता विस्तृता जिह्वा यस्य तथाभूतः, शुक्लं दंष्ट्राणां चतुष्कं यस्य सः, जिह्मितः वक्रीकृतः आध्मातः पूरितः कुक्षिः यस्य तादृशः तथा मे मम मार्गं पन्थानम् आक्रम्य सुप्तः अयं भुजगपतिः सर्पराजः सरोषः सन् अभिपतति मदभिमुखमागच्छ-तीत्यर्थः अस्य च विशिष्टारिष्टसूचकत्वमुक्तं बृहत्संहितायां, फणि-नोऽभिमुखागमोऽरिष्टं कथयति बन्धवधात्ययञ्च याहुः। इति वसन्तराजशाकुनेऽपि। गोनासद्वीस्वरराजिलाद्या आत्मैव सर्वे भयदा भुजङ्गाः। इति मालिनीवृत्तम्।

शकुनिरपरस्थायं तावद्विरौति हि नैकशः,

कथयति महाघोरं मृत्युं न चात्र विचारणा ॥ १३ ॥

सर्वथा देवताः स्वस्ति करिष्यन्ति ।

शोधनकः । एदु एदु अज्जो, इमं अधिअरणमण्डवं पविसदु अज्जो (४७) ।

चारु । प्रविश्य समन्तादवलोक्य । अहो ! अधिकरणमण्डपस्य परा श्रीः । इह हि ।

चिन्तासक्त-निमग्न मन्त्रिसलिलं दूतोर्मिशङ्खाकुलं

पर्यन्तस्थितचार-नक्रमकरं नागाश्व-हिंस्राश्रयम् ।

नानावाशक-कङ्कपक्षि-रुचिरं कायस्थ सर्पास्पदं

नीतिक्षुण्णतटञ्च राजकरणं हिंस्रैः समुद्रायते ॥ १४ ॥

(४७) एतु एतु आर्यः, अधिकरणमण्डपं प्रविशत्वार्यः ।

---

(१३) स्खलतीति । हि यतः भूमौ न्यस्तं चरणं स्खलति, मदीयश्चक्षुः वामं स्फुरति ... आर्द्रतमा अस्त्याद्रौ च न, नयनं वाममिति शेषः स्फुरति स्पन्दते, तथा वामः बाहुः मुहुर्मुहुः वारं वारं विकम्पते, अयम् अपरः शकुनिश्च तावत् नैकशः मुहुर्मुहुः विरौति शब्दायते अतः एतत् सर्वमिति अध्याहार्य्यं महाघोरं मृत्युं कथयति, अत्र विचारणा न निश्चितमेवेत्यर्थः, चरणस्खलनस्य दुर्निमित्ततामाह वसन्तराजशाकुनम् । स्वपादयानस्खलनं नृपाणां भङ्गः क्वचिद् यानपलायनञ्च । द्वाराभिघाताध्वगमस्खलाताः प्रस्थानविघ्नं कथयन्ति यातुः इति । अत्र हरिणीवृत्तं न समरसलागः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात् ।

(१४) चिन्तेति । चिन्तायामासक्ताः निमग्नाः निविष्टमनसः मन्त्रिण एव सलिलानि यस्य तत् मन्त्रिणां विदग्धतया शीतलप्रकृतिकत्वेन

भवतु। प्रविशन् शिरोघातमभिनीय सवितर्कम्। अहह इद-मपरम् (त)।

सव्यं मे स्पन्दते चक्षुर्विरौति वायसस्तथा।
पन्थाः सर्प्पेण रुद्धोऽयं स्वस्ति चास्मासु दैवतः॥ १५॥

---

च सलिलसाम्यम्। दूता वार्त्तावहा एव ऊर्मयः शङ्खाश्च तैराकुलं व्याप्तं दूतानामितस्ततः सञ्चरणात् ऊर्मिशङ्खानां साम्यम्। पर्य्यन्तेषु प्रान्तदेशेषु मध्येषु वा स्थिताश्चारा बन्धनगारा एव चारः पियालवृक्षे स्यात् गतौ बन्धापसर्पयोरिति मेदिनी। नक्रा मकराश्च यस्य तत् चारा-णामतिक्लेशजनकतया भयावहत्वात् नक्रमकरसाम्यम्। नागा हस्तिनः अश्वाश्च ते एव हिंस्राः क्रूरमनुष्याः तेषामाश्रयं स्थानं नागाश्वानां वध्यघातनार्थं स्थापितानां हिंस्रैर्जलचरैः साम्यम्। नाना विविधाः वाचकाः शब्दं कुर्वाणाः धनप्रतारणार्थं वचनचतुराः खला एव कङ्क-पक्षिणः वकविशेषाः, तैः रुचिरं मनोहरं खलानां वचनचातुर्य्येण प्रलो-भनकारित्वात् मत्स्यधारणार्थं कृतचारिभिर्बकैः साम्यम्। कायस्था एव सर्पाः तेषामास्पदं स्थानं कायस्थानां क्रूरतया प्रसिद्धेः सर्पसाम्यम्। तथा नीतिरेव शासनशास्त्रमेव क्षुण्णं स्रोतोवशात् भग्नं तटं यस्य तत् नीत्याः अनवरतपर्य्यालोचनयापि कदाचिदसत्यमपि सत्यवत् कदाचित् सत्यमपि असत्यवत् क्रियत इति तटसाम्यमवगन्तव्यम्। तथा हिंस्रैः उपलक्षितं विशेषणे तृतीया। अतः राजकरणं राज्ञः अधिकरणं विचारस्थानं समुद्रायते समुद्रवत् आचरति सर्वथा दुर्गममिति भावः, राजकरणमित्यत्र राजभवनमित्यपि पठ्यते। शार्दूलविक्रीड़ितं वृत्तम्।

(त) इदं प्रवेशकाले शिरोघातरूपम् अपरम् अन्यत् दुर्लक्षण-मिति शेषः।

(१५) सव्यमिति। अस्मासु दैवतः दैवात् स्वस्ति च भवतु इति शेषः देवता मम स्वस्ति कुर्वन्तु इति भावः अन्यत् सुगमम्।

तावत् प्रविशामि । इति प्रविशति ।

अधि । अयमसौ चारुदत्तः ? य एषः ।,

घोणोन्नतं मुखमपाङ्गविशालनेत्रं
नैतद्धि भाजनमकारणदूषणानाम् ।
नागेषु गोषु तुरगेषु तथा नरेषु
नह्याकृतिः सुसदृशं विजहाति वृत्तम् ॥ १६ ॥

चारु । भो ! अधिकृतेभ्यः स्वस्ति । हंहो नियुक्ताः ! अपि कुशलं भवताम् ? ।

अधि । ससम्भ्रमम् । स्वागतमार्य्यस्य भद्र शोधनक ! आर्य्यस्यासनमुपनय ।

शोधनकः । आसनमुपनीय । एदं आसनं, एत्थ उवविसदु अज्जो (४८) ।

चारु । उपविशति ।

शकारः । सक्रोधम् । आगदेशि ले इत्थिआघादआ आग-

(४८) इदमासनमत्रोपविशत्वार्य्यः ।

---

(१६) घोणोन्नतमिति । घोणा नासिका तया उन्नतम् उन्नतनासिकमित्यर्थः अपाङ्गयोः विशाले आयते नेत्रे यत्र तादृशं मुखं विभर्त्तीति शेषः सुवर्णैकतादिदुष्कार्य्यचिह्नं किमपि नास्तीति भावः । हि यतः एतत् चारुदत्तरूपं वस्तु इति शेषः अकारणदूषणानां भाजनं पात्रम् आश्रय इत्यर्थः न तथाहि नागेषु हस्तिषु गोषु, तुरगेषु तथा नरेषु मध्ये इत्यर्थः आकृतिः सौम्यावयवः सुसदृशं वृत्तं चरित्रं न विजहाति न त्यजतीत्यर्थः यत्राकृतिस्तत्र गुणा वसन्तीति आकृत्या गुणनिर्णय इति च भावः । वसन्ततिलकं वृत्तम् ।

देमि ? अहो णाए ववहाले, अहो धम्मे ववहाले, जं एअ-दाह इत्थिआवादकाह आसणे दीअदि। सगर्वम्। भोदु, णं दीअदु (४९)।

अधि। आर्य्य चारुदत्त! अस्ति भवतोऽस्या आर्य्याया दुहित्रा सह प्रसक्तिः प्रणयः प्रीतिर्वा ?

चारु। कस्याः ?।

अधि। अस्याः। इति वसन्तसेनामातरं दर्शयति।

चारु। उत्थाय। आर्य्ये! अभिवादये।

वृद्धा। जाद! चिरं मे जीव। स्वगतम्। अअं सो चारु-दत्तो! सुणिक्खित्तं क्खु दारिआए जोव्वणं (५०)।

अधि। आर्य्य! गणिका तव मित्रम् ?

चारु। लज्जां नाटयति।

शकारः।

लज्जाए भीलुदाए वा चालित्तं अलिए णिगूहिदुम्।
अअं मालिअ अत्थकालणा एसि गूहदि ण तं हि भट्टके (५१)॥१७

(४९) आगतोऽसि रे स्त्रीघातक! आगतोऽसि ? अहो! न्याय्यो व्यवहारः, अहो धर्म्यो व्यवहारः, यदेतस्मै स्त्रीघातकाय आसनं दीयते। भवतु, ननु दीयताम्।

(५०) जात! चिरं मे जीव। अयं स चारुदत्तः! सुनिक्षिप्तं खलु दारिकया यौवनम्।

(५१) लज्जया भीरुतया वा चारित्रमलीको निगूहितुम्।
स्वयं मारयित्वा अर्थकारणादिदानीं गूहति न तद्धि भट्टकः॥

---

(१७) लज्जयेति। हे अलीक! मिथ्यावादिन्! लज्जया भीरु-

श्रेष्ठिकायस्थौ । अज्ज चारुदत्त ! भणाहि, अलं लज्जाए, ववहारो क्खु एसो (५२) ।

चारु । सलज्जम् । भो अधिकृता ! मया कथमीदृशं वक्तव्यम् ? यथा गणिका मम मित्रमिति, अथवा यौवनमत्रापराध्यति, न चारित्रम् ।

अधि ।

व्यवहारः सविघ्नोऽयं, त्यज लज्जां हृदि स्थिताम् ।
ब्रूहि सत्यमलं धैर्य्यं, छलमत्र न गृह्यते ॥ १८ ॥
अलं लज्जया, व्यवहारस्त्वां पृच्छति ।

चारु । अधिकृत ! केन सह मम व्यवहारः ? ।

शकारः । साटोपम् । अले ! मए शह ववहाले (५३) ।

चारु । त्वया सह मम व्यवहारः सुदुस्सहः ।

(५२) आर्य्य चारुदत्त ! भण, अलं लज्जया, व्यवहारः खल्वेषः ।
(५३) अरे ! मया सह व्यवहारः ।

---

तया वा चारित्रं चरित्रमेव चारित्रं स्वकृतदुष्कार्य्यरूपं निगूहितुं गोपायितुं चेष्टसे ? इति शेषः, अर्थकारणात् धनलाभेच्छया एवं मारयित्वा विनाश्य स्थितस्य तवेति पदद्वयमध्याहार्य्यम् । भक्तुः प्रभुः मम भगिनीपतिरित्यर्थः हि निश्चितं तत् तव दुश्चरित्रमित्यर्थः न गूहति नैव गोपायित्वा त्वां मोचयति अवश्यमेव त्वां दण्डयिष्यतीति भावः । अत्र वैतालीयं छन्दः ।

(१८) व्यवहार इति । अयं व्यवहारः अभियोगः सविघ्नः अनिष्टजनक इति भावः, धैर्य्यम् अलं विलम्बं मा कुरु इति भावः अन्यत् विशदम् ।

शकारः। अले! इत्थिआघादआ! तं तादिशिं लअण-शदभूशणिअं वशन्तशेणिअं मालिअ, शम्पदं कवड-कावडिके भविअ णिगूहेशि? (५४)।

चारु। असम्बद्धः खल्वसि।

श्रेष्ठी। आर्य्य चारुदत्त! अलमनेन, ब्रूहि सत्यम्, अपि गणिका तव मित्रम्?।

चारु। एवमेव।

श्रेष्ठी। आर्य्य! वसन्तसेना क्व?।

चारु। गृहं गता।

श्रेष्ठिकायस्थौ। कधं गदा? कदा गदा? गच्छन्ती वा केण अणुगदा? (५५)।

चारु। स्वगतम्। किं प्रच्छन्नं गतेति ब्रवीमि?।

श्रेष्ठिकायस्थौ। अज्ज! कधेहि (५६)।

चारु। गृहं गता, किमन्यद् ब्रवीमि।

शकारः। मम केलकं पुप्फकलण्डक-जिण्णुज्जाणं पवेशिअ-अत्थणिमित्तं बाहुपाश-बलक्कालेण मालिदा, अए! शम्पदं वदशि घलं गदे त्ति? (५७)।

---

(५४) अरे स्त्रीघातक! तां तादृशीं रत्नशतभूषणां वसन्तसेनां मारयित्वा साम्प्रतं कपटकापटिको भूत्वा निगूहसि?

(५५) कथं गता? कदा गता? गच्छन्ती वा केन अनुगता?

(५६) आर्य्य! कथय।

(५७) मदीयं पुष्पकरण्डक जीर्णोद्यानं प्रवेश्य अर्थनिमित्तं बाहुपाश-बलात्कारेण मारिता, अये! साम्प्रतं वदसि गृहं गतेति।

चारु। आः! असम्बद्धप्रलापिन्!

अभ्युक्षितोऽसि सलिलैर्न वलाहकानां
चाषाग्रपक्षसदृशं भ्रममन्तराले।
मिथ्यैतदाननमिदं भवतस्तथाहि
हेमन्तपद्ममिव निष्प्रभतामुपैति॥ १९॥

श्रधि। जनान्तिकम्।

तुलनञ्चाद्रिराजस्य, समुद्रस्य च तारणम्।
ग्रहणञ्चानिलस्येव, चारुदत्तस्य दूषणम्॥ २०॥

प्रकाशम्। आर्य्य चारुदत्तः खल्वसौ कथमिदमकार्य्यं करिष्यति। धोषेत्यादि पठति।

शकारः। किं पक्खवादेण बवहाले दीशदि? (५८)।

(५८) किं पक्षपातेन व्यवहारो दृश्यते?

---

(१९) अभ्युक्षित इति। अन्तराले अन्तरीक्षे वलाहकानां मेघानां सलिलैः चाषः पक्षिविशेषः तस्य अग्रपक्षः पक्षाग्रं तस्य सदृशं यथा तथा भ्रमं न अभ्युक्षितः न सिक्तः असि, तथाहि भवतः इदम् आननं हेमन्तपद्ममिव निष्प्रभतां मालिन्यमुपैति प्राप्नोति, चाषाग्रपक्षो हि उपरि वारिवर्षणे मलिनीभवति तव मुखन्तु तदभावेऽपि मलिनं दृश्यते इति भावः। अतः एतत् त्वदुक्तं मत्कर्तृकवसन्तसेनाहननं मिथ्या, निरपराधे जने दोषान् आरोपयितुस्तव मुखं मलिनं भवतीति भावः। वसन्ततिलकं वृत्तम्।

(२०) तुलनमिति। चारुदत्तस्य दूषणम् अद्रिराजस्य हिमालयस्य तुलनं समुद्रस्य तारणं तथा अनिलस्य ग्रहणमिव न कदाचित् सम्भवतीति भावः।

ऋषि। अपेहि मूर्ख!।

वेदार्थान् प्राकृतस्त्वं वदसि, न च ते जिह्वा निपतिता?
मध्याह्ने वीक्षसेऽर्कं, न तव सहसा दृष्टिर्विचलिता?।
दीप्ताग्नौ पाणिमन्तः क्षिपसि, स च ते दग्धो भवति नो,
चारित्र्याच्चारुदत्तं चलयसि न ते देहं हरति भूः? ॥२१॥

आर्य्य-चारुदत्तः कथमकार्य्यं करिष्यति।

कृत्वा समुद्रमुदकोच्छ्रयमात्रशेषं
दत्तानि येन हि धनान्यपेक्षितानि।
स श्रेयसां कथमिवैकनिधिर्महात्मा
पापं करिष्यति धनार्थमवैरिजुष्टम्? ॥ २२ ॥

---

(२१) वेदार्थानिति। त्वं प्राकृतः नीचः सन् वेदार्थान् वदसि, ते तव जिह्वा न च निपतिता? नीचजातीनां वेदार्थोच्चारणे अनधिकारात् बलादुच्चारिते च जिह्वास्खलनस्य शास्त्रीयत्वादिति भावः, मध्याह्ने अर्कं वीक्षसे, सहसा तत्क्षणात् तव दृष्टिर्न विचलिता न प्रतिहता? दीप्ताग्नौ प्रज्वलितानले अन्तः ज्वलदनलमध्ये इत्यर्थः पाणिं क्षिपसि, स च ते तव पाणिः न दग्धः न भस्मीकृतः भवति? तथा चारित्र्यात् चारुदत्तं चलयसि भ्रंशयसि, भूः पृथ्वी ते तव देहं न हरति? स्रग्धरा वृत्तम्, "म्रौ भ्नौ यो नो त्रयेण त्रिमुनियतियुता स्रग्धरा" इति तल्लक्षणात्।

(२२) कृत्वेति। येन चारुदत्तेन समुद्रम् उदकानामुच्छ्रयः औन्नत्यं प्राचुर्य्यमित्यर्थः तन्मात्रः शेषः यस्य तं जलमात्राधारमित्यर्थः कृत्वा तद्गर्भजातरत्नसमुदायाहरणादिति भावः अनपेक्षितानि अविचारितानि धनानि दत्तानि श्रेयसाम् एकनिधिः एकमात्राश्रयः महात्मा स चारुदत्तः धनार्थं धनलोभाय अवैरिजुष्टं वैरिणापि असेवितं यत् पापं

शकारः । किं पक्खवादेण ववहाले दीशदि ? (५९) ।

वृद्धा । हदास ! जो दाणिं णासीकदं सुवण्णभण्डअं रत्तिं चोरेहिं अवहिदं त्ति तस्स कारणादो चदुस्समुद्दसार-भूदं रअणावलिं देदि, सो दाणिं अत्थकल्लवत्तस्स कारणादो इमं अकज्जं करेदि ? हा जादे ! एहि मे पुत्ति ! इति रोदिति । (६०) ।

अधि । आर्य्य-चारुदत्त ! किमसौ पद्भ्यां गता ? उत प्रवहणेनेति ?

चारु । ननु ! मम प्रत्यक्षं न गता, तन्न जाने, किं पद्भ्यां गता उत प्रवहणेनेति ।

प्रविश्य । सामर्षो वीरकः ।

पादप्पहार-परिभव-विमाणणा-बद्धगरुअ-वेरस्स ।
अणुसोअन्तस्स इयं कधं पि रत्ती पभादा मे ॥ २२ ॥

(५९) किं पक्षपातेन व्यवहारो दृश्यते ?

(६०) हताश ! य इदानीं न्यासीकृतं सुवर्णभाण्डं रात्रौ चौरैरपहृतमिति तस्य कारणात् चतुःसमुद्रसारभूतां रत्नावलीं ददाति, स इदानीमर्थकल्यवर्त्तस्य कारणादिदमकार्यं करोति ? हा जाते ! एहि मे पुत्रि ! ।

---

वजनम् इदं पापं कश्चिदपि करिष्यति नैव करिष्यतीत्यर्थः । यथान्तितवकं इत्तम् ।

(२२) पादेति । पादप्रहारेण पादाघातेन चन्दनकर्त्तृकेण यः परिभवः तेन या विमाननता तया बद्धं गुरुकं महत् वैरं यस्य तादृशस्य

ता जाव अधिअरणमण्डवं उवसप्पामि। प्रवेशकेन। सुहं अज्जमिस्साणं (६१)।

अधि। अये! नगररक्षाधिकृतो वीरकः! वीरक! किमागमनप्रयोजनम्?

वीरकः। ही, बन्धणभेअण-सम्भमे अज्जकं असेसन्तो, ओवाड़िदं पवहणं वच्चदि त्ति विआरं करन्तो असेसन्तो, अरे! तुए वि आलोइदे, मए वि आलोइदव्वो त्ति भणन्तो ज्जेव, चन्दणमहत्तरएण (थ) पादेण ताड़िदो म्हि। एदं सुणिअ अज्जमिस्सा पमाणं (६२)।

अधि। भद्र! जानीषे कस्य तत्प्रवहणमिति?।

वीरकः। इमस्स अज्ज-चारुदत्तस्स, वसन्तसेणा आरूढ़ा

(६१) पादप्रहार-परिभव-विमानना-बहुगुरुक-वैरस्य।
अनुशोचन इयं कथमपि रात्रिः प्रभाता मे॥
तद्यावदधिकरणमण्डपमुपसर्पामि। शुभमार्यमिश्राणाम्।

(६२) ही, बन्धनभेदनसम्भ्रमे आर्यकमन्वेषयन्, अपवारितं प्रवहणं व्रजतीति विचारं कुर्वन् अन्वेषयन्, अरे! त्वयापि आलोकितं मयाप्यालोकितव्यमिति भणन्नेव, चन्दन-महत्तरकेण पादेन ताड़ितोऽस्मि। एतच्छ्रुत्वा आर्यमिश्राः प्रमाणम्।

---

अनुशोचतः इतिकर्त्तव्यम् अनुशोचयतः मम कथमपि अतिकष्टेनेत्यर्थः इयं रात्रिः प्रभाता।

(थ) चन्दनमहत्तरेण चन्दनकस्य अतिमहता इत्यर्थः।

रण्डक-जिण्णुज्जाणं कीलिदुं णीअदि त्ति पवहण-
एण कहिदं (६३)।

शकारः। पुणो वि मुदं अज्जेहिं ? (६४)।

शर्विलकः। एष भो! निर्मलज्योत्स्नो राहुणा ग्रस्यते शशी।

जलं कूलावपातेन प्रसन्नं कलुषायते॥ २४॥

वीरक! पश्चादिह भवतो न्यायं द्रक्ष्यामः। य एषोऽधि-
करणद्वारि अश्वस्तिष्ठति, तमेनमारुह्य गत्वा पुष्पकरण्डको-
द्यानं, दृश्यताम्, अस्ति तत्र काचिद्विपन्ना स्त्री न वेति ?

वीरकः। जं अज्जो आणवेदि। इति निष्क्रान्तः। प्रविश्य
च। गदोम्हि तहिं, दिट्ठं च मए इत्थिआकलेवरं सावदेहिं
विलुप्पन्तं (६५)।

श्रेष्ठिकायस्थौ। कधं तुए जाणिदं इत्थिआकलेवरं त्ति (६६)

(६३) अस्मार्य्यचारुदत्तस्य, वसन्तसेना आरूढा, पुष्पकरण्डक-
जीर्णोद्यानं क्रीडितुं नीयते, इति प्रवहणवाहकेन कथितम्।

(६४) पुनरपि श्रुतमार्य्यैः ?

(६५) यदार्य्य आज्ञापयति। गतोऽस्मि तत्र, दृष्टञ्च मया स्त्री-
कलेवरं श्वापदैर्विलुप्यमानम्।

(६६) कथं त्वया ज्ञातं स्त्रीकलेवरमिति ?

---

(२४) एष इति। निर्मला ज्योत्स्ना यस्य तादृशः, प्रसन्नं निर्मलं
कूलावपातेन तटभङ्गेन कलुषायते कलुषवदाचरति निर्मलीभवतीत्यर्थः,
अत्राप्रस्तुतेन राहुकर्त्तृकनिर्मलचन्द्रग्रासरूपेण तथा कूलभङ्गजनित-
निर्मलजलकालुष्यरूपेण च प्रस्तुतस्य चारुदत्तस्य दृश्यकलङ्कस्य कीर्त्तनात्
अप्रस्तुतप्रशंसेयमलङ्कृतिः।

वीरकः । सावसेसेहिं केस-हत्थ-पाणि-पादेहिं उवल-क्खिदं मए (६७)।

अधि । अहो ! धिग् वैषम्यं लोकव्यवहारस्य (८) ।

यथा यथेदं निपुणं विचार्यते, तथा तथा सङ्कटमेव दृश्यते ।
अहो ! सुसन्ना व्यवहारनीतयो मतिस्तु गौः पङ्कगतेव सीदति २५

चारु । स्वगतम् ।

यथैव पुष्पं प्रथमे विकाशे समेत्य पातुं मधुपाः पतन्ति ।
एवं मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्था बहुलीभवन्ति ॥२६॥

अधि । आर्य्य-चारुदत्त ! सत्यमभिधीयताम् ।

(६७) सावशेषैः केशहस्तपाणिपादैरुपलक्षितम्

(८) लोकव्यवहारस्य लौकिकविचारदर्शनस्य वैषम्यं वैपरीत्यं, ज्ञायते सत्यमेव चारुदत्तः निर्दोषः, परन्तु साक्ष्यादिभिर्घटनायां दृष्टायां तद्विपरीतमिवेति भावः ।

(२५) यथेति । निपुणं सम्यक्, सङ्कटं दुराबन्धं, व्यवहारस्य नीतयः नियमाः शास्त्रीयविधानानि इत्यर्थः सुसन्नाः सुलग्नाः सम्यक् मिलिता इत्यर्थः तु किन्तु मतिः मदीया बुद्धिः पङ्कगता कर्दमपतिता गौरिव सीदति न उत्थातुं शक्नोतीति भावः मद्बुद्ध्या चारुदत्तस्य निर्दोषतैवावधार्य्यते घटना तु दण्डनीतिमनुसरतीति भावः । वंशस्थ-विलं वृत्तम् ।

(२६) यथैवेति । यथा मधुपाः भ्रमराः प्रथमे विकाशे विकाश-मात्रमित्यर्थः समेत्य मिलित्वा पुष्पं पुष्पमधु इत्यर्थः पातुं पतन्ति आगच्छन्ति, एवं तथैवेत्यर्थः मनुष्यस्य विपत्तिकाले छिद्रेषु रन्ध्रेषु सत्सु अनर्थाः विपदः बहुलीभवन्ति विस्तारमापद्यन्ते इत्यर्थः । उपजाति-वृत्तम् ।

दुष्टात्मा परगुण-मत्सरी मनुष्यो
रागान्धः परमिह हन्तुकामबुद्धिः ।
किं यो वदति मृषैव जातिदोषात्
तद् ग्राह्यं भवति, न तद्विचारणीयम् ॥ २७ ॥

य । योऽहं लतां कुसुमितामपि पुष्पहेतो-
राकृष्य नैव कुसुमावचयं करोमि ।
सोऽहं कथं भ्रमरपक्षरुचौ सुदीर्घे
केशे प्रगृह्य रुदतीं प्रमदां निहन्मि ॥ २८ ॥

शकारः । हहो ! अधिअलणभोइआ ! किं तुम्हे पक्खवादेण ववहालं पेक्खध ? जेण अज्ज वि एशे हदाश चालुदत्ते आशणे धालीअदि (६८) ।

(६८) हंहो ! अधिकरणभोजकाः ! किं यूयं पक्षपातेन व्यवहारं पश्यत ? येनाद्यापि एष हताशचारुदत्त आसने धार्य्यते ।

(२७) दुष्टात्मेति । इह संसारे यः परगुणमत्सरी परगुणविद्वेषी दुष्टात्मा मनुष्यः दुर्जन इत्यर्थः रागान्धः तथा परम् अन्यं हन्तुं कामः यस्याः तादृशी बुद्धिर्यस्य तादृशः सन् जातिदोषात् अपकृष्टजातिवशात् मृषैव मिथ्या एव यद् वदति, तत् तस्य वचनं किं ग्राह्यं भवति ? तत् विचारणीयं न ? अवश्यमेव विचार्य्यमित्यर्थः ।

(२८) य इति । यः अहं कुसुमितां सञ्जातकुसुमां लतामपि पुष्पहेतोः पुष्पार्थम् आकृष्य कुसुमावचयं पुष्पचयनं नैव करोमि, सः अहं भ्रमरपक्षरुचौ अत्युज्ज्वलनीले इत्यर्थः सुदीर्घे केशे प्रगृह्य रुदतीं प्रमदां वसन्तसेनामित्यर्थः निहन्मि मारयामि । नैवैतत् कथमपि सम्भवतीति भावः । वसन्ततिलकं छन्दः ।

अधि। भद्र शोधनक! एवं क्रियताम्। शोधनकस्तथा करोति।

चारु। विचार्य्यतां, भो अधिकृताः! विचार्य्यताम्। इति आसनादवतीर्य्य भूमौ उपविशति।

शकारः। स्वगतम्। सहर्षं नर्त्तित्वा। ही, अणेण मए कड़े पावे अस्शश्श मत्थके निबड़िदे, ता जहिं चालुदत्ताके उबविशदि तहिं हग्गे उबविशामि। तथा कृत्वा। चालुदत्ता! पेक्ख पेक्ख मं, ता भण भण मए मालिदे त्ति (६८)।

चारु। भो अधिकृताः! दुष्टात्मा। इति पूर्वोक्तं पठति। सनिश्वासं स्वगतम्।

मैत्रेय! भोः! किमिदमद्य ममोपघातो
हा ब्राह्मणि! द्विजकुले विमले प्रसूता।
हा रोहसेन! न हि पश्यसि मे विपत्तिं
मिथ्यैव नन्दसि परव्यसनेन नित्यम्॥ २८॥

---

(६८) अनेन मया कृतं पापमन्यस्य मस्तके निपतितम्, तत् यत्र चारुदत्त उपविशति तत्रोपविशामि। चारुदत्त! पश्य पश्य माम्, तद् भण भण मया मारितेति।

---

(२८) सम्प्रति विपत्तौ स्वजनस्मरणमाह मैत्रेय इति। भो मैत्रेय! इदं ममाकस्मिकदुर्घटनमित्यर्थः किम्? कथमुपनतमित्यर्थः? अद्य मम निर्दोषस्यापीति भावः उपघातः अनिष्टपातः? हा इति खेद-सूचकमव्ययम्। ब्राह्मणि! पत्न्याः सम्बोधनमिदं विमले निर्मले अकलङ्के इत्यर्थः द्विजकुले विप्रवंशे प्रसूता जाता असीति शेषः अकलङ्क-

प्रेषितश्च मया तद्वार्त्तान्वेषणाय मैत्रेयो वसन्तसेना-सकाशम्, शकटिकानिमित्तञ्च (ध) तस्य प्रदत्तान्यलङ्करणानि प्रत्यर्पयितुम्, तत्कथं चिरयते ?

ततः प्रविशति गृहीताभरणो विदूषकः ।

विदू । पेसिदोम्हि अज्जचारुदत्तेण वसन्तसेणासआसं, तहिं अलङ्करणाइं गेह्णिअ, जधा अज्ज मित्तेअ ! वसन्तसेणाए वच्छो रोहसेणो अत्तणो अलङ्कारेण अलङ्करिअ जणणीसआसं पेसिदो, इमस्स आहरणं दादव्वं, ण उण गेह्णिदव्वं, ता समप्पेहि त्ति । ता जाव वसन्तसेणा सआसं जेव गच्छामि । परिक्रम्यावलोक्य च आकाशे । कधं भाव रेभिलो ! भो भाव रेभिल ! किं णिमित्तं तुमं उव्विग्गो उव्विग्गो विअ लक्खीअसि ? आकर्ण्य । किं भणासि ? पिअवअस्सो चारुदत्तो अधिअरणमण्डवं सद्दावीअदि त्ति ?

---

जुवजायास्तव पत्युरीदृशकलङ्कापातेन प्राणदण्डेऽतिदुःसह इति भावः, हा रोहसेन ! पुत्रसम्बोधनमिदं मे मम विपत्तिं प्राणदण्डरूपां विपदं न हि पश्यसि, परव्यसनेन परेण केवलेन व्यसनेन बाल्यसुलभेन क्रीड़नेन नित्यं सततं मिथ्यैव नन्दसि वृथानन्दमनुभवसि, मत्परमतीव-दुःखसागरे पतिष्यसीति भावः । परव्यसनेनेत्यत्र वत व्यसनेनेति पाठा-न्तरं वत इति खेदसूचकमव्ययम् । वसन्ततिलकं वृत्तम् ।

(ध) तद्वार्त्तान्वेषणाय तस्याः वसन्तसेनाया वार्त्ता समाचारः तस्या अन्वेषणं तस्मै । तस्य रोहसेनस्य शकटिकानिमित्तं स्वर्णशकटिका-निर्माणाय इत्यर्थः, तस्या इति पाठे तस्याः वसन्तसेनाया इति कर्त्तरि षष्ठी, रोहसेनपन्तुष्टये वसन्तसेनादेशेन स्वर्णशकटनिर्माणार्थमित्यर्थः ।

ता ण हु अप्पेण कज्जेण होदव्वं। विचिन्त्य। ता पच्छा वसन्तसेणा-सआसं गमिस्सं, अधिअरणमण्डवं दाव गमिस्सं। परिक्रम्यावलोक्य च। इदं अधिअरणमण्डवं, ता जाव पविसामि। प्रविश्य। सुहं अधिअरण-भोइआणं। कहिं मम पिअवअस्सो? (७०)।

अधि। नन्वेष तिष्ठति।

विदू। वअस्स! सोत्थि दे (७१)।

चारु। भविष्यति।

विदू। अवि क्खेमं दे? (७२)।

चारु। एतदपि भविष्यति।

विदू। भो वयस्स! किं णिमित्तं उव्विग्गो उवि

---

(७०) प्रेषितोऽस्मि आर्य्यचारुदत्तेन वसन्तसेनासकाश
अलङ्करणानि गृहीत्वा, यथा आर्य्यमैत्रेय! वसन्तसेनया व
आत्मनोऽलङ्कारेणालङ्कृत्य जननीसकाशं प्रेषितः, अ
दातव्यं, न पुनर्ग्रहीतव्यम्, तत् समर्पयेति। तत् यावत्
सकाशमेव गच्छामि। कथं! भाव रेभिलः! भो भाव
निमित्तं त्वमुद्विग्न उद्विग्न इव लक्ष्यसे? किं भणसि
चारुदत्तः अधिकरणमण्डपमाहूयते इति? तत् न
कार्य्येण भवितव्यम्। तत्पश्चात् वसन्तसेनासकाशं ग
करणमण्डपं तावत् गमिष्यामि। अयमधिकरणमण्
प्रविशामि। सुखम् अधिकरणभोजकानाम्। क्व म

(७१) वयस्य! स्वस्ति ते।

(७२) अपि क्षेमं ते?

विश्र लक्खीअसि ? कुदो वा सट्टाइदो ? (७३)।

चारु। वयस्य ! ।

मया खलु नृशंसेन परलोकमजानता ।

स्त्री रतिर्वाविशेषेण शेषमेषोऽभिधास्यति ॥ ३० ॥

विदू। किं किम् ?

चारु। कर्णे। एवमेवम् ।

विदू। को एव्वं भणादि ? (७४)।

चारु। संज्ञा शकारं दर्शयति। नन्वेष तपस्वी हेतुभूतः कृतान्तो मां व्याहरति (न)।

विदू। जनान्तिकम्। एव्वं कीस ण भणीअदि गेहं गदेत्ति ? (७५)।

---

(७३) भो वयस्य ! किं निमित्तम् उद्विग्न उद्विग्न इव लक्ष्यसे ? कुतो वा व्याकुलः ?

(७४) क एवं भणति ?

(७५) एवं कथं न भण्यते ? गतेहं गतेति।

---

* (३०) मयेति। परलोकम् अजानता नृशंसेन मया खलु निश्चितं स्त्री वा अथवा अविशेषेण रतिः कामपत्नी रत्या अविशेषा इत्यर्थः रूपलावण्याद्यतिशयात् कामपत्न्या अन्यूना इत्यर्थः वसन्तसेना, शेषं दुर्वचनीयमंशं घातितेति पदम् एषः शकार इति शेषः अभिधास्यति। कथयिष्यति।

(न) तपस्वी वराकः निर्दोष इति भावः, कृतान्तः यमः दैवं वा "कृतान्तो यमदैवयोः" इति कोषः। व्याहरति अनेनैव वसन्तसेना हतेति कथयति।

चाह। उच्यमानमपि अवस्थादोषान्न गृह्यते।

विदू। भो भो अज्जा! जेन दाव पुरट्ठावण-विहारारा-मदेउल-तड़ाग-कूव-जूवेहिं अलंकिदा णअरी उज्जइणी, सो अणीसो (प) अत्थकल्लवत्तकारणादो एरिसं अकज्जं अणु-चिट्ठदि त्ति? सक्रोधम्। अरे रे काणेलीसुदा! राअश्शाल-सण्ठाणआ! उस्सिङ्खलआ! किदजण दोसभण्डआ! बहु-सुवण्णमण्डिद मक्कड़आ! भण भण मम अग्गदो, जो दाणिं मम पिअवअस्सो कुसुमिदं माधवीलदं पि आअट्ठिअ कुसु-मावचअं ण करेदि, कदा वि आअट्ठिदाए पल्लवच्छेदो भोदि त्ति, सो कधं एरिसं अकज्जं उहअ-लोअविरुद्धं करेदि? चिट्ठ रे कुट्टणिउत्ता! चिट्ठ, जाव एदिणा तव हिअअ-कुड़िलेण दण्डअट्ठेण मत्थअं दे सदखण्डं करेमि (७६)।

(७६) भो भो आर्य्याः! येन तावत् पुरस्थापन-विहाराराम-देवालय-तड़ाग-कूप-यूपैरलङ्कृता नगरी उज्जयिनी, सः अनीशः अर्थ-कल्यवर्त्तकारणात् ईदृशमकार्य्यम् अनुतिष्ठतीति? अरे रे कुलटा-पुत्र! राजश्यालकसंस्थानक! उच्छृङ्खलक! कृतजनदोषभाण्ड! बहु-सुवर्ण-मण्डित-मर्कटक! भण भण ममाग्रतः, य इदानीं मम प्रिय-वयस्यः कुसुमितां माधवीलतामप्याकृष्य कुसुमावचयं न करोति, आकृष्ट-तया पल्लवच्छेदो भवतीति, स कथमीदृशमकार्य्यमुभयलोकविरुद्धं करोति? तिष्ठ रे कुट्टनीपुत्र! तिष्ठ, यावदेतेन तव हृदयकुटिलेन दण्डकाष्ठेन मस्तकं ते शतखण्डं करोमि।

(प) अनीशः इदानीम् अक्षमः दरिद्र इत्यर्थः।

शकारः। सक्रोधम्। शुणन्तु शुणन्तु अज्जमिश्शा। चालु-दत्ताकेण शह मम विवादे ववहाले वा, ता कीश एशे काकपदशीश-मत्थका मम शिले शदखण्डे कलेदि? मा दाव ले दाशीए उत्ता दुट्टवडुक्का! (७७)।

विदू। दण्डकाष्ठमुद्यम्य पूर्वोक्तं पठति।

शकारः। सक्रोधमुत्थाय ताडयति।

विदू। प्रतीपं ताडयति। अन्योऽन्यं ताडयतः। विदूषकस्य कक्षदेशादाभरणानि पतन्ति।

शकारः। तानि गृहीत्वा दृष्ट्वा ससाध्वसम्। पेक्खन्तु पेक्खन्तु अज्जा एदे क्खु ताए तवश्शिणीए केलका अलङ्काला। चारु-दत्तमुद्दिश्य। इमश्श अत्थकल्लवत्तश्श कालणादो एशा मालिदा वावादिदा अ (७८)।

अधिकृताः सर्वे अधोमुखाः स्थिताः।

चारु। जनान्तिकम्।

अयमेवविधे काले दृष्टो भूषणविस्तरः।
अस्माकं भाग्यवैषम्यात् पतितः पातयिष्यति॥ ३१॥

---

(७७) शृण्वन्तु शृण्वन्तु आर्यमिश्राः, चारुदत्तेन सह मम विवादो व्यवहारो वा, किमर्थमेष काकपदशीर्षमस्तकः मम शिरः शतखण्डं करोति? मा तावत्, रे दास्याः पुत्र दुष्टवटुक!

(७८) पश्यन्तु पश्यन्तु आर्याः, एते खलु तस्यास्तपस्विन्या अलङ्काराः। अस्य अर्थकल्यवर्त्तस्य कारणादेषा मारिता व्यापादिता च।

---

(३१) अयमिति। एवंविधे काले अस्माकं भाग्यवैषम्यात् दौर्भाग्यात् पतितः अत एव दृष्टः राजपुरुषैरिति शेषः अयं भूषणविस्तरः अलङ्कारसमुदायः पातयिष्यति मामिति शेषः।

विदू । भो ! कीस भूदत्थं ण णिवेदीअदि ? (७९) ।

चारु । वयस्य !

दुर्बलं नृपतेश्चक्षुर्नैतत् तत्त्वं निरीक्षते ।
केवलं वदतो दैन्यमश्लाघ्यं मरणं भवेत् ॥ ३२ ॥

श्रेष्ठि । कष्टं भोः ! कष्टम् ।

अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पतेः ।
ग्रहोऽयमपरः पार्श्वे धूमकेतुरिवोत्थितः ॥ ३३ ॥

श्रेष्ठिकायस्थौ । विलोक्य वसन्तसेनामातरमुद्दिश्य । अवहिदा

(७९) भोः ! किमर्थं भूतार्थो न निवेद्यते ?

(३२) दुर्बलमिति । नृपतेः राज्ञः चक्षुः दुर्बलं स्वतः स्वदर्शना-ज्ञारचक्षुषैव दर्शनाच्च तत्त्वदर्शने अक्षममित्यर्थः, एतत् राजचक्षुः तत्त्वं याथार्थ्यं प्रकृतघटनामिति यावत् न निरीक्षते न पश्यति, वदतः न मया मारितेति कथयतः मम केवलं दैन्यं दीनता कातरता तथा अश्लाघ्यं राजदण्डेन मरणस्यातिनिन्दितत्वात् अप्रशंसनीयं गर्हित-मित्यर्थः मरणं भवेत् सत्यकथने कातरताप्रकटनमेव न तु प्राणदण्डा-न्निष्कृतिरिति भावः ।

(३३) अङ्गारकेति । अङ्गारकेण मङ्गलेन विरुद्धस्य अत एव प्रक्षी-णस्य दुर्बलस्य बृहस्पतेः पार्श्वे अयं अपरः मङ्गलाजन्य इत्यर्थः ग्रहः धूमकेतुरिव उत्थितः उपस्थितः, अत्राप्रस्तुतेनानेन अङ्गारकविरुद्धबृह-स्पतेर्धूमकेतुपराक्रमणवर्णनेन प्रस्तुतस्य शकाराभियुक्तचारुदत्तस्य वसन्तसेनाजङ्गारपातरूपप्रमाणकीर्त्तनादप्रस्तुतप्रशंसेयमलङ्कृतिः । अत्रा-ङ्गारकसदृशः शकारः, बृहस्पतिसदृशश्चारुदत्तः, धूमकेतुसदृशोऽलङ्कार-पात इति बोद्धव्यम् ।

दाव अज्जा, एदं सुवस्सभण्डअं अवलोएदु, सो ज्जेव एसो ण वेत्ति (८०)।

वृद्धा। अवलोक्य। सरिसो एसो, ण उण सो (८१)।

शकारः। आं वुड्ढकुट्टणि! अक्खीहिं मत्तिदं वाआए मूकिदम् (८२)।

वृद्धा। हदास! अवेहि (८३)।

श्रेष्ठिकायस्थौ। अप्पमत्तं कधेहि, सो ज्जेव एसो ण वेत्ति (८४)।

वृद्धा। अज्ज! सिप्पिकुसलदाए ओबन्धे (फ) दिट्टिं, ण उण सो (८५)।

अधि। भद्रे! अपि जानास्येतान्याभरणानि?

वृद्धा। णं भणामि। ण हु ण हु अणभिजाणिदो, अह वा कदा वि सिप्पिणा घडिदो भवे (८६)।

---

(८०) अवहिता तावदार्य्याः, इदं सुवर्णभाण्डमवलोकयतु तदेवेदं न वेत्ति।

(८१) सदृश एष, न पुनः सः।

(८२) वृद्धकुट्टनि! अक्षिभ्यां मन्त्रितं वाचा मूकितम्।

(८३) हताश! अपेहि।

(८४) अप्रमत्तं कथय, स एव एष न वेति।

(८५) आर्य्य! शिल्पिकुशलतया अवबध्नाति दृष्टिम्, न पुनः सः।

(८६) ननु भणामि। न खलु न खलु अनभिज्ञातः, अथवा, कदापि शिल्पिना घटितो भवेत्।

(फ) अवबध्नाति व्याकर्षति

ऋधि। पश्य श्रेष्ठिन्!

वस्त्वन्तराणि सदृशानि भवन्ति नूनं
रूपस्य भूषणगुणस्य च कृत्रिमस्य।
दृष्ट्वा क्रियामनुकरोति हि शिल्पिवर्गः
सादृश्यमेव कृतहस्ततया च दृष्टम्॥ २४॥

श्रेष्ठिकायस्थौ। अज्जचारुदत्तस्स केरकाइं एदाइं (८७)।

चारु। न खलु न खलु।

श्रेष्ठिकायस्थौ। ता कस्स? (८८)।

चारु। इहाऽत्रभवत्या दुहितुः।

श्रेष्ठिकायस्थौ। कधं एदाइं ताए विओअं गदाइं? (८९)

चारु। एवं गतानि, आं इदम् (ब)।

---

(८७) आर्यचारुदत्तीयान्येतानि।

(८८) तदा कस्य?

(८९) कथमेतानि तस्या वियोगं गतानि?

---

(२४) वस्त्वन्तराणीति। कृत्रिमस्य करणाभिष्पन्नस्य मानवकृतस्य इत्यर्थः रूपस्य आकृतेः भूषणगुणस्य अलङ्कारस्य सदृशानि तुल्यानि वस्त्वन्तराणि अन्यानि कटककुण्डलादीनि च नूनं निश्चितं भवन्ति हि यतः शिल्पिवर्गः कारुगणः क्रियां कार्य्यं दृष्ट्वा कृतहस्तत[illegible] शिक्षानैपुण्येनेत्यर्थः सादृश्यं अनुकरोति तत्सदृशं निर्मातुं [illegible]तीत्यर्थः। दृष्टं एतदिति शेषः अस्माभिरेतत् प्रत्यक्षीकृतमित्यर्थः भूषणमिदं वसन्तसेनाया एव नान्यस्येति कथं निर्णीयते इति भा[illegible] वसन्ततिलकं वृत्तम्।

(ब) एवं गतानि, सुवर्णशकटार्थं ददतः रोहसेनस्य [illegible]

शोधनकः। अज्ज चारुदत्त ! एत्थ सच्चं वत्तव्वं।
पेक्ख, पेक्ख।

सच्चेण सुहं क्खु लब्भइ, सच्चालाविण होइ पादई।
सच्चं त्ति दुवेवि अक्खरा मा सच्चं अलिएण गूहेहि (९०) ॥२५॥

चारु। आभरणान्याभरणानीति न जाने, किन्त्वस्मद्-गृहादानीतानीति जाने।

शकारः। उज्जाणं पवेसिअ पढमं मालेसि, कवडका-वडिआए सम्पदं णिगूहेसि (९१)।

अधि। आर्य्य चारुदत्त ! सत्यमभिधीयताम्।

इदानीं सुकुमारेऽस्मिन् निःशङ्कं कर्कशाः कशाः।
तव गात्रे पतिष्यन्ति सहास्माकं मनोरथैः ॥ २६ ॥

---

(९०) आर्य्य चारुदत्त ! अत्र सत्यं वक्तव्यम्। पश्य पश्य,
सत्येन सुखं खलु लभ्यते सत्यालापी न भवति पातकी।
सत्यमिति द्वेऽपि अक्षरे, मा सत्यमलीकेन गूहय॥

(९१) उद्यानं प्रवेश्य प्रथमं मारयसि, कपटकार्पटिकतया साम्प्रतं निगूहसि।

---

शान्तये इमानि भूषणानि सुवर्णशकटिकानिर्माणार्थं वसन्तसेनया चेटीहस्ते दत्तानीति तदङ्काद् भ्रष्टानि, आम् इदम् इदं मदुक्तम् आम् एवंरूपं तथ्यमिति यावत् आमिति तथ्यवचनमव्ययम्।

(२५) सत्येनेति। सत्यमिति उभौ अक्षरौ द्व्यक्षरमित्यर्थः सत्यं सारः जगति सत्यमेव सारः अन्यत् सर्वं व्यर्थमेति भावः। अन्यत् सुगमम्। वैतालीयं छन्दः।

(२६) इदानीमिति। सुकुमारे सुकोमले अस्मिन् तव गात्रे इदानीं

चारु। अपापानां कुले जाते मयि पापं न विद्यते।

यदि सम्भाव्यते पापमपापेन च किं मया ॥ ३७॥

स्वगतम्। नच मे वसन्तसेनाविरहितस्य जीवितेन कृत्यम्।

प्रकाशम्। भोः! किं बहुना।

मया किल नृशंसेन लोकद्वयमजानता।

स्त्री रतिश्च विशेषेण शेषमेषोऽभिधास्यति ॥ ३८ ॥

शकारः। वावादिदा, अले तुमं पि भण मए वावादि-

देत्ति (९२)।

चारु। त्वयैवोक्तम्।

शकारः। शुणेध शुणेध भट्टालका! एदेण मालिदा।

एदेण ज्जेव शंशए छिण्णे एदस्स दलिद्दचालुदत्तस्स शालीले

दण्डे धालीअदु (९३)।

(९२) व्यापादिता, अरे त्वमपि भण, मया व्यापादितेति।

(९३) शृणुत शृणुत भट्टारकाः, एतेन मारिता। एतेनैव संशये

छिन्ने एतस्य दरिद्रचारुदत्तस्य शारीरो दण्डो धार्यताम्।

---

कर्कशाः कठिनाः कशाः प्रहरणविशेषाः अस्माकं मनोरथैः अभिलाषैः सह निःशङ्कं प्राणविनाशी भवेत्वमेवेति संशयरहितं निर्दयमित्यर्थः यथा तथा निपतिष्यन्ति। यथा अस्माकं मनोरथास्तवानिष्टनिवारणविषया निपतिष्यन्ति विफला भविष्यन्तीत्यर्थः, तथा अचिरात्त्वमेव तवोपरि घोरो राजदण्डः पतिष्यतीति समुदायार्थः।

(३७) अपापानामिति। यदि पापं सम्भाव्यते मयीति शेषः तदा अपापेन नास्ति पापः यस्मात् तेन अतिपापिना इत्यर्थः मया च जीवितेनेति शेषः किं न किमपि प्रयोजनमित्यर्थः।

(३८) मयेति। पूर्वं व्याख्यातम्।

अधि। शोधनक! यथाह राष्ट्रियः। भो राजपुरुषाः! गृह्यतामयं चारुदत्तः। राजपुरुषा गृह्णन्ति।

वृद्धा। प्रसीदन्तु प्रसीदन्तु अज्जमिस्सा, जो दाव चोरेहिं अवहदस्स। इत्यादि पूर्वोक्तं पठति। ता जदि वावादिदा मम दारिआ, वावादिदा, जीवदु मे दीहाऊ। अस्सं च। अत्थिपच्चत्थिणं ववहारो, अहं अत्थिणी, (भ) ता मुञ्चध एदम् (८४)।

शकारः। अवेहि गब्भदासि! गच्छ, किं तव एदिणा? (८५)।

अधि। आर्य्ये गम्यताम्। हे राजपुरुषा! निष्क्रामयतैनाम्।

वृद्धा। हा जाद! हा पुत्तअ! (८६) इति रुदती निष्क्रान्ता।

शकारः। स्वगतम्। कडं मए एदस्स अत्तणो शलिशं, अम्पदं गच्छामि (८७) निष्क्रान्तः।

---

(८४) प्रसीदन्तु प्रसीदन्तु आर्य्यमिश्राः। यस्तावत् चौरैरपहृतस्य। तत् यदि व्यापादिता मम दारिका, व्यापादिता, जीवतु मे दीर्घायुः। अन्यच्च अर्थिप्रत्यर्थिनोर्व्यवहारः, अहमर्थिनी, तत् मुञ्चतैनम्।

(८५) अपेहि गर्भदासि! गच्छ, किं तवैतेन।

(८६) हा तात! हा पुत्रक!

(८७) कृतं मयैतस्य आत्मनः सदृशम्, साम्प्रतं गच्छामीति।

---

(भ) अर्थिप्रत्यर्थिनोः वादिप्रतिवादिनोः अर्थिनी वादिनी मया यदभियोक्तव्यं तदेव विचार्य्यमधिकरणिकेनेति भावः।

अधि। आर्य्य चारुदत्त ! निर्णये (य) वयं प्रमाणम्, शेषे तु राजा, तथापि शोधनक ! विज्ञाप्यतां राजा पालकः ।

अयं हि पातकी विप्रो न बध्यो मनुरब्रवीत् ।
राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह ॥ ३९ ॥

शोधनकः। जं अज्जो आणवेदि । इति निष्क्रम्य पुनः प्रविश्य सास्रम्। अज्जा गदम्हि तहिं । राआ पालओ भणादि, जेण अत्थकल्लवत्तस्स कारणादो वसन्तसेणा वावादिदा, तं ताइं ज्जेव आहरणाइं गले बन्धिअ डिण्डिमं ताड़िअ दक्खिण-मसाणं णइअ सूले भज्जेध त्ति । जो को वि अवरो एरिसं अकज्जं अणुचिट्ठदि सो एदिणा सणिआरदण्डेण (र) सासीअदि (९८) ।

चारु। अहो ! अविमृश्यकारी राजा पालकः ।

---

(९८) यदार्य्य आज्ञापयति । आर्य्याः ! गतोऽस्मि तत्र । राजा पालको भणति येन अर्थकल्यवर्त्तस्य कारणात् वसन्तसेना व्यापादिता तं तान्येव आभरणानि गले बद्धा डिण्डिमं ताड़यित्वा दक्षिणश्मशानं नीत्वा शूले भङ्क्त इति । यः कोऽप्यपर ईदृशमकार्य्यमनुतिष्ठति स एतेन स एतेन सनिकारदण्डेन शास्यते ।

---

(य) निर्णये दोषित्वादोषित्वावधारणे, शेषे दण्डविधाने इत्यर्थः ।

(३९) अयमिति । अयं विप्रः चारुदत्तः पातकी, किन्तु मनु-रब्रवीत् पातकी विप्रः न बध्यः अतः अक्षतैः अविनष्टैः विभवैः धनैः सह अयं अस्मात् राष्ट्रात् राज्यात् निर्वास्यः दूरीकर्त्तव्यः ।

(र) सनिकारदण्डेन सापमानदण्डेन ।

अथवा, ईदृशे व्यवहाराग्नौ मन्त्रिभिः परिपातिताः ।

स्थाने खलु महीपाला गच्छन्ति कृपणां दशाम् ॥ ४० ॥

अपिच, ईदृशैः श्वेतकाकीयै राज्ञः शासनदूषकैः ।

अपापानां सहस्राणि हन्यन्ते च हतानि च ॥ ४१ ॥

सखे मैत्रेय ! गच्छ, मद्वचनादम्बामपश्चिममभिवादयस्व, पुत्रञ्च मे रोहसेनं परिपालयस्व ।

विदू । मूले छिण्णे कुदो पादवस्स पालणं (९८) ।

चारु । मा मैवम्,

नृणां लोकान्तरस्थानां देहप्रतिकृतिः सुतः ।

मयि यो वै तव स्नेहो रोहसेने स युज्यताम् ॥ ४२ ॥

---

(९८) मूले छिन्ने कुतः पादपस्य पालनम् ?

---

(४०) ईदृशे इति । ईदृशे एवंप्रकारे व्यवहाराग्नौ विचारदर्शनरूपवह्नौ मन्त्रिभिः परिपातिताः महीपालाः कृपणां दीनां नरकपातहेतुभूतामिति यावत् दशाम् अवस्थाम् गच्छन्ति इति यत् तत् स्थाने खलु युक्तमेव युक्तत्वे साम्प्रतं स्थाने इत्यमरः ।

(४१) ईदृशैरिति । श्वेतकाकीयैः शुभ्रवर्णकाकतुल्यैः शुभ्रवर्णाः काका हि यद्धिः सुदृश्याः परमतीशानिष्टजनका इति भावः । ईदृशैः एवंप्रकारैः बाह्यसाधुभिरन्तर्विषैः राज्ञः शासनदूषकैः शासनं दण्डनीतिं दूषयन्तीति तथोक्तैः अयथाव्यवहारदर्शिभिरित्यर्थः अपापानां निरपराधानां सहस्राणि हतानि हन्यन्ते च ।

अपश्चिमं नास्ति पश्चिमः शेषः यत्र तद् यथा तथा इत्यर्थः अयं मे चरमः प्रणाम इति निवेद्य इत्यर्थः ।

(४२) नृणामिति । सुतः लोकान्तरस्थानां मृतानामित्यर्थः नृणां

विदू। भो वयस्स! अहं ते पिअवअस्सो भविअ तुए विरहिदाइं पाणाइं धारेमि? (१००)।

चारु। रोहसेनमपि तावद्दर्शय।

विदू। एव्वं जुज्जदि (१)।

अधि। भद्र शोधनक! अपसार्य्यतामयं वटुः। शोधनकस्तथा करोति।

अधि। कः कोऽत्र भोः! चण्डालानां दीयतामादेशः।

इति चारुदत्तं विसृज्य निष्क्रान्ताः सर्वे राजपुरुषाः।

शोधनकः। इदो आअच्छदु अज्जो (२)।

चारु। सकरुणम्। मैत्रेय भोः! किमिदमद्य। इत्यादि पठति। आकाशे।

विष-सलिल-तुलाग्नि-प्रार्थिते मे विचारे
क्रकचमिह शरीरे वीक्ष्य दातव्यमद्य।
अथ रिपु वचनाद्वा ब्राह्मणं मां निहंसि
पतसि नरकमध्ये पुत्रपौत्रैः समेतः॥ ४२॥

---

(१००) भो वयस्य! अहं ते प्रियवयस्यो भूत्वा त्वया विरहितान् प्राणान् धारयामि?

(१) एवं युज्यते।

(२) इत आगच्छतु आर्य्यः।

---

देहस्य शरीरस्य प्रतिकृतिः प्रतिरूपम् अतः मयि तव यः स्नेहः, रोहसेने स स्नेहः युज्यतां अर्प्यताम्।

(४२) विषेति। विषेण सलिलेन, तुलया अग्निना वा प्रार्थितः अवेति शेषः। तस्मिन् मे मम विचारे, विषादिभिर्मम विचारो भवतु इति

भयमागतोऽस्मीति । निष्क्रान्ताः सर्वे ।

व्यवहारो नाम नवमोऽङ्कः समाप्तः ।

# अथ दशमोऽङ्कः ।

ततः प्रविशति चाण्डालद्वयेनानुगम्यमानश्चारुदत्तः ।

उभौ । तक्किं ण कलश्श कालण णवबन्ह-बन्धणश्शणे णिउणा ।
अइलेण शीशक्केश्शण शूलाणोविश्शु कुशलम्ह ॥१॥
ओशलध अज्जा ! ओशलध । एशे अज्जचालुदत्ते ।

---

मया प्रार्थिते बीजस्य विशेषेण दृष्टा यदि पापं विद्यते तदा विषभक्षणे वा सलिलमज्जने प्राणवियोगः नान्यथा, तुलादण्डेन तोलने पापी, गुरुर्भवति न चेत् लघुः अग्निप्रवेशे वा धारणे शरीरस्य शा तदंशस्य दाहः नान्यथेति परीक्ष्य अद्य इह शरीरे क्रकचं करपत्रं प्राणदण्ड इत्यर्थः दातव्यं दातुमर्पितम् आधिकरणिकस्येति शेषः । अथ यदि रिपुवचनात् रिपोः शत्रोः शकारस्य वचनात् ब्राह्मणं मां निरपराध-मिति यावत् । निहंसि, तदा पुत्रपौत्रैः समेतः सहितः नरकमध्ये पतसि । निरपराधशासने दोषमाह मनुः, "अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्य दण्डयन् । अयशो महदाप्नोति नरकञ्चैव गच्छति ॥" इति विषादिपरीक्षा याज्ञवल्क्येनोक्ता यथा "तुलाग्न्यापो विषं कोषो दिव्या-नीह विशुद्धये । महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥" इति ।

(१) चारुदत्तं प्रत्युक्तिः । कलय विचारय इत्यर्थः, नवे नूतने वधे, वध्ये च विषये यत् नयनं तस्मिन्, अन्यत् सुविशदम् ।

दिण्ण-करवीलदामे गहिदे अम्हे हिं वज्झपुलिसेहिं ।
दीवे व्व मन्दणेहे थोअं थोअं खअं जादि (१) ॥ २ ॥

चारु । सविषादम् ।

नयनसलिलसिक्तं पांशुरुक्षीकृताङ्गं
पितृवनसुमनोभिर्वेष्टितं मे शरीरम् ।
विरसमिह रटन्तो रक्तगन्धानुलिप्तं
बलिमिव परिभोक्तुं वायसास्तर्कयन्ति ॥३॥

चाण्डालौ । ओशलध अज्जा ! ओशलध ।

(१) तत् किं न कलय कारणं नववध-बन्धनयने निपुणौ ।
अचिरेण शीर्षच्छेदन-शूलारोपेषु कुशलौ स्वः ॥
अपसरत आर्य्याः ! अपसरत । एष आर्य्यचारुदत्तः ।
दत्तकरवीरदामा गृहीत आवाभ्यां वध्यपुरुषाभ्याम् ।
दीप इव मन्दस्नेहः स्तोकं स्तोकं क्षयं याति ।

---

(२) दत्तकरवीरदामा दत्तं करवीरस्य दाम माल्यं यस्मै सः कर-वीरमाल्यभूषित इत्यर्थः माल्येन वध्यः अलङ्क्रियते इति प्रसिद्धिः । मन्दस्नेहः मन्दः अल्पः स्नेहः तैलं यत्र सः ।

(३) नयनेति । इह विरसं कर्कशं यथा तथा रटन्तः शब्दाय-मानाः वायसाः काकाः नयनसलिलेन अश्रुवारिणा सिक्तं पांशुभिः धूलिभिः रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयोरज इत्यमरः रुक्षी-कृतानि अङ्गानि यस्य तत् पितृवनसुमनोभिः श्मशानपुष्पैः वेष्टितं भूषितं रक्तगन्धेन रक्तचन्दनेन अनुलिप्तं मे मम शरीरं बलिमिव काकप्रदेय-पूजाद्रव्यमिव परिभोक्तुं तर्कयन्ति अस्माभिरेतत् खाद्यमिति विचारय-न्तीत्यर्थः । मालिनीवृत्तम् ।

किं पेक्खध ? छिज्जन्तं अण्णुलिग्रं काल-पलशु-धालाहिं ।
शुअण-अउणाधिवाशं अज्जण-पुलिशद्दुमं एदं ॥४॥

आअच्छ ले चालुदत्ता ! आअच्छ (२) ।

चारु । पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः, यदहमीदृशीं दशामनुप्राप्तः ।

सर्व्वगात्रेषु विन्यस्तैरक्तचन्दनहस्तकैः ।
पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः ॥५॥

अग्रतो निरूप्य । अहो ! तारतम्यं नराणाम् (क) । सकरुणम् ।

---

(२) अपसरत आर्य्याः ! अपसरत ।
किं पश्यत ? छिद्यमानं सत्पुरुषाः ! काल-परशु-धाराभ्याम् ।
सुजन-शकुनाधिवासं सज्जन-पुरुषद्रुममेतम् ॥

आगच्छ रे चारुदत्त ! आगच्छ ।

---

(४) हे सत्पुरुषाः ! साधवः ! सुजना एव शकुनाः पक्षिणः तेषाम् आवासः आश्रयः तं, सज्जनपुरुषः साधुपुरुषएव द्रुमः तं कालरूपपरशुधाराभ्यां आवाभ्यां विष्टताभ्यामिति भावः ।

(५) सर्वगात्रेष्विति । पुरुषः मानवः अहं सर्वगात्रेषु सर्वाङ्गेषु रक्तचन्दनहस्तकैः हस्तगृहीतरक्तचन्दनैः उपलक्षित इत्यर्थः विशेषणे तृतीया । तथा पिष्टं तिलतण्डुलादीनां विकारः तथा चूर्णं कुङ्कुमादि ताभ्यां अवकीर्णः अनुलिप्तश्च सन् पशूकृतः अपशुः पशुः कृतः, पशुर्दैवोद्देशेन छेदनीयश्छागादिर्यथा बलिदानार्थं रक्तचन्दनादिभिरलङ्क्रियते तथा अहमपि कृत इत्यर्थः ।

(क) तारतम्यं परस्परप्रभेदः कोऽपि मां दृष्ट्वा हृष्यन्ति केचन वा दुःखं प्रकाशयन्तीति भावः ।

अमी हि दृष्ट्वा मदुपेतमेतन्-
मर्त्त्यं धिगस्त्वित्युपजातवाष्पाः।
अशक्नुवन्तः परिरक्षितुं मां
स्वर्गं लभस्वेति वदन्ति पौराः ॥६॥

चाण्डालौ। ओसलध अज्जा! ओसलध, किं पेक्खध?
इन्दे प्पवाहिअन्ते, गोप्पसवे, सङ्कमं च तालाणं।
सुपुलिस-पाणविपत्ती, चत्तालि इमे ण दट्ठव्वा(२) ॥७॥

एकः। हण्डे आहीन्ता! (ख) पेक्ख पेक्ख।

(२) अपसरत आर्य्याः! अपसरत, किं पश्यत?
इन्द्रः प्रवाह्यमाणो गोप्रसवः सङ्क्रमश्च ताराणाम्।
सुपुरुषप्राणविपत्तिश्चत्वार इमे न द्रष्टव्याः॥

---

(६) अमी इति। अमी पौराः नागरिकाः मदुपेतं मयि उपेतं उपस्थितं एतत् अकारणवधदण्डरूपं अवमाननमित्यर्थः दृष्ट्वा मर्त्त्यं मानवं पशुवत् व्यवहरन्तमिति यावत् धिक् अस्तु इति उक्त्वेति शेषः उपजातवाष्पाः अश्रुपूर्णनयनाः मां परिरक्षितुं अशक्नुवन्तः अपारयन्तः सन्तः स्वर्गं लभस्व इति वदन्ति। उपजातिवृत्तम्।

(७) इन्द्र इति। अत्र इन्द्रशब्देन तदीयध्वजो लक्ष्यते तस्यैव प्रवाह्यत्वात् प्रवाह्यमाणः विसर्जनार्थं नीयमानः इन्द्रध्वजः, ताराणां नक्षत्राणां सङ्क्रमः चलनं अधःपतनमित्यर्थः। इन्द्रध्वज विसर्जनस्य रहसि कर्त्तव्यतामाह कालिकापुराणं यथा "उत्थापयेत्तूर्य्यरवैः सर्वलोकस्य वै पुरः। रहो विसर्जयेत् केतुं विशेषोऽयं प्रपूजने"। इति

(ख) हण्डे इति। नीचसम्बोधनमव्ययं हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रतीत्यमरः। आहीण्ड इति द्वितीयचण्डालनामसम्बोधनम्।

णअली-पधाणभुदे वज्झीअन्ते कदन्तअण्णाए ।
किं लुअदि अन्तलिक्खे ? आदु अणब्भे पडदि वज्जे ?(४)॥८॥

द्वितीयः । अले गोहा !

ण अ लुअदि अन्तलिक्खे णेअ अणब्भे पडदि वज्जे ।
महिला-समूह-मेहे निवडदि णअणम्बु धाराहिं ॥९॥

अपि च । वज्झम्मि णीअमाणे जणस्स सव्वस्स लोदमाणस्स ।
णअण-सलिलेहिं सित्ते लच्छादो ण उण्णमइ लेणू (५)॥१०॥

चारु । निरूप्य सकरुणम् ।

---

(४) अरे चाण्डाल ! पश्य पश्य ।
नगरीप्रधानभूते वध्यमाने कृतान्ताज्ञया ।
किं रोदित्यन्तरीक्षम् अथवा अनभ्रे पतति वज्रम् ? ॥

(५) अरे गोह ! न च रोदित्यन्तरीक्षं नैवानभ्रे पतति वज्रम् ।
महिलासमूहमेघान्निपतति नयनाम्बुधाराभिः ॥

अपि च । वध्ये नीयमाने जनस्य सर्वस्य रुदतः ।
नयनसलिलसिक्तो रथ्यातो न उन्नमति रेणुः ॥

---

(८) नगरीति । कृतान्तस्य यमरूपस्य राज्ञः आज्ञया आदेशेन सर्वदिक्षु नागरिकाणां हाहाकारशब्दप्रादुर्भावात् अन्तरीक्षं रोदितीति चाण्डालोक्तिः अनभ्रं विना मेघमित्यर्थः वज्रं पतति तादृश सद्गुण-वत्स अकारणप्राणदण्डस्य वज्रपातादिति भावः ।

(९) गोह इति । प्रथमचाण्डालनामसम्बोधनम् । महिलेति धाराभिः प्रवाहैः, अनवरताश्रुधारा पततीत्यर्थः ।

(१०) वध्य इति । रथ्यातः मार्गात् उन्नमति उत्तिष्ठति, अन्यत् स्पष्टम् ।

एताः पुनर्हर्म्यगताः स्त्रियो मां
वातायनार्द्धेन विनिःसृतास्याः।
हा! चारुदत्तेत्यभिभाषमाणा
वाष्पं प्रणालीभिरिवोत्सृजन्ति ॥११॥

चाण्डालौ। आअच्छ ले चालुदत्ता! आअच्छ इमं घोशणट्ठाणं। आहणेध डिण्डिमं, घोशेध घोशणं (६)।

उभौ। शुणाध अज्जा! शुणाध। एशे शत्थवाह-विणअ-दत्तश्श णत्तिके शाअलदत्तश्श पुत्तके अज्जचालुदत्ते णाम, एदिणा किल अकज्जकालिणा गणिआ वशन्तशेणा अत्थ-कल्लवत्तश्श कालणादो शुस्र पुप्फकलण्डअजिण्णुज्जाणं पवे-शिअ बाहुपाशबलक्कालेण मालिद त्ति एशे शलोत्ते (ग) गहिदे, शअं अ पडिवस्से, तदो लणा पालएण अम्हे आणत्ता एदं मालेदुं। जदि अवले ईदिशं उभअ-लोअ-

(६) आगच्छ रे चारुदत्त! आगच्छ इदं घोषणास्थानम्। आहत डिण्डिमं, घोषयत घोषणम्।

(११) एता इति। वातायनार्द्धेन वातस्य अयनं गमनं येन तत् वातायनं गवाक्षः तस्य अर्द्धेन विनिःसृतानि विनिर्गतानि आस्यानि मुखानि यासां ताः प्रणालीभिः धाराभिः। अन्यत् सुगमम्। इन्द्रवज्रा-वृत्तम्।

(ग) सलोप्त्रः लोप्त्रम् अपहृतं धनं तेन सहितः सद्रव्यः चाक-छार इत्यर्थः।

विलुद्धं अकज्जं कलेदि तं पिलाश्रा पालए एव्वं ज्जेव्व आणवेदि (७)।

चारु। सनिर्व्वेदं स्वगतम्।

मखशत-परिपूतं गोत्रमुद्भासितं मे
सदसि निविड़चैत्य-ब्रह्मघोषैः पुरस्तात्।
मम मरणदशायां वर्त्तमानस्य पापै-
स्तदसदृश मनुष्यैर्घुष्यते घोषणायाम् ॥१२॥

ऊर्द्ध्वमवलोक्य कर्णौ पिधाय। हा प्रिये वसन्तसेने!

(७) शृणुत आर्य्याः! शृणुत। एष सार्थवाहविनयदत्तस्य नप्ता सागरदत्तस्य पुत्रकः आर्य्य-चारुदत्तो नाम, एतेन किलाकार्य्य-कारिणा गणिका वसन्तसेना अर्थकल्यवर्त्तस्य कारणात् शून्यं पुष्पकरण्ड-कजीर्णोद्यानं प्रवेश्य बाहुपाशबलात्कारेण मारितेति एष सलोप्त्रो गृहीतः, स्वयञ्च प्रतिपन्नः, ततो राज्ञा पालकेन वयमाज्ञप्ता एतं मार-यितुम्। यद्यपर ईदृशमुभयलोकविरुद्धमकार्य्यं करोति तमपि राजा पालक एवमेव शास्ति।

---

(१२) मखेति। पुरस्तात् पूर्वं मे मम गोत्रं कुलं सदसि यज्ञ-संसदि मखानां यज्ञानां शतैः परिपूतं तथा निविड़ानि निरन्तर-लोकैराकीर्णानि यानि चैत्यानि पूजाद्यायतनस्थानानि तेषु ये ब्रह्म-घोषाः वेदवादाः तैरुद्भासितं समुज्ज्वलीकृतमासीदिति शेषः। इदानीं मरणदशायां वर्त्तमानस्य मम तत् गोत्रं पापैरसदृशमनुष्यैः नीचजनैः घोषणायां घोषणस्थाने घुष्यते कीर्त्यते किमतःपरमाक्षेपकरमिति भावः। मालिनीवृत्तमेतत्।

शशिविमल-मयूख शुभ्रदन्ति !
सुरुचिर-विद्रुम सन्निभाधरौष्ठि !
तव वदन भवामृतं निपीय
कथमवशो ह्ययशोविषं पिबामि ॥१३॥

उभौ। ओशलध अज्जा ! ओशलध।

एशे गुणलअण-णिही सज्जणदुक्खाण उत्तलणशेदू।
अशुवण्णमण्डणअं अवणीअदि अज्ज णअलीदो ॥१४॥

अपाञ्च।

शव्वे क्खु होइ लोए लोए शुह-शण्ठिदाण तत्तिल्ला।
विणिवडिदाण णलाणं पिअआली दुल्लहा होदि(८) ॥१५॥

(८) अपसरत आर्या ! अपसरत।
एष गुणरत्ननिधिः सज्जनदुःखानामुत्तरणसेतुः।
असुवर्णमण्डनकम् अपनीयतेऽद्य नगरीतः ॥

(१३) शशीति। शशिनश्चन्द्रस्य विमला ये मयूखाः ते इव शुभ्रा दन्ता यस्यास्तत्सम्बुद्धौ तथा सुरुचिरः अतिमनोहरः यः विद्रुमः प्रवालः तत्सन्निभौ तत्सदृशौ अधरोष्ठौ यस्याः तत्सम्बोधने। तव वदन-भवामृतं मुखामृतं निपीय इदानीं अवशः पराधीनः सन् कथं केन प्रकारेण अयशोविषं विषमिव अयशः दुष्कीर्त्तिं पिबामि, अत पुष्पिताग्रावृत्तम्।

(१४) एष इति। असुवर्णमण्डनकं नास्ति सुवर्णमण्डनं काञ्चन-भूषणं यस्मिन् तद्यथा तथा, उत्सवे एव सुवर्णैर्भूष्यते, एवंविधे तु काले केवलमशुभैर्वस्त्रमाल्यादिभिरिति भावः। अन्यत् स्पष्टम्।

(१५) सर्व इति। लोके जगति सर्वः लोकः खलु निश्चितं सुख-

चारु । सर्वतोऽवलोक्य ।

अमी हि वस्त्रान्त निरुद्धवक्त्राः
प्रयान्ति मे दूरतरं वयस्याः ।
परोऽपि बन्धुः समसंस्थितस्य
मित्रं न कश्चिद्विषमस्थितस्य ॥१६॥

चाण्डालौ । ओसालणं कदं, विविक्तं लाअमग्गं, ता आणेध एदं दिण्णवज्झचिह्नं (९) ।

चारु । निःश्वस्य । मैत्रेय ! भोः ! किमिदमद्य । इत्यादि पठति । नेपथ्ये । हा ताद ! हा पिअवअस्स ! (१०) ।

---

अन्यच्च । सर्वः खलु भवति लोके लोकः सुखसंस्थितानां चिन्तायुक्तः ।
विनिपतितानां नराणां प्रियकारी दुर्लभो भवति ॥

(९) अपसारणं कृतं, विविक्तो राजमार्गः, तदानयतैनं दत्त-वध्यचिह्नम् ।

(१०) हा तात ! हा प्रियवयस्य !

---

संस्थितानां सुखिनां जनानां चिन्तायां शुभचिन्तने युक्तः रतः भवति विनिपतितानां विपन्नानां नराणां प्रियकरः हितकारी मनुष्यः दुर्लभः भवति ।

(१६) अमी इति । मे मम वयस्याः बन्धवः वस्त्रान्तेन निरुद्धानि आच्छादितानि वक्त्राणि मुखानि यैः ते तथोक्ताः सन्तः हि निश्चितं दूरतरं प्रयान्ति, परोऽपि उदासीनोऽपि समे समाने भावे इत्यर्थः सम्पदीति यावत् संस्थितस्य जनस्य बन्धुर्भवति साहाय्यलाभप्रत्याशयेति भावः, कश्चित् कोऽपि जनः विषमस्थितस्य दुरवस्थस्य जनस्य मित्रं न भवतीति शेषः उपकारलाभसम्भावनाविरहादिति भावः । उपजाति वृत्तम् ।

चारु। आकर्ण्य सकरुणम्। भोः स्वजातिमहत्तर! (घ) इच्छाम्यहं भवतः सकाशात् प्रतिग्रहं कर्तुम्।

चाण्डालौ। किं अम्हाणं हत्थादो पडिग्गहं कलेशि? (११)

चारु। शान्तं पापम्, नापरीक्ष्यकारी दुराचारः पालक इव चाण्डालः, तत्परलोकार्थं पुत्रमुखं द्रष्टुमभ्यर्थये।

चाण्डालौ। एव्वं कलीअदु (१२)।

नेपथ्ये। हा ताद! हा आवुक! (१३)।

चारु। श्रुत्वा सकरुणम्। भोः स्वजातिमहत्तर!। इत्यादि पठति।

चाण्डालौ। अले पउला! खणं अन्तलं देध, एशे अज्ज-चालुदत्ते पुत्तमुहं पेक्खदु। नेपथ्याभिमुखम्। अज्ज! इदो इदो, आअच्छ ले दालआ! आअच्छ (१४)। ततः प्रविशति दारकमादाय विदूषकः।

विदू। तुवरदु तुवरदु भद्दमुहो, पिदा दे मारिदुं णीअदि (१५)।

---

(११) किमस्माकं हस्तात् प्रतिग्रहं करोषि?

(१२) एवं क्रियताम्।

(१३) हा तात! हा पितः!

(१४) हे पौराः! क्षणमन्तरं दत्त, एष आर्यचारुदत्तः पुत्रमुखं पश्यतु। आर्य! इत इतः, आगच्छ रे दारक! आगच्छ।

(१५) त्वरतां त्वरतां भद्रमुखः, पिता ते मारयितुं नीयते।

---

(घ) स्वजातिषु महत्तरः अतिमहान् तत्सम्बोधने। प्रशंसावादोऽयं स्वकार्यसाधनायेति बोध्यम्।

दारकः । हा ताद ! हा आवुक ! (१६) ।

विदू । हा पिअवअस्स ! कहिं मए तुमं पेक्खिदव्वो । (१७)

चारु । पुत्रं मित्रञ्च वीक्ष्य । हा पुत्र ! हा मैत्रेय ! सक-

रुणम् । भोः कष्टम् !

चिरं खलु भविष्यामि परलोके पिपासितः ।
अत्यल्पमिदमस्माकं निवापोदकभोजनम् ॥ १७ ॥

किं पुत्राय प्रयच्छामि ? । आत्मानमवलोक्य । यज्ञोपवीतं

दृष्ट्वा । आं इदं तावदस्ति मम च ।

अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम् ।
देवतानां पितृणाञ्च भागो येन प्रदीयते ॥ १८ ॥

इति यज्ञोपवीतं ददाति ।

---

(१६) हा तात ! हा पितः !

(१७) हा प्रियवयस्य ! कुत्र मया त्वं द्रष्टव्यः ।

(१७) चिरमिति । परलोके चिरं चिरकालं व्याप्य इत्यर्थः पिपासितः भविष्यामि न कदापि मम पिपासा निवर्त्तिष्यते इति भावः किन्तु इदम् अपत्यमिति शेषः अस्माकं अत्यल्पं निवापोदकभोजनं निवापः पितृणां तर्पणं निवापः पितृतर्पणमित्यमरः तस्य उदकं निवापोदकं तस्य भोजनं पानं यस्मात् तत्, अनेन पुत्रेण चिरपिपासितस्य मे सम्पूर्णां तृप्तिर्न साधयिष्यते इति भावः ।

(१८) अमौक्तिकमिति । यज्ञोपवीतं ब्राह्मणानाम् अमौक्तिकं मौक्तिकभिन्नं तथा असौवर्णं सुवर्णालङ्कारभिन्नं विभूषणम् अलङ्कारः येन यज्ञोपवीते देवतानां पितृणाञ्च भागः पूजाश्राद्धादिरंशः दीयते ।

चाण्डालः। आअच्छ ले चालुदत्ता! आअच्छ (१८)।

द्वितीयः। अले! अज्ज चालुदत्तं णिलुवबदेण णामेण आलवेसि? अले! पेक्ख।

अब्भुदए अवशाणे तहेअ लत्तिन्दिवं अहदमग्गा।
उद्दामि व्व किशोली णिअदी क्खु पडिच्छिदं जादि ॥१९॥

अण्णच्च।

शुक्खा ववदेशा शे किं पणमिअ मत्थए ण काअव्वं।
लाहुगहिदे वि चन्दे ण वन्दणीए जणपदश्श? (१९) ॥२०॥

---

(१८) आगच्छ रे चारुदत्त! आगच्छ।

(१९) अरे! आर्य चारुदत्तं निरुपपदेन नाम्ना आलपसि? अरे पश्य।

अभ्युदये अवसाने तथैव रात्रिन्दिवमहतमार्गा।
उद्दामेव किशोरी नियतिः खलु प्रतीष्टं याति॥

अन्यच्च।

शुष्का व्यपदेशाः अस्य किं प्रणम्य मस्तके न कर्त्तव्यम्?
राहुगृहीतोऽपि चन्द्रो न वन्दनीयो जनपदस्य?॥

---

(१९) अभ्युदये इति। अभ्युदये सम्पदि तथा अवसाने दुर्दशायां रात्रिं दिवं सततम् अहतमार्गा अप्रतिहतप्रसरा नियतिर्दैवम् उद्दामा उच्छृङ्खला उन्मुक्तबन्धना इत्यर्थः किशोरीव कृशितनीव प्रतीष्टं यथाभिलषितं याति गच्छति दैवगतिः दुर्वारेति भावः।

(२०) शुष्का इति। अस्य चारुदत्तस्य व्यपदिश्यन्ते परिचीयते एभिरिति व्यपदेशाः कुलनामादयः शुष्काः? लुप्ताः? अस्य च किं शुष्कादिकमित्यर्थः प्रणम्य मस्तके न कर्त्तव्यं? अपि तु सर्वमेव प्रणम्य शिरोधार्यमित्यर्थः अथवा व्यपदेशाः वसन्तसेनावधजनितापवादाः शुष्काः

बालकः। अरे रे चाण्डाला! कहिं आवुकं णेध ? (२०)

चारु। वत्स!।

अंसेन बिभ्रत्करवीरमालां स्कन्धेन शूलं हृदयेन शोकम्।
आघातमद्याहमनुप्रयामि शामित्रमालब्धुमिवाध्वरेऽजः ॥२१॥

चाण्डालः। दालआ!

ण हु अम्हे चाण्डाला, चाण्डालउलम्मि जादपुव्वावि।
जे अहिभवन्ति साहुं, ते पावा, ते अ चाण्डाला (२१) ॥२२॥

दारकः। ता कीस मारेध आवुकं ? (२२)।

चाण्डालः। दीहाओ! अत्त लाअणिओओ क्खु अवलज्झदि, ण हु अम्हे (२३)।

(२०) अरे रे चाण्डालाः। कुत्र मम पितरं नयत ?

(२१) दारक!

न खलु वयं चाण्डालाश्चाण्डालकुले जातपूर्वा अपि।
येऽभिभवन्ति साधुं, ते पापास्ते च चाण्डालाः॥

(२२) तत् किमर्थं मारयत पितरम् ?

(२३) हे दीर्घायुः! अत्र राजनियोगः खलु अपराध्यति, न खलु वयम्।

---

मिथ्यात्वादारोपिता इत्यर्थः। इममेवार्थं दृष्टान्तेन द्रढयति राहुकर्हीत इति। आर्यावृत्तम्।

(२१) अंसेनेति। अद्य अहम् अंसेन गलदेशेन करवीरमालां स्कन्धेन शूलं तथा हृदयेन शोकं बिभ्रत् सन् अध्वरे यज्ञे शामित्रं पशुबधस्थानम् आलब्धुम् इव अजो विशुद्धच्छागः इत्यमरः। आघातं वध्यभूमिम् आलब्धुं निहतो भवितुं अनुप्रयामि आख्याती अनुगच्छामीत्यर्थः। इन्द्रवज्रावृत्तम्।

दारकः। वावादेध मं, मुञ्चध आवुकं (२४)।

चाण्डालः। दीहाऊ ! एवं भणन्ते चिलं मे जीव (२५)।

चारु। बाष्पं पुत्रं कण्ठे गृहीत्वा।

इदं तत् स्नेहसर्वस्वं सममाढ्यदरिद्रयोः।

अचन्दनमनौशीरं हृदयस्यानुलेपनम्॥ २३॥

अंसेन बिभ्रत्। इत्यादि पुनः पठति। अवलोक्य स्वगतम्।

अमी हि वस्त्रान्तनिरुद्धवक्त्राः। इत्यादि पुनः पठति।

विदू। भो भद्दमुहा ! मुञ्चध पिअवअस्सं चारुदत्तं, मं वावादेध (२६)।

चारु। शान्तं पापम्। दृष्ट्वा स्वगतम्। अद्यावगच्छामि।

समस्थित। इत्यादि पठति। प्रकाशम्।

एताः पुनर्हर्म्यगताः स्त्रियो माम्। इत्यादि पुनः पठति।

चाण्डालः। ओशलध अज्जा ! ओशलध।

---

(२४) व्यापादयत माम्, मुञ्चत पितरम्।

(२५) हे दीर्घायुः ! एवं भणन् चिरं मे जीव।

(२६) भो भद्रमुखा ! मुञ्चत प्रियवयस्यं, मां व्यापादयत।

---

(२३) इदमिति। तत् प्रसिद्धम् इदम् अपत्यरूपं वस्तु स्नेहसर्वस्वं स्नेहरसस्य सर्वं धनं, आढ्यदरिद्रयोः धनिदीनयोः समं समानसुखदं तथा हृदयस्य सचन्दनं चन्दनरसशून्यं अनौशीरम् उशीरम् वीरणमूलं स्वाहीरणं वीरतरम् बेऽस्त्रोशीरमस्त्रियामित्यमरः। तेन कृतं औशीरम् तत्र भवतीति अनौशीरम् अनुलेपनं पुत्रस्पर्शे हृदयं चन्दनेन औशीरेण च अनुलिप्तमिव भवतीति भावः।

किं पेक्खध ! अप्पलिअं अजसवसेण पणट्ठजीवासं ।
कूवम्मि खुडिदपासं कञ्चणकलसं व्व डुब्बन्तं (२७) ॥२४॥

चारु । सकरुणम् । शशिविमलमयूख । इत्यादि पठति ।

अपरः । अले ! पुणोवि घोसेहि (२८) ।

चाण्डालः । तथा करोति ।

चारु । प्राप्तोऽहं व्यसनकृतां दशामनार्य्यां,
यत्रेदं फलमपि जीवितावसानम् ।
एषा च व्यथयति घोषणा मनो मे,
श्रोतव्यं यदिदमसौ त्वया हतेति ॥ २५ ॥

ततः प्रविशति प्रासादस्थो बद्धः

(२७) अपसरत आर्य्याः अपसरत ।
किं पश्यत सत्पुरुषम् अयशोवशेन प्रनष्टजीवाशम् ।
कूपे खण्डितपाशं काञ्चनकलशमिव मज्जन्तम् ॥
(२८) अरे पुनरपि घोषय ।

---

(२४) किमिति । अयशो वशेन अयशः वसन्तसेनावधजनितं इथा कलङ्कः तद्वशेन तदायत्ततयेत्यर्थः, प्रनष्टा गता जीवस्य जीवनस्य आशा यस्य तम् । खण्डितः छिन्नः पाशः रज्जुर्यस्य तम् । अन्यत् विषदम् ।

(२५) प्राप्त इति । अहं व्यसनकृतां व्यसनेन अयशोजनितविपदा कृतां जनिताम् अतएव अनार्य्याम् असाध्वीं दशां दुर्दशामित्यर्थः प्राप्तः, यत्र दशायाम् इदं जीवितावसानं प्राणदण्डरूपं फलमपि उपस्थित-मिति शेषः, एषा च घोषणा मे मम मनः व्यथयति, यत् यस्मात् असौ वसन्तसेना त्वया हता इति श्रोतव्यम् अतिदुर्दशापन्नोऽहमिति भावः ।

स्थावरकः। श्रोत्रयोराकर्णय्य सवैक्लव्यम् (ङ)। कधं अपावे चालुदत्ते वावादीअदि! हग्गे णिअलेण शामिणा बन्धिदे। भोदु, आक्कन्दामि। शुणाध अज्जा! शुणाध। एत्थ दाणिं मए पावेण पवहणपडिवत्तेण पुप्फकलण्डअ जिण्णुज्जाणं वशन्तशेणा णीदा, तदो मम शामिणा मं ण कामेशित्ति कदुअ बाहुपाशबलक्कालेण मालिदा, ण उण एदिणा अज्जेण। कधं! बिदूलदाए ण को बि शुणादि! ता किं कलेमि? अत्ताणअं पाडेमि? विचिन्त्य। जइ एव्वं कलेमि, तदा अज्ज-चालुदत्ते ण वावादीअदि। भोदु, इमादो पाशाद-बालग्ग-पदोलिकादो एदिणा जिण्णगवक्खेण अत्ताणअं णिक्खिवामि। वलं हग्गे उवलदे, ण उण एशे कुलउत्त-बिहगाणं वाशपादवे अज्ज-चालुदत्ते। एव्वं जइ विवज्जामि लद्धे मए पललोए। इत्यात्मानं पातयित्वा। ही ही ण उवलदम्हि, भग्गे मे दण्डणिअले, ता चाण्डालघोशं शमण्णेशामि। दृष्ट्वोपसृत्य। हंहो चाण्डाला! अन्तलं अन्तलं (२८)।

(२८) कथमपापश्चारुदत्तो व्यापाद्यते। अहं निगडेन स्वामिना बद्धः। भवतु, आक्रन्दामि। शृणुत आर्य्याः! शृणुत। अत्र इदानीं मया पापेन प्रवहणपरिवर्त्तेन पुष्पकरण्डकजीर्णोद्यानं वसन्तसेना नीता, ततो मम स्वामिना, मां न कामयसे इति कृत्वा, बाहुपाशबलात्कारेण मारिता, न पुनरेतेनार्य्येण। कथं, विदूरतया न कोऽपि

(ङ) सवैक्लव्यम् अतिव्याकुलं यथा तथेति यावत्; विक्लवव्याकुलौ समावित्यमरः।

चाण्डालौ। अले! के अन्तलं मग्गेदि? (३०)।

चेटः। शृणाथ। इति पूर्वोक्तं पठति।

चारु। अये!।

कोऽयमेवंविधे काले कालपाशस्थिते मयि।
अनावृष्टिहते शस्ये द्रोणमेघ इवोदितः॥ २६॥

भोः! श्रुतं भवद्भिः?।

न भीतो मरणादस्मि, केवलं दूषितं यशः।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत्॥ २७॥

---

शृणोति, तत् किं करोमि? आत्मानं पातयामि? यद्येवं करोमि तदा आर्य्यचारुदत्तो न व्यापाद्यते। भवतु, अस्याः प्रासादबालाग्रप्रतोलिकातः एतेन जीर्णगवाक्षेणात्मानं निक्षिपामि। वरम् अहमुपरतो, न पुनरेष कुलपुत्रविहगानां वासपादप आर्य्यचारुदत्तः। एवं यदि विपद्ये लब्धो मया परलोकः। आश्चर्य्यं! न उपरतोऽस्मि, भग्नो मे दारुनिगडः, तस्माच्चाण्डालघोषं समन्विष्यामि। हंहो चाण्डालाः! अन्तरमन्तरम्।

(३०) अरे! कः अन्तरं याचते?

---

(२६) कोऽयमिति। द्रोणमेघः द्रोणनामा मेघविशेषः, अस्य शस्यवर्द्धकत्वमुक्तं ज्योतिःशास्त्रे यथा श्रूयते शाकवर्षे तु चतुर्भिः शोषितः क्रमात्। आवर्त्तं विद्धि संवर्तं पुष्करं द्रोणमम्बुदम्। आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः। पुष्करो पुष्करजलो द्रोणः शस्यप्रपूरक" इति।

(२७) नेति। विशुद्धस्य इदानीं स्थावरकचेटवचसा परिपूतस्य निर्दोषस्येति यावत्।

स्थावरः। तेनाकृतवैरेण क्षुद्रेणात्यल्पबुद्धिना।

शरेणेव विषाक्तेन दूषितेनापि दूषितः॥ २८॥

चाण्डालौ। थावलआ! अवि सच्चं भणासि? (३१)।

चेटः। सच्चं, हग्गे वि, मा कस्स वि कधइश्शसि त्ति पाशाद बालग्ग पदोलिकाए दण्डणिअलेण बन्धिअ णिक्खित्ते (३२)।

प्रविश्य। शकारः सहर्षम्।

मंशेण तिक्खाबिलकेण भत्ते, शाकेण शूपेण शमच्छकेण।

भुत्तं मए अत्तणअश्श गेहे शालिश्श कूलेण गुलोदणेण॥२९॥

कर्णं दत्त्वा। भिन्नकांश खङ्खणाए (च) चाण्डालवाआए

---

(३१) स्थावरक! अपि सत्यं भणसि?

(३२) सत्यम्, अहमपि, मा कस्यापि कथयिष्यसीति, प्रासाद बालाग्रप्रतोलिकायां दण्डनिगडेन बद्धा निक्षिप्तः।

(२८) तेनेति। न कृतं वैरं शत्रुभावः यस्य तेन कदापि न कृता शत्रुताप्रकारः कृत इति भावः। क्षुद्रेण नीचेन अत्यल्पबुद्धिना बुद्धिहीनेन ईदृशानिष्टकरणे किं पापमित्यजानतेत्यर्थः विषाक्तेन शरेणेव दूषितेन स्वयं कृतदोषेण तेन शकारेण अपि अहं दूषितः।

(२९) मांसेनेति। तिक्ताम्लेन तिक्तेन तथा अम्लेन मांसेन, समत्स्यकेन मत्स्ययुक्तेन सूपेन व्यञ्जनेन चकारार्थे तृतीया, शाकेन च भक्तेन अन्नेन तथा शालीयकूरेण शालिधान्योत्थेन कूरेण अन्नविशेषेण प्रस्तुतेनेतिपदमध्याहार्य्यं गुड़ौदनेन पायसेन इत्यर्थः। इन्द्रवज्रा-वृत्तम्।

(च) भिन्नकांस्यखङ्खनया भग्नकांस्यस्य खङ्खनेतिशब्दस्तस्या इत्यर्थः।

ग्लसंजोए, जधा अ एशे उक्कालिदे वज्झडिण्डिमशद्दे पडहाणं अ शुणीअदि, तधा तक्केमि, 'दलिद्दचालुदत्ताके वज्झट्ठाणं णीअदि त्ति । ता पेक्खिश्शं । शत्तुविणाशे णाम महन्ते हलक्कश्श पलितोशे होदि । शुदं अ मए, जेवि किल शत्तुं वावादअन्तं पेक्खदि, तश्श अण्णश्शिं जम्मन्तले अक्खि-लोगे ण होदि, मए क्खु विशगण्ठि-गब्भपविट्टेण विअ कीडएण किं पि अन्तलं मग्गमाणेण उप्पादिदे ताह दलिद्द-चालुदत्ताह विणाशे, शम्पदं अत्तणकेलिकाए पाशाद-बालग्ग-पदोलिकाए अहिलुहिअ अत्तणो पलक्कमं पेक्खामि । तथा कृत्वा दृष्ट्वा च । हीही एदाह दलिद्द चालुदत्ताह वज्झं णीअमाणाह एवड्ढे जणशम्मद्दे, जं वेलं अम्हालिशे पवले वलमणुश्शे वज्झं णीअदि, तं वेलं कीदिशं भवे । निरीक्ष्य । कधं, ऐशे शे णवबलद्दके विअ मण्डिदे दक्खिणं दिशं णी-अदि । अध किं णिमित्तं मम केलिकाए पाशाद-बालग्ग-पदोलिकाए शमीवे घोशणा णिवडिदा, निवालिदा अ ? । विलोक्य । कधं ! थावलके चेडेवि णत्थि इध, मा णाम तेण इदो गदुअ मन्तभेदे कडे भविश्शदि ? । ता जाव णं अण्णे-शामि (३२) । इति अवतीर्य्योपसर्पति ।

(५२) मांसेन तिक्ष्णाम्लेन भक्तं शाकेन सूपेन समत्स्यकेन ।
भुक्तं मया आत्मन एव गेहे शालीयकूरेण गुडौदनेन ॥

[illegible]स्वरसंयोगः, यथा च एष उद्घोषो वध्यडिण्डिमशब्दः पटहानाञ्च श्रूयते, तथा तर्कयामि, दरिद्र-चारुदत्तको वध्यस्थानं नीयत इति । तत् प्रेक्षिष्ये । शत्रुविनाशो नाम

चेटः। तथा। भट्टालका ! एशे शे आगडे (२४)।

आवुत्ताओ।

ओशलध, देध मग्गं, दालं ढक्केध, होध तुह्णीआ।

अविणअ-तिक्खविशाणे दुट्ठबइल्ले इदो एदि (२५)॥२०॥

शकारः। अले अले अन्तलं अन्तलं देध। उपसृत्य।

पुत्तका थावलका चेडा एहि, गच्छम्ह (२६)।

---

मम महान् हृदयस्य परितोषो भवति। श्रुतञ्च मया योऽहि किल शत्रुं व्यापाद्यमानं पश्यति तस्यान्यस्मिन् जन्मान्तरे अक्षिरोगो न भवति। मया खलु विषग्रन्थिगर्भप्रविष्टेनेव कीटकेन किमपि अन्तरं मृगयमाणेन उत्पादितस्तस्य दरिद्रचारुदत्तस्य विनाशः, साम्प्रतम् आत्मीयायां प्रासादबालाग्र-प्रतोलिकायामधिरुह्यात्मनः पराक्रमं पश्यामि। हीही एतस्य दरिद्रचारुदत्तस्य बध्यमानस्य एतावान् जनसम्मर्दो यस्यां वेलायामस्मादृशः प्रवरो वरमानुषो बध्यं नीयते, तस्यां वेलायां कीदृशं भवेत्। कथमेष स नवबलीवर्द इव मण्डितो दक्षिणां दिशं नीयते। अथ किं निमित्तं मदीयायाः प्रासादबालाग्रप्रतोलिकायाः समीपे घोषणा निपतिता निवारिता च? कथं स्थावरकचेटोऽपि नास्तीह, मा नाम तेन इतो गत्वा मन्त्रभेदः कृतो भविष्यति। तद् यावदेनमन्विष्यामि।

(२४) भट्टारक ! एष स आगतः।

(२५) अपसरत, दत्त मार्गं, द्वारं पिधत्त, भवत तूष्णीकाः।

अविनयतीक्ष्णविषाणो दुष्टबलीवर्द इत एति।

(२६) अरे अरे अन्तरमन्तरं दत्त। पुत्रक स्थावरक चेटक ! एहि, गच्छावः।

---

(२०) अपसरतेति। मार्गं पन्थानं दत्त द्वारं पिधत्त भवत तूष्णीकाः मौनिनः अविनयः दुःशीलता एव तीक्ष्णं विषाणं यस्य तादृशः।

चेटः। ही ही अणज्ज ! वशन्तशेणिअं मालिअ ण पलितुट्टेशि, शम्पदं पणइजणकप्पपादवं अज्जचालुदत्तं मालइदुं ववशिदे शि (३७)।

शकारः। ण हि लअणकुम्भशलिशे हग्गे इत्थिअं वावादेमि (३८)।

सर्वे। अहो ! तुए मारिदा, ण अज्ज चारुदत्तेण (३९)।

शकारः। के एव्वं भणादि ? (४०)।

सर्वे। चेटमुद्दिश्य। णं एसो साहू (४१)।

शकारः अपवार्य सभयम्। अविदमादिके अविदमादिके ! कधं थावलके चेडे शुट्ठु ण मए शम्भदे। एशे क्खु मम अकज्जश्श शक्खी। विचिन्त्य। एव्वं दाव कलइश्शं। प्रकाशम्। अलिअं भट्टालका हो, एशे चेडे शुवण्णचोलिआए (क) मए गहिदे, पिट्टिदे, मालिदे, बद्धे अ, ता किदवेले एशे जं भणादि किं शव्वं शच्चं ?। अपवारितकेन चेटस्य कटकं प्रयच्छति।

(३७) हीही अनार्य ! वसन्तसेनां मारयित्वा न परितुष्टोऽसि, साम्प्रतं प्रणयिजनकल्पपादपमार्यचारुदत्तं मारयितुं व्यवसितोऽसि।

(३८) न हि रत्नकुम्भसदृशोऽहं स्त्रियं व्यापादयामि।

(३९) अहो ! त्वया मारिता, न चारुदत्तेन।

(४०) क एवं भणति ?

(४१) ननु एष साधुः।

---

(क) सुवर्णचोरिकया सुवर्णापहरणेन।

चोरकम्। पुत्तका थावलका चेड़ा! एदं गेह्निय मसधा भणाहि (४२)।

चेटः। गृहीत्वा। पेक्खध पेक्खध भट्टालका! हो! शुवस्स ण मं पलोभेदि (४३)।

शकारः। कटकमाच्छिद्य। एशे शे शुवस्मके, जश्श कालणादो मए बड्ढे। सक्रोधम्। हंहो चाण्डाला! मए क्खु एशे शुवस्स-भण्डाले णिउत्ते, शुवस्स चोलअन्ते मालिदे, पिट्ठिदे, ता जदि ण पत्तिआअध ता पिट्ठिं दाव पेक्खध (४४)।

चाण्डालौ। दृष्ट्वा। शोहणं भणादि! विदूस्से (ज) चेड़े किं ण प्पलवदि (४५)।

---

(४२) हन्तु कथं स्थावरकश्चेटः सुष्ठु न मया बद्धः। एष खलु मम अकार्य्यस्य साक्षी। एवं तावत् करिष्यामि। प्रकाशं भट्टारकाः! अहो, एष चेटः सुवर्णचोरिकया मया गृहीतस्ताड़ितो मारितो बद्धश्च, तत्कृतवैर एष यत् भणति किं सर्वं सत्यम्? पुत्रक स्थावरक चेट! एतद्गृहीत्वा अन्यथा भण।

(४३) पश्यत पश्यत भट्टारकाः! अहो! सुवर्णेन मां प्रलोभयति।

(४४) एतत् तत् सुवर्णकं, यस्य कारणात् मया बद्धः। हंहो चाण्डाला! मया खलु एष सुवर्णभाण्डारे नियुक्तः सुवर्णं चोरयन् मारितस्ताड़ितः, तत् यदि न प्रत्ययध्वं तदा पृष्ठं तावत् पश्यत।

(४५) शोभनं भणति। वितप्तश्चेटः किं न प्रलपति।

(ज) वितप्तः विशेषेण तप्तः पीड़ित इत्यर्थः।

चेटः । हीमादिके ! ईदिशे दासभावे, जं सच्चं कंपि ण पत्तिआअदि । सकरुणम् । अज्ज चालुदत्त ! एत्तिके मे विहवे (क) (४६) ।

इति पादयोः पतति ।

चारु । सकरुणम् ।

उत्तिष्ठ भोः । पतित-साधुजनानुकम्पिन् !
निष्कारणोपगत बान्धव धर्मशील ! ।
यत्नः कृतोऽपि सुमहान्मम मोक्षणाय
दैवं न संवदति, किं न कृतं त्वयाद्य ॥ ३१ ॥

चाण्डालौ । भट्टके ! पिट्ठिअ एदं चेड' णिक्खालेहि (४७)

शकारः । णिक्कल ले ! । इति निष्क्रामयति । अले चाण्डाला ! किं विलम्बेध ? मालेध एदं (४८) ।

---

(४६) हन्त ! ईदृशो दासभावो यत् सत्यं कमपि न प्रत्याययति । आर्यचारुदत्त ! एतावान् मे विभवः ।

(४७) भट्टक ! ताड़यित्वा एतं चेटं निष्काशय ।

(४८) निष्क्राम रे । अरे चाण्डालाः ! किं विलम्बध्वं मारयतैनम् ।

---

(क) प्रत्याययति । दासवाक्ये कोऽपि न विश्वसितीत्यर्थः । एतावान् मम विभवः सामर्थ्यं भवतो रक्षणे इति भावः नातः परं सामर्थ्यमस्तीति भावः ।

(३१) उत्तिष्ठेति । भोः पतितान् विपन्नान् साधुजनान् अनुकम्पते इति तत्सम्बोधने निष्कारणोपगतः अकारणं स्थितः बान्धवः तत्सम्बोधने, तथा धर्मशील ! त्वया मम मोक्षणाय मुक्तये सुमहान् यत्नः कृतः, दैवं न संवदति नानुकूलयति अद्य किं न कृतं अपितु सर्वमेव कर्त्तव्यं कृतमित्यर्थः ।

चाण्डालौ। यदि तुवलसि ता सअं ज्जेव मालेहि (४९)।

रोह। अले चाण्डाला! मं मालेध, मुञ्चध आवुकं (५०)।

शकारः। सपुत्तं ज्जेव एदं मालेध (५१)।

चारु। सर्वमस्य मूर्खस्य सम्भाव्यते, तद्गच्छ पुत्र! मातुः समीपम्।

रोह। किं मए गदेण कादव्वम्? (५२)।

चारु। आश्रमं वत्स! गन्तव्यं गृहीत्वाद्यैव मातरम्।

मा पुत्र! पितृदोषेण त्वमप्येवं गमिष्यसि ॥३२॥

तद्वयस्य! गृहीत्वैनं व्रज।

विदू। भो वअस्स! एव्वं तुए जाणिदं, तुए विणा अहं पाणाइं धारेमि त्ति? (५३)।

(४९) यदि त्वरयसे तदा स्वयमेव मारय।

(५०) अरे चाण्डाला! मां मारयत, मुञ्चत पितरम्।

(५१) सपुत्रमेव एतं मारयत।

(५२) किं मया गतेन कर्त्तव्यम्?

(५३) भो वयस्य! एवं त्वया ज्ञातं, त्वया विनाहं प्राणान् धारयामीति?

(३२) आश्रममिति। आश्रमं मुनिजनतपःस्थलम् अद्यैवात्रैव विलम्बो न कार्य इति भावः हे पुत्र! त्वमपि पितृदोषेण वसन्तसेना-वधजनितेन दोषेण एवं ईदृशं शकारस्यापादस्थलं मा गमिष्यसि। यदि कदाचित् शकारः वसन्तसेनाघातकस्य पुत्रोऽयमिति राज्ञो निवेदयति, राजा च त्वामपि पितृवत् शूलवधादिकं करिष्यतीति निश्चित्य त्वां घातयेत् अतएव अविलम्बमेव नगरादस्मात् पलायितव्यमिति भावः।

चारु। वयस्य ! स्वाधीनजीवितस्य न युज्यते तव प्राण-परित्यागः।

विदू। सगतम्। जुत्तं णेदं तधा वि ण सक्कुणोमि पिअ-वअस्स-विरहिदो पाणाइं धारिदुं त्ति, ता बम्हणीए दारअं समप्पिअ पाणपरिच्चाएण अत्तणो पिअवअस्सं अणुगमिस्सं।

प्रकाशम्। भो वअस्स ! पराणेमि एदं लहुं (ञ) (५४)।

इति सकण्ठग्रहं पादयोः पतति। दारकोऽपि रुदन् पतति।

शकारः। अले ! णं भणामि शपुत्तकं चालुदत्तकं वावादेध त्ति (५५)।

चारु। भयं नाटयति।

चाण्डालौ। णहि अम्हाणं ईदिशी लाआणत्ती जधा शपुत्तं चालुदत्तं वावादेध त्ति, ता णिक्कम ले दालआ ! णिक्कम (५६)।

इति निष्क्रामयतः।

चाण्डालौ। इमं तइअं घोशणट्ठाणं, ताडेध डिण्डिमं (५७) पुनर्घोषयतः।

(५४) युक्तं नेदम्। तथापि न शक्नोमि प्रियवयस्यविरहितः प्राणान् धर्त्तुमिति, तद् ब्राह्मण्यै दारकं समर्प्य प्राणपरित्यागेनात्मनः प्रियवयस्यमनुगमिष्यामि। भो वयस्य ! परायामि एतं लघु।

(५५) अरे ! ननु भणामि सपुत्रकं चारुदत्तं व्यापादयतेति।

(५६) न खल्वस्माकमीदृशी राजाज्ञप्तिः, यथा सपुत्रं चारुदत्तं व्यापादयतेति, तस्मात् निष्क्राम रे दारक ! निष्क्राम।

(ञ) पराणेमि आहरामीत्यर्थः भक्ष्याणीत्यर्थः। लघु शीघ्रम्। एतं बालकम्।

शकारः। स्वगतम्। कधं एशे ण पत्तिआअन्ति पौला। प्रकाशम्। हंहो चालुदत्ता! बडुअबका! ण पत्तिआअदि एशे पौलजणे, ता अत्तणकेलिकाए जीहाए भणाहि मए वशन्तशेणिआ मालिदेत्ति (५८)।

चारु। तूष्णीमास्ते।

शकारः। अले चण्डालगोहे! ण भणादि चालुदत्त-बडुअबके, ता भणावेध दुमिणा जज्जलवंशखण्डेण अङ्कुशेण (ट) तालिअ तालिअ (५९)।

चाण्डालः। प्रहारमुद्यम्य। भो चालुदत्त! भणाहि (६०)।

चारु सकरुणम्।

प्राप्यैतद्व्यसन-महार्णव प्रपातं
न त्रासो न च मनसोऽस्ति मे विषादः।
एको मां दहति जनापवादवह्नि-
र्वक्तव्यं यदिह मया हता प्रियेति ॥ ३२ ॥

(५७) इदं [illegible]ताय घोषणास्थानं, ताड़यत डिण्डिमम्।

(५८) कथमेष न प्रत्ययन्ते पौराः। अरे चारुदत्त! बटुक! न प्रत्ययते एष पौरजनः, तदात्मीयया जिह्वया भण, मया वसन्तसेनिका मारितेति।

(५९) अरे चाण्डाल मनुष्य! न भणति चारुदत्त बटुकः, तद्भाणयत अनेन जर्जरवंशखण्डेन अङ्कुशेन ताड़यित्वा ताड़यित्वा।

(६०) भोः चारुदत्त! भण।

---

(ट) अङ्कुशेन डिण्डिमताडनदण्डेन।

(३२) प्राप्येति। एतत् व्यसनमेव महार्णवः तस्मिन् प्रपातः पतनं प्राप्य विपत्सागरे पतित्वा इत्यर्थः मे मम त्रासः भ

शकारः । पुनस्तथैव ।

चाण्डालः । भो भोः पौराः ! मया खलु नृशंसेन । इत्यादि पुनः पठति ।

शकारः । वावादिदा ? (६१) ।

चाण्डालः । एवमस्तु ।

चाण्डालः । अले ! तव अत्त वज्झवालिआ (६२) ।

द्वितीयः । अले ! तव (६३) ।

प्रथमः । अले लेक्खअं कलेम्ह (६४) ।

इति बहुविधं लेखकं कृत्वा ।

प्रथमः । अले जदि मम केलिका वज्झवालिआ, (ठ) ता चिट्ठदु दाव मुहुत्तअं (६५) ।

द्वितीयः । किं णिमित्तं ? (६६) ।

(६१) व्यापादिता ?

(६२) अरे, तव अत्र वध्यपालिका ।

(६३) अरे ! तव ।

(६४) अरे ! लेखं कुर्मः ।

(६५) अरे, यदि मदीया वध्यपालिका, तदा तिष्ठतु तावत् मुहूर्त्तकम् ।

(६६) किं निमित्तम् ?

---

विषादः मम दुःखं भवतीति शेषः । एकः केवलः एके मुख्यान्यकेवलाः इत्यमरः जनानां लोकानां अपवादः वसन्तसेना अनेन हतेति निन्दावाद एव वह्निः इह वधस्थाने मया प्रिया वसन्तसेना हता इति यद् वक्तव्यं तदेति पूरणीयं मां दहति तापयतीत्यर्थः ।

(ठ) वध्यपालिका वध्यस्य पालिका घातनपर्यायः ।

प्रथमः। अले! भणिदो म्हि पिदुणा सग्गं गच्छन्तेण, जधा, पुत्त वीरअ! जइ तुह वज्झवालो होदि, मा सहस त्ति वावादअशि वज्झं (६७)।

द्वितीयः। अले! किं णिमित्तं (६८)।

प्रथमः। कदावि कोवि साहू अत्थं दइअ वज्झं मोआवेदि। कदावि लञ्ञो पुत्ते भोदि, तेण वद्धावेण सव्ववज्झाणं मोक्खो होदि। कदावि हत्थी बन्धं खण्डेदि, तेण सम्भमेण वज्झे मुक्के होदि। कदावि लाअपलिवत्ते होदि, तेण सव्ववज्झाणं मोक्खो होदि (६९)।

शकारः। किं किं लाअपलिवत्ते होदि? (७०)।

चाण्डालः। अले! वज्झवालिआए लेक्खअं कलेम्ह (७१)

शकारः। अले! शिग्घं मालेध चालुदत्ताकं (७२)।

इत्युक्त्वा चेटं गृहीत्वा एकान्ते स्थितः।

(६७) अरे! भणितोऽस्मि पित्रा स्वर्गं गच्छता, यथा पुत्र वीरक! यदि तव बध्यपाली भवति, मा सहसा व्यापादयसि बध्यम्।

(६८) अरे! किं निमित्तम्?

(६९) कदापि कोऽपि साधुरर्थं दत्त्वा बध्यं मोचयति। कदापि राज्ञः पुत्त्रो भवति, तेन वृद्धिमहोत्सवेन सर्वबध्यानां मोक्षो भवति। कदापि हस्ती बन्धं खण्डयति, तेन सम्भ्रमेण बध्यो मुक्तो भवति। कदापि राजपरिवर्त्तो भवति तेन सर्वबध्यानां मोक्षो भवति।

(७०) किं किं राजपरिवर्त्तो भवति?

(७१) अरे! बध्यपालिकाया लेख्यं कुर्मः।

(७२) अरे! शीघ्रं मारयत चारुदत्तम्।

चाण्डालः। अज्ज चालुदत्त! लाअणिओओ क्खु अव-लज्झदि, ण क्खु अम्हे चाण्डाला, ता शुमलेहि जं शुम-लिदव्वं (७३)।

चारु। प्रभवति यदि धर्मो दूषितस्यापि मेऽद्य
प्रबलपुरुषवाक्यैर्भाग्यदोषात् कथञ्चित्।
सुरपति-भवनस्था यत्र तत्र स्थिता वा
व्यपनयतु कलङ्कं स्वस्वभावेन सैव॥ ३४॥

भोः! क्व तावन्मया गन्तव्यम्?।

चाण्डालः। अग्रतोदर्शयित्वा। अले! एदं दीशदि दक्-खिणमशाणं, जं पेक्खिअ वज्झा झत्ति पाणाइं मुञ्चन्ति। पेक्ख पेक्ख,

अद्धं कलेवलं पडिवत्तं कड्ढन्ति दीहगोमाआ।
अद्धं पि शूलललग्गं बेग्गं विअ अट्टहाशश्श (७४)॥३५॥

---

(७३) आर्य चारुदत्त! राजनियोगः खलु अपराध्यति, न खलु वयं चाण्डालाः, तत् स्मर, यत् स्मर्तव्यम्।

(७४) अरे! एतत् दृश्यते दक्षिणश्मशानं, यत् प्रेक्ष्य वध्या झटिति प्राणान् मुञ्चन्ति। पश्य पश्य।

---

(३४) प्रभवतीति। भाग्यदोषात् अद्य प्रबलपुरुषैः राजपुरुषैर-न्यैः दूषितस्यापि मे मम यदि धर्मः कथञ्चित् प्रभवति। यदि कदापि मया धर्माचरणं कृतमिति भावः। तदा तद्बलेनेति पूरणीयं सुरपति-भवनस्था स्वर्गस्था अथवा यत्र तत्रस्थिता वा एव वसन्तसेना एव स्वस्व-भावेन निजौदार्येण कलङ्कं दुरपवादरूपं ममेति शेषः व्यपनयतु शोधयतु इत्यर्थः।

(३५) अर्द्धमिति। दीर्घाः उन्नतकलेवराः गोमायवः शृगालाः

चारु। हा! हतोऽस्मि मन्दभाग्यः। इति सावेगमुपविशति।

शकारः। ण दाव गमिश्शं, चालुदत्ताकं वावादिअन्तं दाव पेक्खामि। परिक्रम्य दृष्ट्वा। कधं उवविट्टे (७५)।

चाण्डालः। चालुदत्त! किं भीदेसि? (७६)।

चारु। सहसोत्थाय। मूर्ख!

न भीतो मरणादस्मि केवलं दूषितं यशः।

इत्यादि पुनः पठति।

चाण्डालः। अज्ज चालुदत्त! गअणदले पडिवसन्ता चन्दसुज्जा वि विपत्तिं लहन्ति। किं उण जणा मलणभीलुआ माणवा वा, लोए कोवि उट्ठिदो पडदि, कोवि पडिदोवि उट्ठेदि।

उट्ठन्त पडन्ताह वसण पलिडआ शवश्श उण अत्थि।
एदाइं हिअए कदुअ सन्धालेहि अत्ताणअं॥ ३६॥

---

अर्द्धं कलेवरं प्रतिहस्तं कर्षन्ति दीर्घगोमायवः।
अर्द्धमपि शूलवलग्नं वेश इवाट्टहासस्य॥

(७५) न तावद्गमिष्यामि, चारुदत्तं व्यापाद्यमानं तावत् पश्यामि। कथमुपविष्टः।

(७६) चारुदत्त! किं भीतोऽसि?

---

प्रतिहस्तं शूलात् लम्बितं अर्द्धं कलेवरं कर्षन्ति, आकृष्य खादयन्तीत्यर्थः। अर्द्धम् अपरमिति शेषः अट्टहासस्य अत्युच्चहासस्य वेश इव परिच्छद इव शूलवलग्नं शूलोपरिस्थितत्वादंशस्य शुभ्रावच्छिन्नतया तस्य आदानात् दशनकिरणानाञ्च प्रकाशनात् अत्युच्चहासपूर्वमिवेत्युत्प्रेक्षा।

(३६) उत्तिष्ठत्पतत इति। शवस्यापि जातस्यापि उत्तिष्ठत्पततः

भिक्षुः । आकाशम् । कदलेण मग्गेण पविशामि ? विचिन्त्य । लाअमग्गेण ज्जेव पविशामि । उवाशिके ! एहि एशे लाअमग्गे । आकर्ण्य । किं णु हु एशे लाअमग्गे महन्ते कलअले शुणीअदि ? (८०) ।

चेटः । अग्रतो निरूप्य । कधं पुरदो महाजणसमूहो अज्ज ! आणाहि दाव किंपेदं त्ति । विसमभरक्कन्ता विअ वसुन्धरा एक्कपासोण्णदा (ड) उज्जइणी वट्टदि (८१) ।

चाण्डालः । इमं अं पच्छिमं घोसणट्ठाणं, ता ताडेध डिण्डिमं, उग्घोसेध घोसणं । तथा कृत्वा । भो चारुदत्त ! पडिवालेहि (ढ) मा भाआहि, लहुं ज्जेव मालीअसि (८२)

चारु । भगवत्यो देवताः ।

---

(८०) कतरेण मार्गेण प्रविशामि । राजमार्गेणैव प्रविशामि । उपासिके ! एहि, अयं राजमार्गः । किं नु खलु एष राजमार्गे महान् कलकलः श्रूयते ?

(८१) कथं, पुरतो महान् जनसमूहः ! आर्य ! आनीहि तावत् किंन्विदमिति । विषमभाराक्रान्तेव वसुन्धरा एकपार्श्वोन्नता उज्जयिनी वर्त्तते ।

(८२) इदञ्च पश्चिमं घोषणास्थानम्, तत्ताडयत डिण्डिमम्, उद्घोषयत घोषणाम् । भोः चारुदत्त ! प्रतिपालय, मा भैः, शीघ्रमेव मार्य्यसे ।

---

(ड) एकपार्श्वोन्नता एकस्मिन् प्रदेशे भारः समागतजनानां तेन उन्नता इत्यर्थः ।

(ढ) प्रतिपालय प्रतीक्षस्व स्थिरीभवेत्यर्थः ।

भिक्षुः। श्रुत्वा सकरुणम्। उवासिके! तुमं किल चालुदत्तेण मालिदासि त्ति, चालुदत्तो मालिदुं णीअदि (८३)।

वसं। सकरुणम्। हदी हदी! कधं! मम मन्दभाइणीए कदे अज्ज-चारुदत्तो वावादीअदि!। भो! तुरिदं तुरिदं आदेसेहि मग्गं (८४)।

भिक्षुः। तुबलदु तुबलदु बुद्धोवासिका अज्ज-चालुदत्तं जीअन्तं समस्साशिदुं। अज्जा! अन्तल अन्तलं देध (८५)।

वसं। अन्तरं अन्तरं (८६)।

चाण्डालः। अज्ज चालुदत्त! शामि णिओओ अवलज्झदि, ता शुमलेहि जं शुमलिदव्वं (८७)।

चारु। किं बहुना। प्रभवति। इत्यादि श्लोकं पठति।

चाण्डालः खड्गमाकृष्य। अज्ज चालुदत्त! उत्ताणो भविअ समं चिट्ठ, एक्कप्पहालेण मालिअ तुमं शग्गं णेम्ह (८८)।

---

(८३) उपासिके! त्वं किल चारुदत्तेन मारितासीति चारुदत्तो मारयितुं नीयते।

(८४) हा धिक् हा धिक्! कथं मम मन्दभागिन्याः कृते आर्य्य-चारुदत्तो व्यापाद्यते। भोः! त्वरितं त्वरितमादिश मार्गम्।

(८५) त्वरतां त्वरतां बुद्धोपासिका आर्य्य-चारुदत्तं जीवन्तं समाश्वासयितुम्। आर्य्याः! अन्तरमन्तरं दत्त।

(८६) अन्तरमन्तरम्।

(८७) आर्य्य-चारुदत्त! स्वामिनियोगोऽपराध्यति, तत् स्मर, यत् स्मर्त्तव्यम्।

(८८) आर्य्य-चारुदत्त! उत्तानो भूत्वा समं तिष्ठ, एकप्रहारेण मारयित्वा त्वां स्वर्गं नयामः।

चारुदत्तस्तथा तिष्ठति ।

चाण्डालः । (खड्गमीक्षते । खड्गपतनं हस्तादभिनयन् । हा कधं!)

आअड्ढिदे सलोषं मुट्ठिए मुट्ठिणा गहीदे वि ।
धलणीए कोस पड़िदे दालुणके असणिसलिहे खग्गे ॥२७॥

जधा एदं संवुत्तं, तधा तक्केमि ण विवज्जदि अज्जचालुदत्ते त्ति । भअवदि सज्झवासिणि ! (ण) पसीद पसीद, अवि णाम चालुदत्तस्स मोक्खे भवे ? तदो अणुगहिदं तुए चाण्डालउलं भवे (८९) ।

अपरः । जधाणत्तं अणुचिट्ठम्ह (९०) ।

प्रथमः । भोदु, एव्वं कलेम्ह (९१) ।

इत्युभौ चारुदत्तं शूले समारोपयितुमिच्छतः ।

चारु । प्रभवति । इत्यादि पुनः पठति ।

---

(८९) आकृष्टः सरोषं मुष्टौ मुष्टिना गृहीतोऽपि ।
　　धरण्यां किमर्थं पतितो दारुणकोऽशनिसन्निभः खड्गः ॥
यथा एतत्संवृत्तं तथा तर्कयामि न विपद्यते आर्य्य-चारुदत्त इति । भगवति सह्यवासिनि ! प्रसीद प्रसीद, अपि नाम चारुदत्तस्य मोक्षो भवेत् ? तदानुगृहीतं त्वया चण्डालकुलं भवेत् ।

(९०) यथाज्ञप्तमनुतिष्ठावः ।

(९१) भवतु एवं कुर्वः ।

---

(२७) आकृष्ट इति । मुष्टौ खड्गमूले इत्यर्थः ।

(ण) सह्यवासिनि ! सह्यो नाम पर्वतविशेषस्तत्र स्थिता तद्वासिनि ! तस्याधिष्ठात्रि ! देवते ! इत्यर्थः ।

भिक्षुः वसन्तसेना च दृष्ट्वा। अज्जा! मा दाव मा दाव। अज्जा! एसा अहं मन्दभाइणी, जाए कारणादो एसो वावादीअदि (८२)।

चाण्डालः। दृष्ट्वा।

तुलिदं का उण एसा अंस-पडन्तेण चिउलभालेण।
मा मेत्ति वाहलन्ती, उट्ठिदहत्था इदो एदि (८३) ॥३८॥

वसं। अज्ज चारुदत्त! किमेदं? (८४)। इति उरसि पतति।

भिक्षुः। अज्ज चालुदत्त! किमेदं? (८५)। इति पादयोः पतति।

चाण्डालः। सभयमुपसृत्य। कधं वसन्तसेणा! णं क्खु अम्हेहिं साहू ण वावादिदे (८६)।

भिक्षुः उत्थाय। अले! जीवदि चालुदत्ते? (८७)।

(८२) आर्य्यौ! मा तावत् मा तावत्। आर्य्यौ! एषा अहं मन्दभागिनी यस्याः कारणादेष व्यापाद्यते।

(८३) त्वरितं का पुनरेषा अंसे पतता चिकुरभारेण।
मा मेति व्याहरन्ती उत्थितहस्ता इत एति॥

(८४) आर्य्य चारुदत्त! किमिदम्?

(८५) आर्य्य चारुदत्त! किं न्विदम्?

(८६) कथं वसन्तसेना! ननु खलु अस्माभिः साधुर्न व्यापादितः।

(८७) अरे! जीवति चारुदत्तः?

---

(३८) त्वरितमिति। चिकुरभारेण केशकलापेन चिकुरः कुन्तलो बाल इत्यमरः। विशेषणे तृतीया।

चाण्डालः। जीवदि वश्शशदं (९८)।

वसं। सहर्षम्। पच्चुज्जीबिदम्हि (९९)।

चाण्डालः। ता जाव एदं वुत्तं राइणो जणवाड-गदस्स णिवेदेम्ह (१००)।

इति निष्क्रामतः।

शकारः। वसन्तसेनां दृष्ट्वा सत्रासम्। ही मादिके! केण गब्भ-दासी जीवाबिदा?, उक्कन्ताइं मे पाणाइं!, भोदु, पला-इश्शं (१)। इति पलायते।

चाण्डालः। उपसृत्य। अले! णं अम्हाणं ईदिशी लाआ-णत्ती जेण शा वावादिदा, तं मालेधत्ति, ता लट्ठिअशालअं ज्जेव अस्सेसम्ह (२)।

इति निष्क्रान्तौ।

चारु। सविस्मयम्।

केयमभ्युद्यते शस्त्रे मृत्युवक्त्रगते मयि।

अनावृष्टिहते शस्ये द्रोणवृष्टिरिवागता ॥ ३९ ॥

(९८) जीवति वर्षशतम्।

(९९) प्रत्युज्जीवितास्मि।

(१००) तद्यावदेतद्वृत्तं राज्ञो यज्ञवाटगतस्य निवेदयावः।

(१) विस्मये, केन गर्भदासी जीवनं प्रापिता? उत्क्रान्ता मे प्राणाः। भवतु, पलायिष्ये।

(२) ननु अस्माकमीदृशी राजाज्ञप्तिः, येन सा व्यापादिता तं मारयत इति राष्ट्रियश्यालमेवान्विष्यावः।

---

(३९) केयमिति। द्रोणवृष्टिः द्रोणनाम्नः मेघात् पतितवृष्टिरित्यर्थः।

अवलोक्य च ।

वसन्तसेना किमियं द्वितीया समागता सैव दिवः किमित्थम् ।
भ्रान्तं मनः पश्यति वा ममैनां, वसन्तसेना न मृताथ सैव ॥४०

अथवा ।

किं नु स्वर्गात् पुनः प्राप्ता मम जीवातु काम्यया ।
तस्या रूपानुरूपेण किमुतान्येयमागता ? ॥ ४१ ॥

वसं । साश्रुरुत्थाय पादयोर्निपत्य । अज्ज चारुदत्त ! सा ज्जेव अहं पावा, जाए कारणादो इअं तुए असरिसी अवत्था पाविदा (३) ।

नेपथ्ये । अच्चरिअं अच्चरिअं, जीवदि वसन्तसेना (४) ।

इति सर्वे पठन्ति ।

---

(३) आर्य्य-चारुदत्त ! सैवाहं पापा, यस्याः कारणादियं त्वया असदृशी अवस्था प्राप्ता ।

(४) आश्चर्य्यमाश्चर्य्यं, जीवति वसन्तसेना ।

---

(४०) वसन्तसेनेति । इयं द्वितीया वसन्तसेना किं ? अथवा सा एव वसन्तसेना इत्थम् एवं प्रकारेण मरणानन्तरं मम प्राणरक्षणात् पुनर्देहं धृत्वेत्यर्थः दिवः स्वर्गात् समागता किं ? वा भ्रान्तं मम मनः एनां पश्यति न तत्त्वत इति भावः । अथवा वसन्तसेना न मृता सा एव इयमित्यर्थः ।

(४१) किमिति । मम जीवातुकाम्यया जीवनेच्छया स्वर्गात् पुनः प्राप्ता आगता किं नु वितर्के, उत अथवा अन्या कापि तस्याः वसन्तसेनायाः रूपस्य आकृतेः अनुरूपेण सदृशाकृत्या तत्सदृशाकृतिं धृत्वा इत्यर्थः आगता इयम् ।

चारु। आकर्ण्य सहसोत्थाय स्पर्शसुखमभिनीय निमीलिताक्ष एव हर्षगद्गदाक्षरम्। प्रिये! वसन्तसेना त्वम्?

वसं। सा ज्जेवाहं मन्दभाग्रा (५)।

चारु। निरूप्य सहर्षम्। कथं वसन्तसेनैव। सानन्दम्।

कुतो बाष्पाम्बुधाराभिः स्नपयन्ती पयोधरौ।
मयि मृत्युवशं प्राप्ते विद्येव समुपागता॥ ४२॥

प्रिये वसन्तसेने!।

त्वदर्थमेतद्विनिपात्यमानं देहं त्वयैव प्रतिमोचितं मे।
अहो! प्रभावः प्रियसङ्गमस्य, मृतोऽपि को नाम पुनर्ध्रियेत॥४३

अपिच। प्रिये! पश्य,

रक्तं तदेव वरवस्त्रमियञ्च माला
कान्तागमेन हि वरस्य यथा विभाति।
एते च वध्यपटह-ध्वनयस्तथैव
जाता विवाह-पटह-ध्वनिभिः समानाः॥४४॥

---

(५) सैवाहं मन्दभाग्या।

---

(४२) कुत इति। मयि मृत्युवशं प्राप्ते सति बाष्पाम्बुधाराभिः अश्रुजलप्रवाहैः पयोधरौ कुचौ स्नपयन्ती सती विद्येव सञ्जीवनी विद्येव समुपागता उपस्थिता?

(४३) त्वदर्थमिति। त्वदर्थं तव निमित्तं विनिपात्यमानम् एतत् मम देहं त्वयैव प्रतिमोचितं रक्षितम्, अहो प्रियसङ्गमस्य प्रभावः को जनः नाम सम्भावनायां मृतोऽपि मृतः सन्नपि पुनर्ध्रियेत पुनर्जीवेत् न कोऽपीत्यर्थः यदहं पुनर्जीवामि केवलमेतत् प्रियजनसङ्गमस्य प्रभाव इति।

(४४) रक्तमिति। तदेव इदमेव वध्यदशायां परिधीयमानमित्यर्थः

वसं। अदिदक्खिणदाए किं णेदं ववसिदं अज्जेण? (६)

चारु। प्रिये! त्वं किल मया हतेति।

पूर्व्वानुबद्धवैरेण मनुषा प्रभविष्णुना।
नरके पतता तेन मनागस्मि निपातितः ॥४५॥

वसं। कर्णौ पिधाय। सान्तं पावं, तेण म्हि राअसालेण वावादिदा (७)।

चारु भिक्षुं दृष्ट्वा। अयमपि कः?

वसं। तेण अणज्जेण वावादिदा, एदिणा अज्जेण जीवाविदम्हि (८)।

चारु। कस्त्वमकारणबन्धुः?

(६) अतिदाक्षिण्यतया किं न्विदं व्यवसितमार्य्येण?
(७) शान्तं पापं, तेनास्मि राजश्यालेन व्यापादिता।
(८) तेनानार्य्येण व्यापादिता, एतेन आर्य्येण जीवं प्रापितास्मि।

---

रक्तं वरवस्त्रं उत्कृष्टवसनम् एवं भार्या च कान्तागमेन कान्ताया आगमः प्राप्तिः तेन विवाहेनेत्यर्थः वरस्य यथा उत्कृष्ट इव हि नितरां विभाति एतेच वध्यपटहध्वनयः वध्यवधघोषणार्थं पटहस्य वाद्यविशेषस्य ध्वनयः शब्दाः तथैव विवाहपटहध्वनिभिः समानाः जाताः। वसन्ततिलकं वृत्तम्।

(४५) पूर्वेति। पूर्व्वानुबद्धवैरेण पूर्वजातशत्रुभावेन प्रभविष्णुना राजश्यालतया प्रभावशालिना नरके पतता अकारणपरद्रोहातिशया-दिति भावः तेन शकारेण मनाक् प्रायशः निपातितः अस्मि, मया त्वं हतेति कथनादेव चाहं निकृष्ट एवेत्यर्थः।

भिक्खु। ण पच्चभिआणादि मं अज्जो? अहं शे अज्जश्श चलण-शंवाहण-चिन्तए शंवाहके णाम, जूदिअलेहिं गहिदे एदाए उवाशिकाए अज्जअश्श केलकेत्ति अलङ्कालपण-णिक्कीदेम्हि, तेण अ जूदणिव्वेदेण शक्कशमणके शंवुत्ते म्हि। एशावि अज्जा पवहण-विपज्जाशेण (त) पुप्फकलण्डक जिण्णुज्जाणं गदा तेण अ अणज्जेण ण मं बहु मण्णेशि त्ति बाहुपाश-बलक्कालेण मालिदा। मए दिट्टा (ढ)।

नेपथ्ये। कलकलः।

जयति वृषभकेतुर्दक्षयज्ञस्य हन्ता,<br>
तदनु जयति भेत्ता षण्मुखः क्रौञ्चशत्रुः।<br>
तदनु जयति कृत्स्नां शुभ्रकैलासकेतुं<br>
विनिहतवरवैरी चार्य्यको गां विशालाम् ॥४६॥

(ढ) न प्रत्यभिजानाति मामार्य्यः? अहं स आर्य्यस्य चरण-संवाहचिन्तकः संवाहको नाम द्यूतकरैर्गृहीतः एतया उपासिकया आर्य्यस्यात्मीय इति अलङ्कार-पण-निष्क्रीतोऽस्मि तेन च द्यूतनिर्वेदेन शाक्यश्रमणकः संवृत्तोऽस्मि। एषापि आर्य्या प्रवहण-विपर्य्यासेन पुष्प-करण्डकजीर्णोद्यानं गता, तेन चानार्य्येण न मां बहु मन्यसे इति बाहुपाशबलात्कारेण मारिता, मया दृष्टा।

---

(त) चरणसंवाहचिन्तकः कथं चरणसंवाहनेन प्रभोः सन्तोषं विधास्यामीति चिन्तापर इत्यर्थः उपासिकया बौद्धोपासकस्त्रिया, शाक्यश्रमणकः बौद्धसन्न्यासी प्रवहणविपर्य्यासेन शकटव्यत्ययेन।

(४७) जयतीति। दक्षयज्ञस्य हन्ता वृषभकेतुः शिवः सर्व्वो-त्कर्षेण वर्त्तते, तदनु तत्पश्चात् भेत्ता दैत्यानीकानां षण्मुखः स्कन्दः

प्रविश्य सहसा शर्विलकः ।

शर्वि । हत्वा तं कुनृपमहं हि पालकं भोः
स्तद्राज्ये द्रुतमभिषिच्य चार्य्यकं तम् ।
तस्याज्ञां शिरसि निधाय शेषभूतां
मोक्ष्येऽहं व्यसनगतञ्च चारुदत्तम् ॥ ४७ ॥
हत्वा रिपुं तं बलमन्त्रिहीनं,
पौरान् समाश्वास्य पुनः प्रकर्षात् ।
प्राप्तं समग्रं वसुधाधिराज्यं
राज्यं बलारेरिव शत्रुराज्यम् ॥४८॥

कारी क्रौञ्चस्य दैत्यविशेषस्य वा पर्वतभेदस्य शत्रुः विनाशकः वा विदारकः षण्मुखः कार्त्तिकेयः जयति, तदुक्तं

"क्रौञ्चे क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे ।
स्कन्देन युध्वा सुचिरं चित्रमायी सुमायिना ॥
स मैनाकस्य दैत्यस्य ख्यातविक्रमेण कर्मणा ।
कैलासगमनस्य नाम्ना क्रौञ्चः स उच्यते" इति ॥

तद्वत् तत्पश्चात् विनिहतः विनाशितः वरः श्रेष्ठः वैरी शत्रुः पालकः येन स आर्य्यकः शुभ्रः यः कैलासः तदाख्यपर्वतः स एव केतुः चीनाचिह्नं यस्याः तां कैलासपर्य्यन्तामित्यर्थः विशालां विस्तीर्णां गां पृथ्वीं जयति नरपतित्वात् पृथिव्यां सर्वोत्कर्षेण वर्त्तते इत्यर्थः । मालिनीवृत्तम् ।

(४७) हत्वेति । तस्य आर्य्यकस्य शेषभूतां प्रसादरूप निर्माल्य स्वरूपां प्रसादादिजनिर्माल्यदाने शेषेति कीर्त्तितेति विश्वः, आज्ञां शिरसि निधाय व्यसनगतं विपन्नं चारुदत्तं मोक्ष्ये विपदः रक्षिष्यामीत्यर्थः, पूर्वार्द्धं प्रतिविम्बम् । प्रहर्षिणीवृत्तम् ।

(४८) हत्वेति । बलानि सैन्यानि च मन्त्रिणश्च तैः हीनः तं

अयतो निरूप्य। भवतु, अत्र तेन भवितव्यं, यत्रायं जनपदसमवायः। अपि नामायमारम्भः क्षितिपतेरार्य्यकस्यार्य्यचारुदत्तस्य जीवितेन सफलः स्यात्? त्वरिततरमुपसृत्य। अपयात जाल्माः!। दृष्ट्वा। सहर्षम्। अपि ध्रियते (थ) चारुदत्तः सह वसन्तसेनया, सम्पूर्णाः खल्वस्मत् स्वामिनो मनोरथाः।

दिष्ट्या भो! व्यसन-महार्णवादपारा-
दुत्तीर्णं गुणधृतया सुशीलवत्या।
नाविव प्रियतमया चिरान्निरीक्षे
ज्योत्स्नाढ्यं शशिनमिवोपराग-मुक्तम्॥ ४८॥

---

रिपुं पालकं हत्वा प्रकर्षात् प्रभावात् पुनः पौरान् पुरवासिनः राजविप्लवेन व्याकुलानिति भावः समाश्वास्य आश्वासदानेन सान्त्वयित्वेत्यर्थः बलारेः बलनामकदैत्यरिपोः इन्द्रस्य राज्यमिव समग्रं वसुधाधिराज्यं वसुधायाम् समग्रायां अधिराज्यम् आधिपत्यं यस्मिन् तत् तथाभूतं शत्रोः पालकस्य राज्यं प्राप्तं आर्य्यकेणेति शेषः। इन्द्रवज्रावृत्तम्।

(थ) तेन आर्य्यचारुदत्तेन जनपदसमुदायः जनपदानां देशानां नगरवासिनामित्यर्थः समवायः सङ्घातः आरम्भः उद्योगः नूतनराजपदे प्रतिष्ठानमित्यर्थः। अपयात अपसरत जाल्माः मूर्खाः इतरजनाः इत्यर्थः अपि ध्रियते जीवति किं?

(४८) दिष्ट्येति। भो नागरजना इति शेषः नावेव तरण्येव गुणधृतया गुणवत्या अन्यत्र गुणः रज्जुः तेन धृतया आकृष्टयेत्यर्थः सुशीलवत्या प्रियतमया वसन्तसेनया अपारात् अशक्यपारगमनात् अप्रतीकारादित्यर्थः व्यसनं विपदेव महार्णवः तस्मात् उत्तीर्णम् अतएव उपरागात् राहुग्रासात् मुक्तं ज्योत्स्नया चन्द्रिकया आढ्यं युक्तं शशि-

तत् कृतमहापातकः कथमिवैनमुपसर्पामि। अथवा। सर्वथाऽऽर्जवं (द) शोभते। प्रकाशमुपसृत्य बद्धाञ्जलिः। आर्य्य-चारुदत्त!।

चारु। ननु! को भवान्?

शर्वि। येन ते भवनं भित्त्वा न्यासापहरणं कृतम्।
सोऽहं कृतमहापापस्त्वामेव शरणं गतः॥ ५०॥

चारु। सखे मैवम्। त्वयासौ प्रणयः (ध) कृतः। इति कण्ठे गृह्णाति।

शर्वि। अन्यच्च,

आर्य्यकेणार्य्यवृत्तेन कुलं मानञ्च रक्षता।
पशुवद्यज्ञवाटस्थो दुरात्मा पालको हतः॥ ५१॥

नमिव आर्य्यचारुदत्तमिति शेषः चिरात् बहुकालात् परमित्यर्थः निरीक्षे द्रक्ष्यामीत्यर्थः। पञ्चपिंचाशत्तम्।

(द) कृतमहापातकः कृतं महापातकं येन सः ब्राह्मणस्वामिक-सुवर्णापहरणे महापातकमुक्तं यथा "ब्रह्महत्या सुरापानं स्तेयं गुर्व-ङ्गनागमः। महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चमः"। अस्य चारु-दत्तगृहे सन्धिखननपूर्वकं स्वर्णालङ्कारहरणं पूर्वमुक्तम्। आर्जवम् औदार्य्यं चारुदत्तः उदारस्वभावतया अवश्यमेव मां क्षमिष्यते इति भावः।

(५०) येनेति। न्यासस्य वसन्तसेनया गच्छितस्य सुवर्णभाण्डस्य अपहरणम् अन्यत् स्पष्टम्।

(ध) प्रणयः प्रीत्यर्थं परिहास इत्यर्थः।

(५१) आर्य्यकेणेति। आर्य्यं साधु वृत्तं चरित्रं यस्य तेन, यज्ञवाटस्थः यज्ञशालास्थितः।

चारु । किम् ?

शर्वि । त्वद्यानं यः समारुह्य गतस्त्वां शरणं पुरा ।
पशुवद्वितते यज्ञे हतस्तेनाद्य पालकः ॥ ५२ ॥

चारु । शर्विलक ! योऽसौ पालकेन घोषादानीय निष्कारणं कूटागारे बद्ध आर्य्यकनामा त्वया मोचितः ?

शर्वि । यथाह तत्रभवान् ।

चारु । प्रियं नः प्रियम् ।

शर्वि । प्रतिष्ठितमात्रेण तव सुहृदा आर्य्यकेण उज्जयिन्यां वेणातटे कुशावत्यां राज्यमतिसृष्टम् । तत्प्रतिमान्यतां प्रथमः सुहृत्प्रणयः (न) । परिवृत्य । अरे रे ! आनीयतामयं पापो राष्ट्रियशठः ।

नेपथ्ये । यथाज्ञापयति शर्विलकः ।

शर्वि । आर्य्य ! नन्वयमार्य्यको राजा विज्ञापयति, इदं मया युष्मद्गुणोपार्जितं राज्यं, तदुपयुज्यताम् (प) ।

चारु । अस्मद्गुणोपार्जितं राज्यम् ? ।

(५२) त्वद्यानमिति । पुरा यः त्वद्यानं तव प्रवहणं समारुह्य त्वां शरणं गतः, तेन आर्य्यकेण अद्य वितते विस्तृते यज्ञे पालकः पशुवत् हत इत्यन्वयः ।

(न) प्रतिष्ठितमात्रेण राज्ये अभिषिक्तमात्रेण अतिसृष्टं दत्तं तुभ्यमिति शेषः, प्रतिमान्यतां स्वीक्रियतां सुहृत्प्रणयः सुहृदः आर्य्यकस्य प्रणयः प्रार्थनम् ।

(प) युष्माकं चारुदत्तप्रभृतीनां गुणैः साहाय्यदानादिभिः उपार्जितं लब्धम् उपयुज्यतां भुज्यताम् ।

नेपथ्ये । अरे रे राष्ट्रियश्यालक ! एह्येहि, स्वस्याविनयस्य फलमनुभव ।

ततः प्रविशति पुरुषैरधिष्ठितः पश्चाद्बाहुबद्धः शकारः ।

शकारः । ह्हीमाद्दिके !

एव्वं दूलमदिक्कन्ते उद्दामे विअ गद्दहे ।
आणीदे क्खु हगे बद्धे क्कुडे अस्से व्व दुक्कले (१०) ॥५३॥

दिशोऽवलोक्य ।

शमन्तदो उवट्ठिदे एशे लट्टिअबन्धे । ता कं दाणिं अशलणे शलणं (फ) पवज्जामि । विचिन्त्य । भोदु, तं ज्जेव अब्भुववन्नश-शलणलक्खणं गच्छामि । इत्युपसृत्य । अज्ज चालुदत्त ! पलित्ताआहि पलित्ताआहि (११) । इति पादयोः पतति ।

(१०) एवं दूरमतिक्रान्त उद्दाम इव गर्दभः ।
आनीतः खल्वहं बद्धः कुक्कुरोऽन्य इव दुष्करः ॥

(११) समन्तत उपस्थित एष राष्ट्रियबन्धः । तत्किमिदानीमशरणः शरणं प्रव्रजामि । भवतु, तमेवाभ्युपपन्न-शरण-रक्षणं गच्छामि । आर्य्य चारुदत्त ! परित्रायस्व परित्रायस्व ।

---

(५३) एवमिति । दूरमतिक्रान्तः भयादतिदूरं गतः उद्दामः उच्छृङ्खलः उन्मुक्तबन्धन इत्यर्थः, दुष्करः दुष्कर्मकारी वा अवाध्यः ।

(फ) समन्ततः चतुर्दिगभ्य इत्यर्थः राष्ट्रियबन्धः राष्ट्रियस्य मम बन्धः बन्धनं विपदित्यर्थः । अशरणः निराश्रय इत्यर्थः अभ्युपपन्नानां विपन्नानां शरणं रक्षणं वत्सलं प्रियं यस्य तादृशः तम् ।

नेपथ्ये । अज्ज-चालुदत्त ! मुञ्च मुञ्च, वावादेम्ह एदं (१२)

शकारः । चारुदत्तं प्रति । भो अशलण-शलणे ! पलित्ताअहि (१३) ।

चारु । सानुकम्पम् । अहह ! अभयमभयं शरणागतस्य ।

शर्वि । सावेगम् । आः ! अपनीयतामयं चारुदत्त-पार्श्वात् । चारुदत्तं प्रति । ननु ! उच्यतां किमस्य पापस्यानुष्ठीयतामिति ?

आकर्षन्तु सुबध्वैनं ? श्वभिः संखाद्यतामथ ? ।
शूले वा तिष्ठतामेष ? पाट्यतां क्रकचेन वा ? ॥५४॥

चारु । किमहं यद्ब्रवीमि तत्क्रियते ?

शर्वि । कोऽत्र सन्देहः ।

शकारः । भट्टालआ चालुदत्त ! शलणागदे म्हि, ता पलित्ताआहि पलित्ताआहि, जं तुए शलिशं तं कलेहि, पुणो ण ईदिशं कलिश्शं (१४) ।

(१२) आर्य्य चारुदत्त ! मुञ्च मुञ्च, व्यापादयाम एतम् ।

(१३) भो अशरण-शरण ! परित्रायस्व ।

(१४) भट्टारक ! चारुदत्त ! शरणागतोऽस्मि, तत्परित्रायस्व परित्रायस्व, यत्तव सदृशं तत् कुरु, पुनर्न ईदृशं करिष्यामि ।

---

(५४) आकर्षन्तु इति । एनं शकारं सुबध्य दृढ़ं बद्धा इत्यर्थः आकर्षन्तु, अथ अनन्तरं अयं श्वभिः कुक्कुरैः संखाद्यतां भोज्यतां वा एषः शूले तिष्ठताम् ? वा क्रकचेन करपत्त्रेण पाट्यतां छिद्यताम् ।

नेपथ्ये पौराः। बाबादेध, किं णिमित्तं पादकी जीवा-वीअदि ? (१५)।

वधं। बध्यमानां चारुदत्तस्य कण्ठादपनीय शकारस्योपरि क्षिपति।

शकारः। गब्भदासीधीए ! पसीद पसीद, ण उणो मालइश्शं, ता पलित्ताआहि (१६)।

शर्वि। अरे रे ! अपनयत, आर्य्य चारुदत्त ! आज्ञाप्यतां, किमस्य पापस्यानुष्ठीयताम् ?।

चारु। किमहं यद्ब्रवीमि तत्क्रियते ?।

शर्वि। कोऽत्र सन्देहः।

चारु। सत्यम् ?।

शर्वि। सत्यम्।

चारु। यद्येवं शीघ्रमयम्।

शर्वि। किं हन्यताम् ?।

चारु। नहि नहि, मुच्यताम्।

शर्वि। किमर्थम् ?

चारु। अत: कृतापराध: शरणमुपेत्य पादयो: पतित: शस्त्रेण न हन्तव्य:।

शर्वि। एवं तर्हि श्वभि: खाद्यताम् ?।

(१५) आपादयत, किं निमित्तं पातको जीव्यते ?

(१६) गर्भदासीपुत्रि ! प्रसीद प्रसीद, न पुनर्मारयिष्यामि, परित्रायस्व।

चारु। नहि उपकारहतस्तु (व) कर्त्तव्यः।

शर्व्वि। अहो आश्चर्य्यम्! किं करोमि वदत्वार्य्यः।

चारु। तन्मुच्यताम्।

शर्व्वि। इति मुक्तः।

शकारः। हीमादिके! पच्चुज्जीविदेम्हि (१७)। इति पुरुषैः सह निष्क्रान्तः।

नेपथ्ये। कलकलः। पुनर्नेपथ्ये। एसा अज्जचारुदत्तस्स वहुआ अज्जा धूदा पदे (भ) वसनञ्चले विलग्गन्तं दारअं आक्खिवन्ती बाह-भरिद-णअणेहिं जणेहिं णिवारिज्जमाणा पज्जलिदे पावए पविसदि (१८)।

शर्व्वि। आकर्ण्य नेपथ्याभिमुखमवलोक्य। कथं चन्दनकः? चन्दनक! किमेतत्?

चन्दनकः प्रविश्य। किं ण पेक्खदि अज्जो? महाराअ-प्पासादं दक्खिणेण (म) महन्तो जणसंमद्दो वट्टदि। एषेत्यादि

(१७) आश्चर्ये! प्रत्युज्जीवितोऽस्मि।

(१८) एषा आर्य्यचारुदत्तस्य वधूरार्य्या धूता पदे वसनाञ्चले विलग्नं दारकमाक्षिपन्ती वाष्पभरितनयनैर्जनैर्निवार्य्यमाणा प्रज्वलिते पावके प्रविशति।

(व) उपकारहतः उपकारेण हतः अपकारिणि उपकारे कृते स हत-मिवात्मानं मन्यते इति भावः।

(भ) पदे प्रतिपदे इत्यर्थः।

(म) महाराजप्रासादमिति दक्षिणेन शब्दयोगे द्वितीया महा-राजप्रासादस्य दक्षिणे इत्यर्थः।

पुनः पठति । कधिदं च मए तीए जधा, अज्जे ! मा साहसं करेहि, जीवदि अज्ज-चारुदत्तो त्ति, परन्तु, दुक्खवावुड़दाए को सुणेदि को पत्तिआएदि (१८) ।

चारु । सोद्वेगम् । हा प्रिये ! जीवत्यपि मयि किमेतद्व्यवसितम् ? । ऊर्द्धमवलोक्य दीर्घं निश्वस्य च ।

न महीतलस्थितिसहानि भवच्चरितानि चारुचरिते ! यदपि ।
उचितं तथापि परलोकसुखं न पतिव्रते ! तव विहाय पतिम् ५५

इति मोहमुपागतः ।

शर्व्वि । अहो ! प्रमादः ।

(१८) किं न पश्यति आर्य्यः । महाराजप्रासादं दक्षिणेन महान् जनसम्मर्दो वर्त्तते । कथितञ्च मया तस्यै, यथा, आर्य्ये ! मा साहसं कुरुष्व, जीवति आर्यचारुदत्त इति, परन्तु दुःखव्यापृततया कः शृणोति कः प्रत्ययते ।

(५५) नेति । हे चारुचरिते विशुद्धचरित्रे ! धूते ! यदपि यदपि भवच्चरितानि भवत्या तव चरितानि पातिव्रत्यलक्षणानीत्यर्थः महीतलस्थितिसहानि पृथिवीतलावस्थानयोग्यानि न स्वर्गस्थित्यनुरूपाणीत्यर्थः तथापि हे पतिव्रते ! पतिशुश्रूषणमेव व्रतं यस्यास्तत्सम्बोधने । पतिं मां विहाय तव परलोके अमुत्र सुखं स्वर्गभोगसुखमित्यर्थः न उचितं न युक्तं तथात्वे पातिव्रत्यभङ्गादिति भावः, पतिव्रतालक्षणमाह हारीतः । "आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥" इति प्रमिताक्षराछन्दः प्रमिताक्षरा स जसैः कथितेति तल्लक्षणात् ।

त्वरया सर्पणं तत्र मोहमार्य्योऽत्र चागतः।
हा धिक् प्रयत्नवैफल्यं दृश्यते सर्वतोमुखम्॥ ५६॥

वसं। समस्ससिदु अज्जो, तत्त गदुअ जीवावेदु अज्जां, अस्सधा अधीरत्तणेण अणत्थो सम्भावीअदि (२०)।

चारु। समाश्वस्य सहसोत्थाय। हा प्रिये! क्वासि? देहि मे प्रतिवचनम्।

चन्द। इदो इदो अज्जो (२१)।

इति सर्व्वे परिक्रामन्ति।

ततः प्रविशति यथानिर्दिष्टा धूता चेलाञ्चलमाकर्षन् विदूषकेणानुगम्यमानो रोहसेनो रदनिका च।

धूता। साश्रम्। जाद! मुञ्चेहि मं, मा विग्घं करेहि, भीआमि अज्जउत्तस्स अमङ्गलाकसणादो (२२)।

(२०) समाश्वसितु आर्य्यः, तत्र गत्वा जीवयतु आर्य्याम्, अन्यथा अधीरत्वेनानर्थः सम्भाव्यते।

(२१) इत इत आर्य्यः।

(२२) जात! मुञ्च माम्, मा विघ्नं कुरुष्व, बिभेमि आर्य्यपुत्रस्यामङ्गलाकर्णनात्।

---

(५६) त्वरयेति। तत्र धूताया वह्निप्रवेशस्थाने त्वरया सर्पणं गमनम् अस्माकमुचितमिति पदद्वयमध्याहार्यम्। अत्र प्रदेशे च आर्य्यः चारुदत्तः मोहं मूर्च्छां प्रेयस्या वह्निप्रवेशवार्त्ताश्रवणादिति भावः आगतः प्राप्तः। हा धिक् अस्मानिति आक्षेपोक्तिः प्रयत्नस्य पालकवधाद्यार्य्यकराज्यावाप्तिपर्य्यन्तस्य उद्योगस्य वैफल्यं निष्फलता सर्वतोमुखं सर्वप्रकारेण उपनतं दृश्यते।

इत्युत्थायाञ्चलमादाय पावकाभिमुखं परिक्रामति।

रोह। माद अज्जए! पडिवालेहि मं, तुए विणा ण सक्कुणोमि जीविदं धारेदुं (२३)। इति त्वरितमुपसृत्य पुनरञ्चलं गृह्णाति।

विदू। भोदीए दाव बम्हणीए भिसत्तणेण (य) चिदाधिरोहणं पावं उदाहरन्ति रिसीओ (२४)।

धूता। वरं पावाचरणे, ण उण अज्जउत्तस्स अमङ्गलाकण्णणं (२५)।

शर्वि। पुरोऽवलोक्य। आसन्नहुतवहार्या, तत्त्वर्य्यतां त्वर्य्यताम्।

चारु। त्वरितं परिक्रामति।

धूता। रअणिए! अवलम्ब दारअं, जाव अहं समीहिदं करेमि (२६)।

(२३) मातरार्ये! प्रतिपालय मां, त्वया विना न शक्नोमि जीवितं धर्त्तुम्।

(२४) भवत्यास्तावत् ब्राह्मण्या भिन्नत्वेन चिताधिरोहणं पापमुदाहरन्ति ऋषयः।

(२५) वरं पापाचरणम्, न पुनरार्यपुत्रस्यामङ्गलाकर्णनम्।

(२६) रदनिके! अवलम्बस्व दारकं, यावदहं समीहितं करोमि।

(य) भिन्नत्वेन पृथक्त्वेन। तदुक्तमुशनसा यथा "पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति। अन्यासामेव नारीणां स्त्रीधर्मोऽयं परः स्मृत" इति।

चेटी । सकरुणम् । अहं पि जधोवदेसिणिम्हि भट्टिणीए (२७

धूता । विदूषकमुद्दिश्य । अज्जो दाव अवलम्बेदु (२८) ।

विदू । सावेगम् । समीहिद-सिद्धिए पउत्तेण बम्हणो (र) अग्गदो कादव्वो, अदो भोदीए अहं अग्गणी होमि (२९) ।

धूता । कधं पच्चादिट्ठम्हि (ल) दुवेहिं । बालकमालिङ्ग्य जाद ! तुमं ज्जेव पज्जवट्ठावेहि अत्ताणं, अम्हाणं तिलो- दअ-दाणाअ अदिक्कन्ते किं मणोरहेहिं । सनिःश्वासम् । ण हु अज्जउत्तो तुमं पज्जवट्ठाविस्सदि ? (३०) ।

चारु । आकर्ण्य सहसोपसृत्य । अहमेव पर्य्यवस्थापयामि बालिशम् (व) । इति बालकं बाहुभ्यामुत्थाप्य वक्षसालिङ्गति ।

(२७) अहमपि यथोपदेशिन्यस्मि भर्त्त्र्याः ।

(२८) आर्यस्तावदवलम्बताम् ।

(२९) समीहितसिद्ध्यै प्रवृत्तेन ब्राह्मणोऽग्रे कर्त्तव्यः, अतो भवत्या अहम् अग्रणीर्भवामि ।

(३०) कथं प्रत्यादिष्टास्मि द्वाभ्याम्, जात ! त्वमेव पर्य्यवस्थापयात्मा- नम्, अस्माकं तिलोदकदानाय अतिक्रान्तं किं मनोरथैः । न खलु आर्य्यपुत्रस्त्वां पर्य्यवस्थापयिष्यति ?

---

(र) समीहितसिद्ध्यै अभीष्टकार्यसिद्ध्यर्थमित्यर्थः, अहमग्रणीर्भवामि पतिलोकगमनोद्यताया भवत्या ज्वलनप्रवेशस्य वैधत्वात् वैधकर्मणि अग्रे ब्राह्मणस्यैव नियोज्यत्वादहं ब्राह्मणएव अग्रे बन्धुवियोगदुःखमसहमानो वह्नौ प्रविशामीति भावः ।

(ल) प्रत्यादिष्टा निराकृता प्रत्यादेशो निराकृतिरित्यमरः ।

(व) बालिशं बालकम् ।

धूता। विलोक्य। अम्महे! अज्जउत्तस्स ज्जेव सरस-ज्जोओ! । पुनर्निपुणं निरूप्य सहर्षम्। दिट्ठिआ अज्जउत्तो ज्जेव एसो, पिअं मे पिअं (३१)।

बालकः। विलोक्य सहर्षम्। अम्मो! आवुत्तो मं परिस्सजदि। धूतां प्रति। अज्जए बड्ढवीअसि। आवुत्तो ज्जेव मं पज्जवट्ठावेदि (३२)। इति प्रत्यालिङ्गति।

चारु। धूतां प्रति।

हा प्रेयसि! प्रेयसि विद्यमाने कोऽयं कठोरो व्यवसाय आसीत्
अम्भोजिनी लोचनमुद्रणं किं भानावनस्तं गमिते करोति ॥५७॥

धूता। अज्जउत्त! अदो ज्जेव सा अचेतणेत्ति चुम्बोअदि (३३) (अ)।

(३१) आश्चर्यम्, आर्यपुत्रस्यैव स्वरसंयोगः। दिष्ट्या आर्यपुत्र एवैषः, प्रियं मे प्रियम्।

(३२) आश्चर्य! पिता मां परिष्वजति! आर्ये! वर्द्धसे तात एव मां पर्य्यवस्थापयति।

(३३) आर्य्यपुत्र! अतएव सा अचेतनेति चुम्ब्यते।

(५७) हेति। हा प्रेयसि! प्रियतमे! प्रेयसि प्रियतमे पत्यौ इत्यर्थः विद्यमाने वर्त्तमाने कठोरः कर्कशः व्यवसायः अग्निप्रवेशोद्योगरूपः तवेति शेषः आसीत्? भानौ सूर्य्ये अनस्तं गमिते अम्भोजिनी पद्मिनी लोचनमुद्रणं नेत्रनिमीलनं वा पद्मनिमीलनं करोति? नैव करोतीत्यर्थः। इन्द्रवज्रावृत्तम्।

(अ) चुम्ब्यते अचेतना इति वाचा उच्यते इत्यर्थः, अहन्तु सचेतना सुतरां पतिविनाशात् पूर्वमेव मम मरणमुचितमिति भावः।

विदू। दृष्ट्वा सहर्षम्। ही ही भो! एदेहिं ज्जेव अच्छीहिं पिअवअस्सो पेक्खीअदि, अहो सदीए पहावो! जदो जलणप्पवेस व्ववसाएण ज्जेव पिअसमागमं पाविदा। चारुदत्तं प्रति। जेदु जेदु पियवअस्सो (३४)।

चारु। एहि मैत्रेय! इत्यालिङ्गति।

चेटी। अहो! संविधाणअं, (ष) अज्ज! बन्दामि (३५)।

इति चारुदत्तस्य पादयोः पतति।

चारु। पृष्ठे करं दत्त्वा। रदनिके! उत्तिष्ठ। इत्युत्थापयति।

धूता। वसन्तसेनां दृष्ट्वा। दिट्ठिआ कुसलिणी बहिणिआ? (३६)।

वसं। अहुणा कुसलिणी संवुत्तम्हि (३७)।

इत्यन्योन्यमालिङ्गतः।

शर्वि। दिष्ट्या जीवित-सुहृद्वर्ग आर्य्यः।

चारु। युष्मत्प्रसादेन।

---

(३४) आश्चर्य्यम्! एताभ्यामेवाक्षिभ्यां प्रियवयस्यः प्रेक्ष्यते, अहो! सत्याः प्रभावः, यतो ज्वलनप्रवेशव्यवसायेनैव प्रियसमागमं प्रापिता। जयतु जयतु प्रियवयस्यः।

(३५) अहो संविधानकम्, आर्य्य! वन्दे।

(३६) दिष्ट्या कुशलिनी भगिनी?

(३७) अधुना कुशलिनी संवृत्तास्मि।

---

(ष) संविधानं अघटनं दैवसम्मेलनमित्यर्थः।

शर्वि । आर्य्ये वसन्तसेने ! परितुष्टो राजा भवतीं वधूशब्देनानुगृह्णाति (स) ।

वसं । अज्ज ! कदत्थम्हि (१८) ।

शर्वि । वसन्तसेनामवगुण्ठ्य (ह) चारुदत्तं प्रति । आर्य्य ! किमस्य भिक्षोः क्रियताम् ? ।

चारु । भिक्षो ! किं तव बहुमतम् ? ।

भिक्षुः । इमं ईदिशं अणिच्चत्तणं (च) पेक्खिअ दिउणे मे पव्वजाए बहुमाणे संवुत्ते (२९) ।

चारु । सखे ! दृढोऽस्य निश्चयः । तत्पृथिव्यां सर्वविहारेषु (क) कुलपतिरयं क्रियताम् ।

शर्वि । यथाह आर्य्यः ।

भिक्षुः । प्रियं नः प्रियम् ।

वसं । सम्पदं जीवाविदम्हि ।

---

(१८) आर्य्य ! कृतार्थास्मि ।

(२९) ईदृशमीदृशमनित्यत्वं प्रेक्ष्य द्विगुणो मम प्रव्रज्यायां बहुमानः संवृत्तः ।

(स) वधूशब्देन वधूः विवाहितपत्नी तच्छब्देन चारुदत्तस्य विवाहिता धृता यथा वधूस्तथा भवती अपि वधूः न वेश्यात्वेन गणनीयेति भावः ।

(ह) अवगुण्ठ्य शिरोवसनेन आच्छाद्य वधूत्वादिति भावः ।

(च) अनित्यत्वं अस्थायित्वं असारत्वमित्यर्थः ।

(क) सर्वविहारेषु सर्वेषु बौद्धाश्रमेषु ।

राक्षसः। स्थीयरक्षस्य किं क्रियताम् ?।

चाण०। सुवृत्त ! (ख) महामात्यो भवतु। इति चाण्डालाः सर्वचाण्डालानामधिपतयो भवन्तु। चन्दनकः पृथिवीदण्डपालको भवतु। तस्य राष्ट्रियश्यालस्य यथैव क्रिया पूर्वं वर्त्तमाने तथैवास्तु।

राक्ष०। एवं यथाह आर्य्यः। परमिमं मुञ्च मुञ्च, व्यापादयामि।

चाण०। अभयं शरणागतस्य। शत्रुः कृतापराधः। इत्यादि पठति।

राक्ष०। तदुच्यतां किं ते भूयः प्रियं करोमि।

चाण०। अतः परमपि प्रियमस्ति ?।

लब्धा चारित्रशुद्धिश्चरणनिपतितः शत्रुरप्येष मुक्तः,
प्रोत्खातारातिमूलः प्रियसुहृदचलामार्य्यकः शास्ति राज्यम्।
प्राप्ता भूयः प्रियेयं, प्रियसुहृदि भवान् सङ्गतो मे वयस्यो
लभ्यं किं चातिरिक्तं यदपरमधुना प्रार्थयेऽहं भवन्तम्॥५८॥

---

(ख) सुवृत्त ! सच्चरित्र ! पृथिवीदण्डपालकः पृथिव्यां दण्डस्य दुष्टनिग्रहरूपस्य पालकः दुष्टशासनाधिकारिणामध्यक्षः। यथैव यादृशी पूर्वं क्रिया सुखसम्भोगादिका।

(५८) लब्धेति। चारित्रस्य चरित्रमेव चारित्रं तस्य शुद्धिः दुरपवादात् चन्दनदासेनाविधरूपात् शुद्धिः लब्धा ममेति शेषः, एषः शत्रुरपि धिकारः चरणनिपतितः अतएव मुक्तः परित्यक्तः प्रियसुहृत् आर्य्यकः प्रोत्खातम् अरीणां शत्रूणां मूलं प्रधानः येन तादृशः अतएव राज्ञो ऽचलां पृथ्वीं शास्ति भूयः पुनरपि अमात्यत्वात् परिस्थितेति यावत्

काँश्चित्तुच्छयति प्रपूरयति वा, काँश्चिन्नयत्युन्नतिं,
काँश्चित् पातविधौ करोति च पुनः काँश्चिन्नयत्याकुलान्।
अन्योऽन्यं प्रतिपक्ष-संहतिमिमां लोकस्थितिं बोधय-
न्नेष क्रीडति कूपयन्त्र-घटिकान्याय-प्रसक्तो विधिः॥ ५८॥

तथापीदमस्तु।

## भरतवाक्यम्।

क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्वसम्पन्नसस्या,
पर्जन्यः कालवर्षी सकलजनमनो-नन्दिनो वान्तु वाताः।

इयं प्रिया वसन्तसेना प्राप्ता तथा मे मम वयस्यः प्रियबन्धुर्भवान् प्रियसुहृदार्यो मे चन्दनकः मिलितः अतिरिक्तमस्य इति शेषः किं लब्धं प्राप्तव्यमस्तीति शेषः अधुना अहं भवन्तं यत् अपरम् अन्यत् एभ्यः अतिरिक्तं प्रार्थये। अन्यत्राप्युक्तं "अस्त्रैर्लोकान् लभेय क्षितिमखिलरतियुता अन्यतरा कीर्त्तितेयम्" इति वचनात्।

(५८) कांश्चिदिति। कूपयन्त्रं कूपात् जलोद्धरणार्थं यन्त्रं तस्य या घटिका क्षुद्रघटी तस्या न्यायः अनुकरणं तत्र प्रसक्तः रतः एषः विधिः अन्योन्यं परस्परं प्रतिपक्षाणां विरोधिनाम् उन्नत्यवनतिप्रभृतीनां संहतिं समष्टिरूपाम् इमां लोकस्थितिं संसारगतिं बोधयन् सन् क्रीडति, तथाहि कांश्चित् जनान् तुच्छयति तुच्छान् निर्धनत्वादिना दरिद्रान् करोति, कांश्चित् जनान् प्रपूरयति धनमानादिभिः पूर्णान् करोति, कांश्चित् उन्नतिं वृद्धिं नयति प्रापयति, कांश्चित् पातविधौ करोति अधःपातयतीत्यर्थः तथा कांश्चित् पुनः आकुलान् विविधदुर्घटनादिभिः व्याकुलान् नयति करोतीत्यर्थः सर्वं दैवायत्तमिति भावः। शार्दूलविक्रीडितं वृत्तम्।

मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः
श्रीमन्तः, पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः ॥६०॥

इति निष्क्रान्ताः सर्वे ।

संहारो नाम दशमोऽङ्कः ।

समाप्तोऽयं ग्रन्थः ।

---

(६०) क्षीरिण्य इति । गावः क्षीरिण्यः दुग्धवत्यः सन्तु, वसुमती पृथिवी सर्वसम्पन्नशस्या सर्वतोभावेन सम्पन्नानि शस्यानि यत्र सा भवतु पर्जन्यः मेघः काले यथासमये वर्षतीति तादृशः भवतु इति शेषः, वाताः सकलजनानां मनांसि नन्दयन्तीति तथोक्ताः सन्तः वान्तु वहन्तु, जन्मभाजः जन्मिनः प्राणिनः सर्वे मोदन्तां सुखेन तिष्ठन्तु, ब्राह्मणाः सततम् अभिमताः यथाविधि अनुष्ठानवन्तः तथा सन्तः साधवः श्रीमन्तः लक्ष्मीवन्तः सन्तु भवन्तु, तथा प्रशमिताः रिपवः शत्रवः यैः तादृशाः धर्मनिष्ठाः धर्मपरायणाः भूपाः नृपतयः पृथ्वीं पान्तु रक्षन्तु । "अन्ते काव्यस्य नित्यत्वात् कुर्य्यादाशिषमुत्तमाम्" इति वचनात् आशीरियमिति बोध्यम् । स्रग्धरावृत्तमिदम् ।

समाप्तोऽयं दशमाङ्कः ।

इति श्रीजीवानन्द-विद्यासागर भट्टाचार्य्य विरचिता
मृच्छकटिकप्रकरणस्य व्याख्या
समाप्ता ।

